विमलवसनभूषामिन्दुकुन्दप्रकाशां
विकसितहृदयाब्जे भारतीं भावयामि ॥ ५ ॥

भक्तानां गुरुदैवतैक्यधिषणादार्ढ्याय देवस्तनौ
व्यक्तिं याति सदा समाधिसमये येषां नृकण्ठीरवः ।
श्रीसर्वज्ञपदं सदर्थकमभूद्यत्रैव तेषामहं
मोहध्वान्तविभाकरायितरजःपादाब्जयुग्मं भजे ॥ ६ ॥

श्रीसम्बन्धमुदीक्ष्य वाचकपदे यान् शार्ङ्गिणं वैष्णवाः
चन्द्रोत्तंसपदास्पदत्वकलनाच्छंभुं च शैवा विदुः ।
आनन्दाढ्यशोभमानपरमप्रेमास्पदं योगिनः
तान्पादाम्बुजरेणुधूततमसो वन्दे सदा श्रीगुरून् ॥ ७ ॥

सहजकरुणयार्द्रैः सादरं या कटाक्षैः
प्रणतजनसमूहं ध्वस्तमोहं विधत्ते ।
त्रिभुवनविनुतश्रीरामभद्राभिधां तां
प्रकटितगुरुमूर्तिं ब्रह्मविद्यां प्रपद्ये ॥ ८ ॥

व्याहारैर्मधुरैर्मनोज्ञसहजानन्दामृतस्यन्दिभिः
शिष्येभ्यः करबिल्ववत्प्रथयतस्तत्त्वं परं श्रीगुरून् ।
रामानन्दमुनीन्मनीषिमकुटालङ्कारचिन्तामणीन्
सानन्दं प्रणमामि यत्करुणया तीर्णोऽस्मि मोहार्णवम् ॥ ९ ॥

कृतिभिरसुकराः क्व नु प्रबन्धाः क्व च बत बालिशबुद्धिरेष जन्तुः ।
तदपि विरचनेऽत्र सद्गुरूणां सदयनिरीक्षणमेव मेऽवलम्बः ॥ १० ॥

अभ्यर्थयामि करुणाऽमृतपूर्णचित्तान्
धीरान् प्रणम्य गुणदोषविवेचनाय ।
मात्सर्यपङ्ककलुषाशयदुर्विदग्धान्
मन्ये तृणाय न विदुर्यदमी स्वदोषान् ॥ ११ ॥

बहुतरपदबद्धं बालबोधोपयोगात्
सरलमिति महद्भिः साधु नोपेक्ष्यमेतत् ।
सदयहृदयभाजः साभिलाषा न किं स्युः
कविवरवचनोत्काः काकलीष्वर्भकाणाम् ॥ १२ ॥

अवतारिका—प्रारिप्सितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्तिप्रचयगम

नादिसिद्धये स्वेष्टदैवतं सांबमीश्वरं सगुण निर्गुण रूपाभ्यामनुसन्दधानः प्रकृतग्रन्थावान्तरप्रयोजनस्य प्रत्यगैकत्वज्ञानस्य—

"यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ"
"तपःप्रभावाद्देवप्रसादाच्च" "ईश्वराज्ज्ञानमन्विच्छेत् ।"
"तेषामेवाऽनुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥"

"मत्तः स्मृतिर्ज्ञानमपोहनं च" इत्यादिश्रुतिस्मृतिसन्दर्भेभ्यः परमेश्वरप्रसादायत्तत्वाऽवगमात्तत्प्राप्त्यर्थं भक्तिश्रद्धाप्रणिपातपुरस्सरं तमेवेश्वरं प्रार्थयमानो विशिष्टविषयप्रयोजनसम्बन्धाधिकारिलक्षण मनुबन्धि चतुष्टयमर्थाद्दर्शयति—गङ्गेत्यादिना ॥

मू० ॥ गङ्गापूरप्रचलितजटास्रस्तभोगीन्द्रभीता
मालिङ्गन्तीमचलतनयां सस्मितं वीक्षमाणः ॥
लीलापाङ्गैः प्रणतजनतां नन्दयं श्चन्द्रमौलि
र्मोहध्वान्तं हरतु परमानन्दमूर्तिःशिवो नः ॥ १ ॥

गङ्गायाः=जाह्नव्याः, पूरः=प्रवृद्धप्रवाहः, तेन प्र=प्रकर्षेण, चलिताभ्यः=कम्पिताभ्यः जटाभ्यः, स्रस्तात्=अधः प्रचलितात्, भोगिनां=सर्पाणां, इन्द्रात्=स्वामिनःशेषात्, भीतां=चकितां, अतएवाऽऽलिङ्गन्तीं=आश्लिष्यन्तीं, अचलस्य=हिमाद्रेः, तनयां=ब्रह्मविद्याऽधिदेवतां उमां, सस्मितं=ईषद्धास्यसहितंयथा भवति तथा, वीक्षमाणः=पश्यन्, तथा लीलापाङ्गैः=सहजकरुणाकमनीयकटाक्षैः, प्रणतजनतां=प्रणतजनसमूहं, नन्दयन्=सकलदुःखप्रशमनोपलक्षितनिरतिशयानन्दसमृद्धं कुर्वन्, चन्द्रमौलिः=ज्ञानचन्द्रावतंसः, परमानन्दमूर्तिः=मानुषानन्दादिहिरण्यगर्भानन्दान्तशतशतगुणोत्तरोत्कर्षप्रमाणविषयानन्दशीकरमहार्णवायित निरतिशयानन्दस्वरूपः, शिवः= अनन्तकल्याणगुणः स्वतश्च मङ्गलरूपत्वाच्छिव शब्दाभिधेयः परमेश्वरः, नः=अस्माकं वेदान्तार्थतत्वजिज्ञासूनां, मोहः=अज्ञानं, तदेव स्थाण्वाद्यावृतिचोरादिरूपविक्षेपहेतुध्वान्तमिव स्वस्वरूपावरण जगद्विक्षेपहेतुत्वात् ध्वान्तं=अन्धकारस्तं, प्रकृतग्रन्थसमाप्ति प्रयोजकोत्साह प्रतिद्वंद्विजाड्यांधकारं च, हरतु=स्वतत्वसाक्षात्कार वृत्त्युद्बोधेन बाधतां प्रार्थनायांलोट्।

शीलनादिभिरिति नियमं च सूचयन् "श्रेयांसि बहुविघ्नानि" इतिप्रवादा-दारब्धग्रन्थसमाप्त्यादिप्रतिबन्धकविघ्नबाहुल्यशङ्कया सर्वविघ्नोच्छेदक्षमं श्रीगुरुनमस्कारावृत्तिरूपं मङ्गलान्तरमाचरति स्मारं स्मारमित्यादि श्लोकद्वयेन—

मू० ॥ स्मारंस्मारं जनिमृतिभयं जातनिर्वेदवृत्ति
ध्यायंध्यायं पशुपतिमुमाकान्तमन्तर्निषण्णम् ।
पायंपायं सपदि परमानन्दपीयूषधारां
भूयोभूयो निजगुरुपदाम्भोजयुग्मं नमामि ॥ २ ॥

स्मारमिति॥जनिः=जन्म, मृतिः=मरणं, ताभ्यामाद्यन्तभूताभ्यामैहिकामुष्मिकदुःखजातमनादौ संसारे पुनःपुनरनुभूतं छत्रिन्यायेनोपलक्ष्यते तस्माद्भयं=त्रासं, स्मारंस्मारं=पुनःपुनरतिशयेन स्मृत्वा आभीक्ष्ण्ये णमुल्-"नित्यवीप्सयोः" इतिद्विर्वचनं। जाता=उत्पन्ना, निर्वेदवृत्तिः=अहो ! महासङ्कटात् कथंविमुच्येयेति चिन्ता यस्य स तथोक्तः। ततस्तदुत्पन्न वैराग्याद्विविदिषया सन्यस्य गुरूक्तमार्गेण ज्ञानाधिकारसिद्धये चित्तशुद्ध्यर्थं, अन्तः=हृदयपुण्डरीके, निषण्णं=उपविष्टं, उमाकान्तं=ब्रह्मविद्यात्मकपार्वतीप्रियमीश्वरं, ध्यायंध्यायं=पुनःपुनरतिशयेन ध्यात्वेत्यर्थः। अतएव कैवल्योपनिषदि "नकर्मणा नप्रजया" इत्यादिना सन्न्यासं विधाय "हृत्पुण्डरीकं विरजंविशुद्धं" इति प्रस्तुते हृदयपुण्डरीके—

उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्।
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्॥

इति तमःपरनिर्गुणब्रह्मतत्त्वाधिगमे दर्शितामासदायत्वादिविशेषणकसगुणेश्वरध्यानं हेतुरिति दर्शितम्। ततो गुरूपसदनपूर्वकश्रवणेन सपदि=तत्कालमेव, परमानन्दलक्षणां, पीयूषधारां=अमृतझरीं, पायंपायं=पुनःपुनरतिशयेन पीत्वा करतलामलकवत् साक्षादनुभूयेत्यर्थः। भूयोभूय=पुनःपुनः, निजस्य= अबाधितात्मतत्त्वस्य, गृणातीति गुरुः, व्याख्याचातुर्येण प्रत्यक्षमुपदर्शयितुः श्रीगुरोः, पदाम्भोजयुग्मं=पादारविन्दद्वयं नमामि प्रह्वीभूयाऽऽश्रयामि। अत्र आद्यवीप्सया पुनःपुनः सांसारिकमहाभयानुसन्धानजन्योत्कटविषयदोषदर्शनमेव फलपर्यवसायिनिर्वेदहेतुः, नकोमल कण्टक्षयमानं कादाचित्कमल्पमिति। द्वितीयया निरन्तराभ्यस्तमेवेश्वर ध्यानंसद्योज्ञानाय, न व्यापारान्तरान्तरितमिति, तृतीयया निरन्तर

स्वप्रकाशं निरतिशयानन्दात्मकमेव ज्ञानफलं न कर्मफलवत्कादाचित्कं सातिशयमिति, चतुर्थ्या "यावदायुस्त्रयो वन्द्या वेदान्तो गुरुरीश्वरः।" इति स्मृतेरादेहपातं 'सदैव गुर्वधीनेन भाव्यं न यावच्छ्रवणमेव' इति नियमाः सूचिताः ॥ २ ॥

इदानीं शिष्याणामनायासेन शास्त्रावगाहनसिद्धये विस्तरेण निरूपयिष्यमाणमपि सर्ववेदान्ततात्पर्यार्थं संग्रहेण दिदर्शयिषुः तत्त्वंपदार्थौ तटस्थस्वरूपलक्षणाभ्यामुपक्षिप्य वाक्यार्थं प्रत्यग्ब्रह्मैक्यलक्षणं च प्रदर्श्य स एवाऽज्ञातः शास्त्रस्य विषयः सद्गुरुकृपया ज्ञातश्च प्रयोजनमिति सूचयंस्तमेव गुरुं प्रणमति, यस्मादिति—

**मू० ॥ यस्माद्विश्वमुदेति यत्र निवसत्यन्ते यदप्येति य**
**त्सत्यज्ञानसुखस्वरूपमवधिद्वैतप्रणाशोज्झितम् ।**
**यज्जाग्रत्स्वपनप्रसुप्तिषु विभात्येकं विशोकं परं**
**प्रत्यग्ब्रह्म तदस्मि यस्य कृपया तं देशिकेन्द्रं भजे ॥**

यस्मात्=निरस्तद्वैतजातान्मायाशबलात् सच्छब्दवाच्याद्ब्रह्मणः विश्वं कृत्स्नंस्थूलसूक्ष्ममूर्तामूर्तरूपं हिरण्यगर्भादि चतुर्विध भूतग्रामान्तं जगत्सर्गकाले रज्जौ सर्पइव, मरुमयूखेषु सलिलमिव, व्योम्नि गन्धर्व नगरमिव, अत्यन्तमसम्भाव्यमुदेति=आविर्भवति, स्थितिकाले च यत्र=यस्मिन्नेवाधिष्ठानभूते निवसति=तिष्ठति, अन्ते=प्रलयकाले च यत्=ब्रह्म, अप्येति=तिरोभावेन यद्भावमेवाप्नोतीत्यर्थः। अनेनाऽभिन्ननिमित्तोपादानभावेन जगज्जन्मादिकारणत्वं ब्रह्मणस्तटस्थलक्षणं, तद्विशिष्टश्च तत्पदस्य वाच्यार्थो दर्शितः। तस्य स्वरूपलक्षणमाह—यत्सत्यज्ञानसुखस्वरूपमिति। सत्यं=बाध्यविलक्षणम्, ज्ञानं=जडविलक्षणम्, सुखं=दुःखविलक्षणं च स्वरूपं यस्य तत्तथोक्तम्।अवधिः=देशकृतपरिच्छेदः,द्वैतं=वस्तुकृतपरिच्छेदः,प्रणाशः=कालकृतपरिच्छेदः, तैरुज्झितं=वर्जितम्, तथाच त्रिविधपरिच्छेदशून्यसच्चिदानन्दस्वरूपत्वं ब्रह्मणः स्वरूपलक्षणं, स एव तत्पदस्य लक्ष्यार्थ इति दर्शितम्। त्वंपदार्थं लक्षयति—यदिति॥ इन्द्रियजन्यज्ञानोपलक्षितावस्था जाग्रत्, तत्संस्कारसंस्कृतमनःपरिणामविषयज्ञानोपलक्षितावस्था स्वपनं स्वप्नः, विलीनान्तःकरणनिद्रावस्था प्रसुप्तिः सुषुप्तिः, तासु यत् विभाति=अवस्थात्रयविशिष्टतया प्रतीयत इत्यर्थः। तथाचाऽवस्थात्रयवैशिष्ट्यं प्रत्यगात्मनस्तटस्थलक्षणं, तद्वांश्च त्वंपदवाच्यार्थ इति दर्शितम्। एकं=विभि-

मात्तु व्यावृत्तात्, अतएव मिथ्याभूतात्स्वप्नवत्, तत्साक्षित्वेनाऽनुवर्तमानं अद्वितीयं, अतएव विशोकं=विगतदुःखं आनन्दरूपमित्यर्थः। परम्=अवस्थात्रयात्मिथ्याभूतात्प्रपञ्चात् सत्यस्वप्रकाशनयाऽत्कृष्टं,अनेन सच्चिदानन्दाद्वयत्वमेव प्रत्यगात्मनोऽपि स्वरूपलक्षणं, स एव त्वंपदलक्ष्यार्थ इति दर्शितम्। वाक्यार्थं दर्शयति—प्रत्यग्ब्रह्मेति। पराग्भ्यो देहेन्द्रियादिभ्यः प्रातिलोम्येनाऽञ्चति=प्रकाशत इति वा, स्वस्वरूपतिरोधायकत्वात् प्रतिकूलमेव स्वाध्यस्ताऽविद्यादिकमनक्ति=प्रकाशयतीति वा, प्रकर्षेण त्यजति=देहेन्द्रियाद्यध्यासमिति वा, प्रत्यक्=शोधितं जीवतत्त्वं, तदेव त्रिविधपरिच्छेदराहित्यलक्षणबृहत्त्वाद्ब्रह्म, स एवाऽस्य शास्त्रस्य विषयः,तत्तादृशं=ब्रह्म यद्यपि श्रीगुरोः कृपयाऽहमेव 'अस्मि' इत्यपरोक्षानुभवाभिलापेन स्वस्वरूपनिरतिशयानन्दावाप्त्यभिव्यक्तिलक्षणं प्रयोजनं सूचितम्। तं=तादृशं जनकाऽध्यापककर्मोपास्तनोपदेष्टृगुरुभ्योऽत्यन्तश्रेष्ठं देशिकेन्द्रं; भजे=सेवे। श्रीगुरुकृतस्य परमपुरुषार्थप्रापकस्यानेकोपकारस्य निष्कृतिमपश्यंस्तच्चरणारविन्दयोर्वाङ्मनःकायैः प्रह्वीभूय आत्मानं समर्प्याऽऽदेहपातं तद्दास्यमङ्गीकरोमीत्यर्थः ॥ ३ ॥

इत्थं मङ्गलं शास्त्रार्थसंग्रहं च विधायेदानीं, "सर्वे वेदा यत्पदमामनन्ति" "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति, यज्ञेन, दानेन,तपसा" इत्यादिश्रुतिसिद्धं सर्वकर्मणां ज्ञानोपयोगं "अथातो ब्रह्मजिज्ञासा" इति सूत्रस्थाऽथशब्दार्थाऽऽनन्तर्याऽपेक्षितसाधनचतुष्टयरूपाण्यधिकारिविशेषणानि च दर्शयन्धिकीर्षितं प्रतिजानीते, अधीतेति—

मू० ॥ अधीतेज्यादानव्रतजपसमाधाननियमै-
विशुद्धस्वान्तानां जगदिदमसारं विमृशताम्।
अरागद्वेषाणामभयचरितानां हितमिदं
मुमुक्षूणां तत्त्वं किमपि निगदामः सुमधुरम्॥

अधीतं=गर्भाधानाद्युपनयनान्तसंस्कारानन्तरं गुरुकुलवासादिनियमपूर्वकं काले साङ्गवेदाध्ययनं,इज्याः=काम्यवर्ज्याः श्रौतस्मार्तयज्ञाः। दानानि=वहिर्वेदि विशिष्टपात्रेष्वन्न गोभूहिरण्यादीनां प्रतिपादनानि, व्रतानि=वानप्रस्थोचितानि कृच्छ्रचान्द्रायणादीनि, आश्रमत्रयोचितसर्वव्रतानि वा जपः=वाचिको, मानसश्च मन्त्रावर्तनादिरूपः, समाधानं=उपास्य देवतायां चित्तस्थैर्यं, नियमाः=बाह्याभ्यन्तरेन्द्रियनियमनानि। एतैः विशुद्धं=निर्दोषं,

स्वान्तं=मनो येषान्ते तथोक्ताः अनेन कर्मणां चित्तशुद्धिद्वारा ज्ञानोपयोगो-दर्शितः तथाच स्मृतिः—

कषायपक्तिः कर्माणि ज्ञानं तु परमागतिः ।
कषाये कर्मभिः पक्के ततो ज्ञानं प्रवर्तते॥ इति ॥

गौतमोऽप्याह— "गर्भाधानपुंसुवनसीमन्तोन्नयनं जातकर्मनामकरणान्नप्राशनचौलोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मचारिणी संयोगः पंचानांयज्ञानामनुष्ठानमष्टकापार्वणं श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्तपाकयज्ञसंस्थाः । अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यान्याग्रयणेष्टिर्निरूढपशुबन्धः सौत्रामणीति सप्तहविर्यज्ञसंस्थाः। अग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽति रात्रोऽप्तोर्याम इति सप्त सोमयज्ञसंस्थाः। इत्येते चत्वारिंशत्संस्काराः अष्टावात्मगुणाः दया सर्वभूतेषु, क्षान्तिः, अनसूया, शौचमनायासो, मङ्गल, मकार्पण्य, मस्पृहाचेति । यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाश्च, स ब्रह्मणः सायुज्यं प्राप्नोति" इति ॥

इदं=प्रत्यक्षादिप्रमाणदृश्यं जगत्, असारं=न विद्यते सारो नित्यः सत्योवा उपादेयांशो यस्य तत्तथा,विमृशतां=श्रुतियुक्त्याऽऽप्तोपदेशानुभवैर्विचार्य निर्धारयतां । अनेन नित्यानित्यवस्तुविवेकसम्पदुक्ता । रागः=ऐहिकामुष्मिकभोगतदुपायेच्छा । द्वेषः=परानिष्टचिन्तनं । अनेनेहामुत्रार्थफलभोगविराग उक्तः । न विद्यते भयं यस्मात्कस्यचित्तदभयं, तथाविधं चरितं वाङ्मनः कायचेष्टितं येषां । विधिना कर्माणि सन्न्यस्य सर्वभूतेभ्योऽभयं दत्वा तदनुकम्पया भैक्षचर्यादिव्यापारेष्वप्यप्रमादेन प्रवर्तमानानामित्यर्थः । अनेन शमादिसम्पदुपलक्षिता । शमदमोपरतितितिक्षाश्रद्धासमाधानानि शमादयः । उक्तलक्षणसम्पन्नानां मुमुक्षूणां= "प्रदीप्तशिरा इव जलराशिं विविक्षुः" इति पञ्चपादिकोक्तलक्षणोत्कटसच्चिदानन्दाद्वयस्वात्मलाभरूपमोक्षेच्छाशालिनां पुरुषधौरेयाणां परमपुरुषार्थोपायत्वाद्धितं=पथ्यं, सुमधुरं=श्रोतॄणां शब्दतोऽर्थतश्च सुखकरं । अत एव हृद्यं= मनःप्रियं । किमपि= सद्गुरुसम्प्रदायाधिगतश्रुतितात्पर्यप्रकाशकत्वादश्रद्दधानेष्वतिगोप्यमिदं प्रकरणं । निगदामः=स्फुटोक्तिभिः प्रकाशयामः । "अस्मदोद्वयोश्च" इतिबहुवचनं । अनेन, "अथातोब्रह्मजिज्ञासा" इति शास्त्राद्यसूत्रस्थाऽथशब्दार्थानन्तर्येण योग्यत्वात्साधनचतुष्टयसम्पत्तिरेवावधित्वेनापेक्ष्यते,न वेदाध्ययनमात्रं धर्मजिज्ञासायामिवेति सूचनेन धर्मब्रह्मजिज्ञासयोर्भिन्नाधिकारिकत्वमपि दर्शितं बोध्यम् ॥ ३ ॥

इदानीं सूत्रस्थब्रह्मजिज्ञासापदस्य "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इत्यादिमन्त्रोक्तश्रवणविधिमूलकत्वसाकाङ्क्षत्वाय प्रकृतिप्रत्ययार्थाऽऽनात्मजिज्ञासाविचारलक्षणायाः, कर्तव्येति पदाध्याहारस्य चावश्यकत्वे तेन 'मुमुक्षुणा ब्रह्मज्ञानाय वेदान्तविचारः कर्तव्यः' इत्यर्थलाभात्, "तृप्तिकामेन भोजनाय पाकः कर्तव्यः" इति वाक्येन यथा पाकफलत्वं भोजने भोजनफलत्वं च तृप्तौ, तथा विचारफलत्वं ज्ञाने, ज्ञानफलत्वं च मोक्षे स्फुटतरमवगम्यत इति मोक्षस्य ज्ञानफलत्वं सूत्रयता बन्धस्याऽऽपाधिकत्वप्रदर्शितं, बहुतरश्रुतिस्मृतिपर्यालोचनेनाप्ययमेवार्थः सिध्यतीति विषयप्रयोजनाख्याऽनुबन्धसामर्थ्यं चाप्रदर्शयति—

सू० ॥ ज्ञात्वा देवं सर्वपाशापहानिः<br>
नान्यः पन्थाश्चेति भूयोवचोभिः ।<br>
ज्ञप्तेः साक्षान्मुक्तिहेतुत्वसिद्धौ<br>
बध्यासत्वं बन्धनस्यार्थसिद्धम् ॥ ५ ॥

ज्ञात्वा देवमिति ॥ "ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः"। "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय"। "तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय" "ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये" 'इति' शब्द आद्यर्थे, इत्येवमादिभिः भूयोवचोभिः=बहुतरैः श्रुतिस्मृतिवाक्यैरित्यर्थः । तेन "ज्ञानादेव तु कैवल्यम्" "स एनमविदितो न भुनक्ति" "यस्त्वविज्ञानवान् भवत्यमनस्कः सदाऽशुचिः । न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥ यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः। स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥" "यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा शिवमविज्ञाय दुःखस्यान्तो भविष्यति"॥ "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्, तथर्षीणां तथा मनुष्याणाम्" इत्यादयः परःशतमागमाः, "ज्ञात्वा मां शान्तिमृच्छति" "ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्"। इत्यादिस्मृतयः, अनुभवमूलकविद्वद्वचनानि चाऽनुसन्धेयानि । एतैः प्रमाणैः ज्ञप्तेः=आत्मतत्त्वज्ञानस्य, साक्षात्=अव्यवधानेन, मुक्तेः=आत्यन्तिकबन्धनिवृत्तेस्तदुपलक्षितपरमानन्दावाप्तेर्वा, हेतुत्वस्य=कारणत्वस्य व्यंजकत्वस्य वा, सिद्धौ=निश्चये सति, बन्धनस्य=अविद्याकामकर्मदेहेन्द्रिय विलक्षणस्य परिच्छेदापादकदुःखहेतुत्वाद्बन्धन-

तुल्यस्य संसारस्य अध्यासत्वम्=अध्यस्यत इत्यध्यासः, कर्मणिघञ्, तस्य भावस्तत्त्वं शुक्तिरजतादिवदारोपितत्वम्, अर्थसिद्धम्=सत्यस्य ज्ञाननिवर्त्यत्वानुपपत्तिप्रसूताऽर्थापत्तिप्रमाणेनैव सिद्धं=निश्चितं, तत्फलंचाऽद्वितीयब्रह्मात्मैक्यलक्षणविषयप्रयोजनसिद्ध्या शास्त्रारम्भसिद्धिरिति भावः ॥ ५ ॥

ननु,ज्ञानादेव मोक्ष इत्यसङ्गतं, मोक्षो हि नाम नित्यनिरतिशयानन्दावाप्तिर्वास्यात्? आत्यन्तिकाऽनर्थनिवृत्त्युपलक्षितात्मस्वरूपाऽवस्थितिर्वा? आद्ये तस्य स्वर्गानतिरिक्तत्वम्। अभिहितं हि श्रुत्यैव स्वर्गलक्षणम्–"यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम्" इति॥ "सः स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्" इति सूत्रयन् भगवान् जैमिनिरपिनित्यनिरतिशयानन्दरूपत्वात्सर्वाभिलापविषयं स्वर्गमङ्गीचकार॥ 'नच यत्कृतकं तदनित्यं' इति व्याप्तिमूलकानुमानेन "तद्यथेह कर्मचितो लोकः क्षीयत एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते" इति श्रुत्या च तस्याऽनित्यत्वं शङ्क्यम्। श्रुतिविरोधे सामान्यतो दृष्टानुमानस्याऽनुदयात्। तद्यथेहेत्यादिश्रुतेश्च कर्मोपासनाङ्गभूतात्मप्रशंसार्थत्वेन स्वार्थे तात्पर्याभावात्। अस्तु वा स्वर्गाऽतिरिक्तकर्मफलस्याऽनित्यत्वे तात्पर्यम्। तथाहि सति "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" "अपाम सोमममृता अभूम" "नस्वर्गाल्लोकाच्च्यवन्ते" इत्येवमादीन्यन्यान्यपि श्रुतिवाक्यानि, "कर्मणैवहि संसिद्धिमास्थिता जनकादयः" इत्यादिस्मृतिवचनानि च कर्मफलनित्यत्वपराण्यनुकूलानि। द्वितीयेपि प्राग्जन्मसंचितपुण्यपापेष्वेतद्देहारम्भकातिरिक्तस्य स्वर्गनरकादिभोगेनैव निश्शेषं क्षपितत्वात्, प्रारब्धफलानां भोगेन क्षपणात्, नित्यनैमित्तिककर्मानुष्ठानेन काम्यनिषिद्धवर्जनेन प्रामादिकदोषाणां प्रायश्चित्तादिना परिहारेणच भाविदेहारम्भककर्मणोऽप्यसंभवात्, अन्तरेणापि ज्ञानं तादृशस्वरूपावस्थितिलक्षणो मोक्षः सिध्यतीत्याशङ्कां निराकरिष्यन् दर्शितं बन्धमिथ्यात्वमर्थापत्तिस्फुटीकरणेनोपपादयति—

सू०॥ सत्यं भावं न वित्तिर्व्यपनुदति यतः कर्मनाश्यो घटादि
मिथ्याभूतं च कर्म क्षपयति न तथा वित्तिघात्यं यतस्तत्।
इत्थं सिद्धे विभागे श्रुतिशिखरगिरा वित्तिघात्यः प्रतीतो-
बन्धो मिथ्येति सिद्धे न तदपहृतये कर्मजातं समर्थम् ॥

रूपाणि नक्षत्राणि" इति श्रुत्या स्वर्गित्वेन प्रसिद्धानां नक्षत्राणां पातदर्शनेन, कृतकत्वहेतुकानुमानेन, नित्यस्य साधनापेक्षानुपपत्तिप्रसूतार्थापत्त्या, "तद्यथेह कर्मचितोलोकः क्षीयते एवमेवाऽमुत्र पुण्यचितो लोकः क्षीयते" "प्लवाह्येते अदृढा यज्ञरूपाः अष्टादशोक्तमवरं येषु कर्म, एतच्छ्रेयो ये भिऽनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति" "दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता" "अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पंडितं मन्यमानाः। दंद्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथाऽन्धाः" "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः।" "नाऽस्त्यकृतः कृतेन" "अमृतत्वस्य तु नाशास्ति वित्तेन" इत्यादिश्रुतिभिः "ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इत्यादिस्मृतिभिश्च स्वर्गादेः कर्मफलस्यानित्यत्वे निश्चिते "यन्नदुःखेन संभिन्नं," "अपामसोमम्" इत्यादिश्रुतेः, "आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते" इति स्मृत्युपदर्शितदिशा आपेक्षिकनित्यत्वपरत्वमेव। अक्षय्यमितिश्रुतिरपि न स्वर्गस्याऽक्षय्यत्वमाह, किन्तु सुकृतस्य, तत्तु न स्वतः पुरुषार्थः ॥

न च 'यदा यदा सुकृतं तदा तदा सुखम्' इतिनियमोऽस्ति, सुखस्यदेशकालदेहविषयविशेषादिनिमित्तांतरसापेक्षत्वेन तेषामेकैकाऽसमवधानेषु कृते सत्यप्यनुदयात्। न वा सुकृतस्याऽक्षय्यत्वमपि सम्भवति। फलनाश्यत्वनिश्चयात्,जन्यभावस्यविनाशनियमात्। "अतोन्यदार्तम्" इत्यात्मातिरिक्तस्य नश्वरत्वश्रुतेश्च। तस्मादसावर्थवादो लक्षणया चिरस्थायिफलत्वप्रतिपादनेन कर्मप्ररोचनार्थो न बहुतरप्रमाणविरुद्धमर्थं प्रसाधयितुं क्षमते। नच भवदुदाहृतवचनानामपि कर्मोपासनाऽङ्गभूतात्मप्रशंसार्थत्वान्नस्वार्थे प्रामाण्यमिति वाच्यं। औपनिषदस्याऽऽत्मनोऽन्यशेषत्वासंभवात्। नह्यशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमात्मतत्वं कर्माङ्गभावं भजते। प्रत्युत कर्तृत्वाद्यध्यासविरोधिज्ञानविषयत्वात्कर्मजात मुपमृद्गाति। तथाच सूत्रम्, "उपमर्दं चेति" "कर्मणैव हिसंसिद्धिम्" इतिस्मृतिस्तु चित्तशुद्ध्यादिद्वारा ज्ञानोपायतया मोक्षे कर्मणामावश्यकत्वं दर्शयन्ती नोपेयं ज्ञानं प्रत्याचष्टे। नापि संचितागामिकर्मणां भोगानारम्भाभ्यामेवेष्टसिद्धिः। अनेककोटिजन्मसंचितानां स्वर्गादिष्वभुक्तफलानामपि बहुतरजन्मारम्भककर्मराशीनां संभवात्। नच तत्तद्देहार्जितकर्मणां तत्तद्देहभोग्यकर्मभिर्यावद्देहपातं प्रतिबद्धानां तत्तद्देहावसाने प्रतिबन्धापगमे विनिगमनाविरहेणसर्वेषामेव फलारम्भावश्यकत्वात्संचितकर्माऽनवशेष इति वाच्यम्।

कदाचित्सुकृतं कर्म कूटस्थमिह तिष्ठति ।
मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते ॥

इति वचनाद्विकुण्डलोपाख्यानाद्वायव्यादिजन्मसंचितसुकृतेन स्वर्गतिस्मरणाच्च, स्वर्गादिभूमिष्वसंख्यातानामनेकमनुष्यादिदेहारंभककर्मणां संभवात् ॥

"कार्तिक्यां कृत्तिकायोगे यः कुर्यात्स्वामिदर्शनम् ।
सप्तजन्मसु विप्रः स्याद्धनाढ्यो वेदपारगः ॥"
"श्वसूकरखरोष्ट्राणां गोऽजाविमृगपक्षिणाम् ।
चण्डालमृतपानां च ब्रह्महा योनिमृच्छति ॥"

इतिस्मृतेरेकस्याऽप्यनेकविचित्रजन्मारम्भकस्य सुकृतदुष्कृतकर्मणः संभवाच्च। श्रुतिरपि "तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा, क्षत्रिययोनिं वा, वैश्ययोनिं वा, अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा, सूकरयोनिं वा, चण्डालयोनिं वा, अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति, जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्" इति सानुशयानामवरोहादि दर्शयति। प्रपंचितं चैतद्भाष्यकृद्भिः—"कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च," इत्यत्र। भोगेन स्वर्गभोग्यपुण्यनाशेऽवशिष्टकर्मवानेव चन्द्रमण्डलादवरोहति; प्रत्यक्षश्रुतिस्मृतिप्रमाणानुरोधाद्यथागतमार्गपर्वणात्तदन्येनचेतिसूत्रार्थः। किंच, एवं सति विधिनिषेधशास्त्रानधिकारिणां श्वसूकरादीनां संचितकर्मानवशेषाद्भोगेन प्रारब्धक्षपणाच्च अनायासेनैव मुक्तिः स्यादिति यत्किंचिदेतत्। तस्मात् "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेतथा," इत्यादिस्मृतेः, "एतं ह वाव न तपति, किमहं साधु नाकरवं किमहं पापमकरवमिति" इत्यादिश्रुतेश्च सर्वकर्मोच्छेदक्षमं ज्ञानमेव मोक्षसाधनमितिसिद्धम् ॥ ६ ॥

ननु बन्धस्याविद्याकार्यत्वे सिद्धे दर्शितं ज्ञानैकनिवर्त्यत्वं सिद्ध्येत्, तदेव तावदसिद्धम्। अविद्या हि भावरूपा ब्रह्मचैतन्यमात्राश्रयविषया तद्भेदाभेदसत्यासत्यनिरवयवसावयवत्वादिना दुर्निरूपा त्रिगुणसर्वजगज्जननशक्तिमती सिद्धान्त्यभिमता। नचेदृशीमिमामभ्युपगच्छन्त्यन्ये तैर्थिकाः। तथाहि—मिथ्याज्ञानवासनामूलो बन्ध इति कणभक्षाक्षचरणाः। प्रकृतिपुरुषाविवेकमूल इति साङ्ख्यपातञ्जलाः। कर्ममात्रमूल इति भाट्टप्राभाकराः।

तथान्येप्यन्यन्मूलमिच्छन्ति । तत्कथमविद्यैव बन्धमूलमिति शङ्कां परिहरन् कल्पितस्य कर्मानिवर्त्यत्वं सदृष्टान्तफलमुपपादयति—

मू० ॥ आविद्यो ह्येषबन्धो विरमति न विना वेदनं कर्मजालै
र्मालोद्भूताऽहिरस्तं व्रजति किमु नमस्कारमन्त्रौषधाद्यैः।
एवं निश्चित्य नागस्त्वचमिव विधिना कर्मबन्धं विधूय-
ज्ञानोपाये गुरुश्रीचरणमभिगतः सेवमानो यतेत ॥७॥

आविद्य इति ॥ एषः=देहेन्द्रियादिलक्षणः, कारानिगळादिवत्परिच्छेदपारवश्यदुःखहेतुत्वेन बन्धसादृश्याद्बन्धः, आविद्यः=दर्शितभावरूपाज्ञाननिदानः । हिशब्दः प्रमाणप्रसिद्धिद्योतनार्थः । प्रमाणानि च–प्रत्यक्षानुमानार्थापत्त्यागमस्मृतयः । तत्र प्रत्यक्षं तावत् 'अहमज्ञः, मामहं न सम्यग्जानामि, नाहं ब्रह्म जानामि" इत्यसंदिग्धाऽविपर्यस्तं सार्वजनीनं दुरपह्नवं । नचेदं ज्ञानसामान्याभावविषयं, सति ज्ञाने प्रतियोगिसत्तया, असति च धर्मिप्रतियोगिज्ञानरूपाऽभावग्रहकारणाभावेनाऽऽत्मनि ज्ञानसामान्याभावासिद्धेः, मामहमिति स्फुरत्येवाऽऽत्मनि तद्विषयकाऽज्ञानाऽनुभवाच्च । नचात्मनिश्चयत्वप्रमात्वसाक्षात्कारत्वाद्यवच्छिन्नप्रतियोगिताकाभाव एव विषयः, विपरीतव्युत्पन्नस्य नैयायिकादेस्तथानुभवदर्शनादिति वाच्यम् । प्रतियोगिनि निश्चयत्वाद्यनुल्लेखात् । नैयायिकादेरपि पटुतरेण वेदान्तिना जल्पकथादौ निगृहीतस्य स्वसाक्षिकस्तादृशाज्ञानानुभवो दुरपह्नवः । सदैव नाहं ब्रह्म जानामीति च तस्यास्त्येवाज्ञानानुभवः, मामहं नजानामीति तु विपरीतप्रत्ययवासनादाढर्येन प्रतिबन्धाद्भासमानमपि जातिगुणादेर्द्रव्यतादात्म्यमिवोल्लिखितुमशक्नुवन् भ्रान्त्या न जानामीत्यभिमन्यते इति युक्तम् । किंच मामहं नजानामीति प्रत्ययो न प्रागभावविषयः, प्रागभावानभ्युपगमात्, अभ्युपगमेपि तस्य प्रतियोगिसामग्रीव्यङ्ग्यत्वेन तदसमवधानदशायां ग्रहणायोगात् । सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वस्य प्रागभावे केनाप्यनभ्युपगमाच्च । तत्तद्व्यक्तित्वेन प्रतियोग्युपस्थितिस्तु भाविज्ञानस्य विशेषतो ग्राहकमानस्याप्रसिद्धेर्नेकस्यापिसंभवति । नच प्रतियोगितावच्छेदकविशिष्टप्रतियोग्यनुपस्थितावभावग्रहः सम्भवतीति ।

नाप्यत्यन्ताभावविषयः, घटज्ञानेन 'मम घटाज्ञानं नष्टं' इति सर्वानुभवस्य, विदुषांज्ञानेनअज्ञाननाशानुभवस्य, "ज्ञानेन तु तदाज्ञानं येषां ना-

शितमात्मनः ।" "नष्टो मोहः स्मृतिर्लब्धा ।" इत्यादिस्मृतीनां चात्यन्ताभावविषयत्वायोगात्, तस्य त्वया नित्यत्वाभ्युपगमात् । दृश्यत्वाधिकरणात्मकत्वमात्मगुणत्वोक्तिः सांख्यप्राभाकरादिभिरपि नानानुभवोपपादनाय भावरूपाज्ञानं यस्त्वहङ्कारार्णवत्, आत्मनो नाशायोगादिति सिद्धा सर्वचेतनाध्यासहेतुभूताविद्या । अन्यथा हि 'घटं न जानामि, पटं न जानामि' इतिप्रत्ययेन घटपटाद्यवच्छिन्नचैतन्याश्रितानि तत्तत्प्रातिभासिककार्योपादानानि घटपटादिविषयावरणादृशानि मूलाज्ञानापरपर्यायाण्यवस्थाज्ञानान्यपि सिध्यन्ति । तथा च प्रयोगः—चैतन्यगतो बन्धः अविद्याप्रकृतिकः, दुर्निरूप्यत्वाभावत्वात्, शुक्तिरूप्यवत् । नचाप्रयोजकता, कार्यमुपादानभेदमन्त्वा सत्त्वनिश्चयवासनासापेक्षत्वाद्विना दुर्वचत्वस्य तथाविधकारणमन्तरेणायोगात् । अनभ्युपगमे तु कार्यकारणयोरेकरूपत्वनियमभङ्गेन मृत्पिण्डात्सुवर्णघटघटानुपपत्तिप्रसङ्गात् । उपपादयिष्यते कार्यस्य दुर्निरूप्यत्वम् । अर्थापत्तिरपि—निर्विकारासङ्गस्यात्मनो जगत्कारणत्वं श्रूयमाणं मायाविकारविकारान्तरेणानुपपद्यमानं बन्धस्याविद्याकार्यत्वमर्थापयतीति प्रागपि दर्शितैवार्थापत्तिः । आगमाश्चात्रापि "सोऽविद्याग्रन्थिं विकिरतीह सोम्य" "अविद्यायामन्तरे वर्तमानाः" "दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता" "न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव ।" "त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि" "सोऽहं मन्त्रविदेवास्मि नात्मवित्" "अनृतेन हि प्रत्यूढाः" इत्यादयः सहस्रशः प्रसिद्धाः ॥ स्मृतयश्च—"तत्त्वविद्यां वितनुं हृदि यस्मिन्निवेशिते । योगी मायाममेयाय तस्मै ज्ञानात्मने नमः॥" "अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ।" "विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥" इत्याद्याः सहस्रशः प्रसिद्धा इति भावरूपमावरणविक्षेपशक्तिमदनिर्वचनीयमूलमज्ञानं सिद्धम् । नच धर्मिग्राहकमानेनैव ज्ञाननिवर्त्यं मिथ्याभूतं सिध्यतीति प्रमाणसिद्धस्य बाध्यत्वानुपपत्तिर्न शङ्कनीया ॥

अथवा साक्षिप्रत्यक्षवेद्यमेवाज्ञानम्, प्रमाणोपन्यासस्तु तस्य ज्ञानाभावभ्रमवारणायेति बोध्यम् । प्रसाधितस्य फलमाह—विरमतीति । वेदनम्=अधिष्ठानतत्त्वसाक्षात्कारं विना, कर्मजालैः=जालवद्बन्धहेतुभिः कर्मभिः, न विरमति=न समाप्यते । "व्याङ्परिभ्यो रमः" इति परस्मै पदम् । कर्मणां मुक्तिहेतुत्वं दूरे, प्रत्युत बन्धहेतुत्वमेवेति भावः । उक्तमर्थमर्थान्तरन्यासेन द्रढयति—मालेति ॥ मन्दान्धकारे पुष्पमालायामुद्भूतो भ्रान्तिकल्पितः, अहिः=

सर्पः, नमस्कारमन्त्रौषधाद्यैः=व्यावहारिकसर्पनिवर्तनोपायैः, अस्तम्=अदर्शनं, व्रजति किम्? नव्रजतीत्यर्थः। 'उ' इति निपातः। तेन सर्पनिवर्तकोपायत्वेन क्लप्तै रपि मन्त्रादिभिर्मिथ्यासर्पो न निवर्तते, किंवाच्यमक्लप्तैः कर्मभिर्बन्ध इति भावः। कर्मणामेव मोक्षहेतुत्वे संन्यासविधायकश्रुतिवैयर्थ्यमपि स्यादिति दोषान्तरं सूचयन् प्रसाधितस्य फलं दर्शयति—एवमिति ॥ एवं=उक्तप्रकारेण, कर्मणां मोक्षाहेतुत्वंनिश्चित्य=वैराग्यादिसम्पन्नोधिकारी, नागः=सर्पः। त्वचं=जीर्णकञ्चुकमिव कर्मबंधम्=नित्यनैमित्तिक काम्यकर्मात्मकं बन्धहेतुं, विधिना=शास्त्रोक्तप्रकारेणैव, विधूय=सन्न्यस्य, गुरोः=वेदान्ततत्वोपदेशेन सद्यः शिष्याज्ञाननिबर्हणक्षमस्य साक्षात्कृतब्रह्मतत्वस्य परमहंसपरिव्राजकाचार्यस्य, श्रीमच्चणं=पादाम्बुजद्वयमभिगतः=अभिमुखंप्रपन्नः सन्, 'न विद्यतेभीर्भयं यस्मात्तदभि' इति चरणविशेषणं वा। तमेव गुरुं वाङ्मनःकायैः सेवमानः=परिचरन् ज्ञानोपाये=साक्षात्कारसाधनश्रवणादौ, यतेत=यत्नवान् भवेदित्यर्थः।

ननु न कर्मणां सन्न्यासो न्याय्यः, "यावज्जीवमग्निहोत्रं जुहोति" "यावज्जीवं दर्शपूर्णमासाभ्यां यजेत" "वीरहा वा एष देवानां योऽग्निमुद्वासयते" "आचार्यायप्रियं धनमाहृत्य प्रजातन्तुं माव्यवच्छेत्सीः" "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतंसमाः" "त्रिभिः ऋणवा जायते" इत्यादि श्रुतिभिः, "नियतस्य तु सन्न्यासः कर्मणो नोपपद्यते। मोहात्तस्य परित्यागः तामसः परिकीर्तितः॥" "यज्ञदानतपः कर्मनत्याज्यं कार्यमेव तत्।" "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते।" इत्यादिस्मृतिभिश्च नित्यनैमितिककर्मत्यागस्य निषिद्धत्वात्। सन्न्यासशास्त्रं तुकर्मानधिकृतविधुरादिविषयं, काम्यकर्मत्यागविषयं, सर्वकर्मफलत्यागविषयंवा। तथाचोक्तंभगवता—"काम्यानां कर्मणां न्यासं सन्न्यासं कवयो विदुः। सर्वकर्मफलत्यागं प्राहुस्त्यागंविचक्षणाः।" इति॥ नच सन्न्यासमन्तरेणश्रवणाद्यसंभवात्तदावश्यकत्वं। गृहस्थादेरपि कर्मानवरुद्धकाले श्रवणादेः कर्तुं शक्यत्वात्। प्रतर्दनादेर्गार्हस्थ्यदशायामेवश्रवणादेः,जनकयाज्ञवल्क्याजातशत्रुप्रभृतीनां गृहस्थानामेव ब्रह्मनिष्ठत्वस्यच श्रवणादितिचेत्, मैवम्॥ छान्दोग्ये "त्रयो धर्मस्कन्धाः"इत्याश्रमत्रयंप्रस्तुत्य"सर्वएतेपुण्यलोकाभवन्ति, ब्रह्मसंस्थोऽमृतत्वमेतीति" गृहस्थाद्याश्रमित्रयस्य पुण्यलोकावाप्तिरेव, ब्रह्मसंस्थशब्दितसन्न्यासिन एवामृतत्वमिति विस्पष्टमभिधानात्॥

न च ब्रह्मसंस्थशब्दो यौगिकः कथं सन्न्यासिनमेव विशिष्याभिदध्यादिति वाच्यम्। ब्रह्मसंस्थ इति हि ब्रह्मणि परिसमाप्तिरनन्यव्यापार-

तद्रूपं तन्निष्ठत्वमभिधीयते। तच्च त्रयाणामाश्रमिणां न संभवति, तेषां स्वाश्रमविहित कर्माननुष्ठाने प्रत्यवायश्रवणात्। परिव्राजकस्य तु विधिना सर्वकर्मसन्न्यासाच्च प्रत्यवायः, शमादिसहितं ब्रह्मनिष्ठत्वमेव तस्य स्वाश्रमानुरूपं धर्मेति। तथाचाहुः—"आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया। दद्यान्नावसरं किंचित्कामादीनां मनागपि" इति ॥ "त्रयो धर्मस्कन्धाः" इत्यादिना धर्ममात्राधिकृतत्वेन प्रस्तुतानां त्रयाणामाश्रमिणां "सर्व एते पुण्यलोका भवन्ति" इति निरवशेषं परामृश्य पुण्यलोकभाक्त्वेन विनियुक्तानां निराकाङ्क्षाणां न पुनर्ब्रह्मसंस्थशब्देन परामर्शः संभवतीति परिशेषादाकाङ्क्षितत्वाच्च संन्यासिन एव परामर्शः। एतेन गृहस्थादीनामपि श्रवणादिसंभवप्रत्याशा निरस्ता। आख्यायिकासु जनकप्रभृतिगृहस्थानां श्रवणादिदर्शनलिङ्गं तु प्राप्तिमात्रापेक्षं न प्रापकशास्त्रविरुद्धं तेषां ज्ञानाधिकारं कल्पयितुं क्षमते। अन्यथा "गावो वै सत्रमासत" इत्यादिलिङ्गात्पशूनामपि कर्माधिकारकल्पना प्रसङ्गात्। तथाचोक्तं वार्तिके—"त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासतः। जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता" ॥ इति ॥

अस्तु वा जन्मान्तरे जनकादिभिः सन्न्यासपूर्वकं श्रवणाद्यनुष्ठितमेव प्रतिबन्धकवशात्तु तदा ज्ञानं नाभूत्, इह जन्मनि तु तेषां प्रतिबन्धकापगमात् गार्हस्थ्येऽपि सकृच्छ्रवणमात्रेण ज्ञानमुत्पन्नमिति कल्पनं। तथाच स्मृतिः— "पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः।" इति। "अनेकजन्मसंसिद्धस्ततो याति परां गतिम्" इति च। तस्मात्सन्न्यासो मुख्यकल्पः। तथा "न्यास इति ब्रह्मा, ब्रह्मा हि परः, परो हि ब्रह्मा तानि वा एतान्यवराणि तपांसि, न्यास एवात्यरेचयत्" "वेदान्तविज्ञानसुनिश्चितार्थाः सन्न्यासयोगाद्यतयः शुद्धसत्वाः।" "न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः।" "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति।" "त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम्।" इत्याद्या विविदिषासन्न्यासविधायिन्यः, "एतद्ध स्म वै तद्विद्वांस आहुः ऋषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहुवांचक्रिरे" "एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाऽथ भिक्षाचर्यं चरंति।" "एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज" इत्याद्या विद्वत्सन्न्यासपराः, तत्राऽपि काश्चित् "ब्रह्मचर्यं समाप्य गृही भवेत्, गृहाद्वनी भूत्वा प्रव्रजेत्" इति क्रमिकसन्न्या-

सविधिपरा:, अन्याश्च "यदिवेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा, यदहरेव विरजेत्तदहरेव प्रव्रजेत्" "खलु वेदार्थं योविद्वान् सोपनयादूर्ध्वं सतानि प्राग्वा त्यजेत्पितरं पुत्रमस्युपवीतं कर्म कलत्रं कुटीचको ब्रह्मचारी कुटुंबं विसृजेत् त्रिदण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रं शिखां यज्ञोपवीतं चेत्येतत्सर्वं भूः स्वाहेत्यप्सु परित्यज्याऽऽत्मानमान्विच्छेत्" इत्याश्रमक्रमं विना स्मार्तसन्न्यासोत्तरं चोत्कटवैराग्योदयो त्तरकालमेव पारमहंस्यविधिपराश्च श्रुतयो द्रष्टव्याः ॥

नचाऽऽसां विधुरादिविषयत्वं न्याय्यम्। "अथपुनरव्रती वा व्रतीवा स्नातको वाऽस्नातको वा उत्सन्नाग्निरनग्निकोवा" इति तेषां पृथक् सन्न्यासविधानात् ॥ भगवतापि-"नैष्कर्म्यसिद्धिं परमां सन्न्यासेनाऽधिगच्छति ।" इत्यादिना विविदिषासन्न्यासः, "योगारूढस्य तस्यैव शमः कारणमुच्यते।" "सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी ।" "नैव तस्य कृतेनार्थो नाऽकृतेनेह कश्चन ।" इत्यादिनाविद्वत्सन्न्यासश्च दर्शितएव ॥ बृहस्पतिरपि—संसारमेव निस्सारं दृष्ट्वा सारदिदृक्षया। प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः।" इति, अङ्गिराश्च-"प्रव्रजेद्ब्रह्मचर्येण प्रव्रजेद्वा गृहादपि। वनस्थः प्रव्रजेद्विद्वानातुरो वाऽपि दुःखितः ।" इति, मनुरपि-"प्राजापत्यां निरुप्येष्टिं सर्ववेदसदक्षिणाम् । आत्मन्यग्नीन् समारोप्य गृहस्थः प्रव्रजेद्गृहात् ॥" इति, व्यासोपि—"ब्रह्मचर्येण कालं वा कुर्यात्संकल्पपूर्वकम् । वानप्रस्थो वापि भवेत्परिव्राडथवेच्छया ॥" इति, सन्न्यासं दर्शयति ॥ तस्माद्बहुतरश्रुतिस्मृतिविरोधात् "कुर्वन्नेवेह कर्माणि" इति श्रुतिवचनं, "नियतस्य तु" इत्यादिभगवद्वचनं चाऽविरक्तविषयं, मन्दविरक्तविषयं वेति निश्चीयते। अतएवचाऽविरक्तस्य चित्तशुद्ध्यर्थं फलत्याग सहितं कर्मानुष्ठानं "काम्यानां कर्मणाम्" इत्यादिना भगवता प्रसिद्धसन्न्याससाम्येन स्तूयते । "दुःखमित्येव यत्कर्म" इत्यादिनाप्ययमेवार्थः स्फुटीकृतः । "त्रिभिः ऋणवाजायते" इति श्रुतिस्तु पश्ववदानविधिशेषाऽर्थवादान्तर्गता न स्वतंत्रब्रह्मचर्यादिसन्न्यासविधिविरुद्धमृणत्रयसद्भावं साधयितुं क्षमत इति सुरेश्वरवार्तिके प्रपञ्चितमिति सर्वतो दिग्विजयः ॥ ७ ॥

इत्थमनेकश्रुतिस्मृतिपर्यालोचनेन सन्न्यासे, मोक्षस्य ज्ञानमात्राधीनत्वे च प्रसिद्धेपि, सद्गुरुसंप्रदायाभावाज्जात्यन्धगजदर्शनन्यायेन कतिपय श्रौतस्मार्तार्थवादादिनिरीक्षणेनैव भ्रान्त्या मोक्षसाधनं निश्चितवतां भार्या पुत्रादिषु रागदार्ढ्यात्सन्न्यासमसहमानानां कर्ममीमांसकैकदेशिभर्तृप्रप-

भट्टभास्करप्रभृतीनां मतं प्रमाणविरोधाद्धेयमिति प्रदर्शनाय ताननूद्य दूषय-न्स्वमतं निगमयति केचिदित्यादिश्लोकत्रयेण—

मू० ॥ केचित्कर्मैव काम्योज्झितमुदितपदप्राप्त्युपायं प्रतीता
स्तच्चोपास्तिं च मुक्तौ मिलितमथ परे साधनं सङ्गिरन्ते।
अन्येतु ज्ञानकर्मोभयमिति मतिभिःस्वाभिरुत्प्रेक्षमाणाः
ज्ञानादेवेति वाक्याद्द्वयमिह सहसा नाऽनुमन्यामहे तान्॥

केचिदिति॥ केचित्=भाट्टैकदेशिनः प्राभाकराश्च, काम्योज्झितं= फलाभिसन्धिरहितं काम्यकर्मवर्जनसहितं वा, कर्मैव=नित्यनैमित्तिककर्मैव, उदितस्य=उत्कृष्ट निर्दुःखाऽऽत्मस्वरूपाऽवस्थितिलक्षणस्य, निरतिशयसुखाभिव्यक्तिलक्षणस्य वा, पदस्य=मोक्षस्य प्राप्तौ उपायं=साधनं, प्रतीताः=निश्चितवन्तः। अथपरे=भर्तृप्रपञ्चभास्करप्रभृतयः, तत्-कर्म च, उपास्तिं=प्राणाद्युपासनं च, मिलितं=समप्राधान्येन दर्शपूर्णमासवत्परस्परसमुच्चितं मुक्तौ साधनं नैष्कर्म्यमिति, संगिरन्ते=प्रवदन्ति। अन्ये=तदेकदेशिनस्तु ज्ञानमभ्युपगच्छन्तोऽपि स्वस्वाभाविकमतो ज्ञानं कर्मचोभयं मिलितं मुक्तौ साधनमिति, सङ्गिरन्त इत्यनुषज्यते। तेषामपराधः, स्वतन्त्रप्रज्ञाभावात्कल्पितैवेदृशी भ्रान्तिरिति दर्शयति—मतिभिरिति॥ यतः स्वाभिरेव मतिभिर्वेदार्थमुत्प्रेक्षमाणाः, न तु गुरूपदर्शितमार्गेणेत्यर्थः।

तत्राज्ञानामित्थमुत्प्रेक्षा—भगवता जैमिनिना, "अथातो धर्मजिज्ञासा" इति धर्मं प्रमाणस्वरूपसाधनफलैर्जिज्ञास्यत्वेन प्रस्तुत्य, "चोदनालक्षणोऽर्थो धर्मः" इति प्राधान्याद्विध्युपलक्षितवेदप्रमाणको धर्म इति प्रतिपाद्य, "तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वात्" "आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानां" "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" इत्यादिना कृत्स्नस्य वेदस्य प्रवृत्तिनिवृत्तिविषयधर्माधर्मयोरेव प्रामाण्यमिति दर्शितम्। तेन वेदान्तेषु ये कर्तृत्वादिविनिर्मुक्तऽऽत्मप्रतिपादकभागास्तेषां यागाधिकरणकभावनाक्षिप्तकर्तृविशेषपरत्वात्फलभोक्तृविवेकपरत्वेनाधिकारिनिर्वाहकत्वाद्वा, यागादिविषयकनियोगान्वितात्मबोधकत्वाद्वा, भवतु प्रामाण्यं,ये त्वसंगोदासीनात्मपरत्वेन भवदभिमतास्ते कार्याभिधानासामर्थ्यात्कथं प्रमाणम्। किंच, न सिद्धार्थे शब्दप्रामाण्यम् आद्यव्युत्पत्तिविरोधात्। तथाहि—प्रयोजकवृद्धस्य, घटमानयेति शब्दं श्रुत्वा प्रयोज्यवृद्धस्तमानयति, तत्पश्यन्बालो नूनमेतच्छ्रुतं घटानयनरूपं कार्यं तज्ज्ञानहेतुकं,

तज्ज्ञाने च शब्दातिरिक्तं कारणं नोपलभ्यते इति शब्दस्य विशिष्टकार्ये बोध निर्वाहकं सम्बन्धमवधारयति। ततः कालान्तरे "घटं नय, गामानय" इत्यादिवाक्येभ्यस्तत्तत्कार्याणि निरीक्ष्याऽऽवापोद्वापयोर्घटादीनां व्यभिचारेऽपि कार्यस्याव्यभिचारात्कार्यान्वितघटादौ पदानां शक्तिमवधारयतीति कार्य एव शब्दप्रामाण्यमिति षष्ठश्लोकाऽवतरणिकोपदर्शितदिशा कर्मणामेव मोक्षहेतुत्वं, तत्रोपदर्शित श्रुतिस्मृतिविरोधस्तु सिद्धार्थे प्रामाण्यसिद्ध्यधीन इत्यकिंचित्करः, अतो वेदोपरास्तेवेदान्ता इति ।

द्वितीयानामप्येवमुत्प्रेक्षा—कार्यपरैव श्रुतिः, तस्याः पूर्वोभागो यागादि शारीरक्रियापरः, उपनिषद्भागस्तूपासनात्मकमानसक्रियापरः, तथा च यथा तत्रतत्र प्राणाद्युपास्तिषु स्फुटं विधिप्रत्ययः श्रूयते, तथैवात्मविद्यास्वपि "आत्मेत्येवोपासीत" "आत्मानमेव लोकमुपासीत" "स म आत्मेति विद्यात्", "द्वे विद्ये वेदितव्ये", "विद्धित्वमेतं निहितं गुहायां" इति वहुशो विधिः श्रूयते। तस्माद्यत्रापि तत्त्वमस्यहंब्रह्मास्मीत्यादौ स न श्रूयते तत्रापि 'इत्युपासीत' इति पदे अध्याहृत्य प्रसङ्ख्यानापरपर्यायमुपासनं ज्ञान धारात्मकं विधीयते। तेषां चोपासनानां "तेनोभौ कुरुतो यश्च एतदेवं वेद यश्च नवेद" इति "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इत्यादिश्रुतिभिः कर्मसमुच्चयो दर्शितः। "नहास्य कर्म क्षीयते" इति श्रुत्या विद्यासहितकर्मफलक्षयप्रतिषेधात् समुच्चितस्य मोक्षहेतुत्वमपि संभवत्येवेति ॥

अथ तृतीयानामप्येवमुत्प्रेक्षा—भवतु सिद्धार्थेऽपि शब्दः प्रमाणम् । तथाप्यधीतसाङ्गवेदो विचारपूर्वकमधिगतवेदार्थः कर्मस्वधिक्रियत इति तावदविवादम् । तत्रौपनिषदात्मतत्वस्यापि वेदार्थत्वाविशेषात्तन्निर्णयवतः कर्माधिकारेऽर्थाज्ज्ञानकर्मसमुच्चयःसिद्धः। किंच काण्वा माध्यंदिनाश्च"कुर्वन्नेवेह कर्माणि जिजीविषेच्छतंसमाः" इत्यादिना यावज्जीवानुष्ठेयत्वेन कर्म, "असुर्या नाम ते लोकाः" इत्यादिना अविद्वन्निन्दापूर्वकं ज्ञानं च प्रस्तुत्य "अन्धं तमः" इत्यादिना तयोः प्रत्येकं मोक्षहेतुतां निन्दित्वा "विद्यां चाविद्यांच" इत्यादिना समुच्चितयोः तयोरमृतत्वहेतुत्वमामनन्ति। "उभाभ्यामेव पक्षाभ्यां यथाखे पक्षिणां गतिः। तथैव ज्ञानकर्मभ्यां प्राप्यते शाश्वती गतिः" इति स्मृतिरप्यत्रानुकूलेति । तदेतन्मतत्रयमतिमन्दमितिदर्शयति—ज्ञानादेवेति॥ "ज्ञानादेव तु कैवल्यम्" इत्यादिप्राग्दर्शितश्रुतिस्मृतिनिकरविरोधात्, वयं=परमहंसपरिव्राजकाः इह=मोक्षसाधनतत्वपरीक्षायां, तान्=वा-

द्विनस्तत्पक्षान्त्या, नानुमन्यामहे—नाभ्यनुजानीमः। सहसेत्यनेन साक्षाज्ज्ञानसमकक्षतया कर्मणां मोक्षहेतुत्वानभ्युपगमेपि चित्तशुद्धिद्वारा ज्ञानाङ्गत्वेनत्व द्वीकुर्म एवेति वर्णितम्।

अयंभावः—न तावत्कार्यान्विते शक्तिग्रह इति नियमः। "चैत्र ! पुत्रस्ते जातः" "धनं ते नष्टम्" इत्यादिवाक्यार्चैत्रादेर्मुखप्रसादमालिन्यलिङ्गाभ्यां सुखदुःखहेतुज्ञानमनुमाय तत्र शब्दं कारणं गृह्णता बालेन सिद्धेपि पुत्रजन्मधननाशादौ शब्दस्य सम्बन्धग्रहसंभवात्। कार्यस्यतादृशस्थले व्यभिचारेणाऽऽवापोद्वापाभ्यां घटादिपदानामपिलाघवात्शुद्धघटादौशक्तिपरिच्छेदः सम्भवत्येवेति गौरवपराहतो निष्प्रमाणकश्च कार्यान्वितशक्तिवादः। किञ्च "ब्राह्मणोनहन्तव्यः" इत्यादौ रागतःप्राप्ता ब्राह्मणवधप्रवृत्तिर्निषिध्यते, न तु किंचित्कार्यमुपदिश्यते। 'नीलमिदं न तु रक्तं' इत्यादिलौकिकवाक्येष्वप्यनुभवसिद्धसिद्धार्थबोधो न विना बाधकमपलापयितुं शक्यः। तथा "चोदनालक्षणोऽर्थोधर्म" इत्यनेन धर्मो विधिप्रमाणक इति प्रतिपादिते तद्भूतानामित्यादिसूत्रेणापि 'विधिसन्निहितसिद्धार्थबोधकपदानां विध्येकवाक्यतया प्रामाण्यम्, सिद्धसाध्यसमभिव्याहारे सिद्धस्य साध्यार्थत्वौचित्यात्' इत्येतावदेव प्रतिपाद्यते, न कृत्स्नो वेदः कार्य एव प्रमाणमिति, आम्नायस्य क्रियार्थत्वादित्यादावप्येवैवगतिरिति नन्वनुत्प्रेक्षितं जैमिन्यभिमतम्।

किञ्च॥ किमिदं कार्यनाम? "घटमानय" इत्यादिवाक्यश्रवणे 'मामसौ घटानयनविषये नियुङ्क्ते, ममेदं कार्यम्' इतिप्रत्ययोदयाल्लोके पुरुषाभिप्रायरूपं, वेदे तु पुरुषाभावादपूर्वमेव तत् कल्प्यत इति चेत्; न॥ प्रवृत्तिसामान्यहेतुत्वेन फलस्येष्टसाधनत्वकृतिसाध्यत्वज्ञानादेव वैदिकेपि प्रवृत्तिसिद्धौ पदार्थान्तरकल्पनवैयर्थ्यात्। कल्पितेपि तस्मिन् विधिशतेनापि विरक्तप्रवृत्त्यदर्शनेन विश्वजिदादौ फलकल्पनानुरोधेन च स्वरूपतस्तज्ज्ञानस्य बाल्यावृद्धलातपुरुषप्रवर्तकत्वाऽयोगेन कृतिसाध्यत्वेनतज्ज्ञानस्येष्टसाधनत्वाक्षेपस्यच तवापि सम्मतत्वात्। अत एव नश्वरस्य यागादेः कालान्तरीय स्वर्गसाधनत्वानुपपत्त्या द्वारत्वेनावश्यकल्प्यमपूर्वं लिङादिवाच्यत्वेनैव कल्प्यत इत्यप्यपास्तम्। तथा कल्पनेपि प्रवृत्त्यसिद्धेः। फलदातुरीश्वरस्याज्ञापरिपालनोल्लङ्घनप्रभवहर्षकोपात्मकमायावृत्तिभ्यामेव राजसेवादाविव कालान्तरीयफलोपपत्तेरपूर्वकल्पनाऽनावश्यकत्वाच्च। अनयैव दिशा शाब्दीभावनापि निरसनीया। इष्टसाधनत्वकृतिसाध्यत्वयोः—परस्पराक्षेपकत्वे लिङ्वाच्यत्वे च विनिगमनाविरहात्परस्परव्यभिचारदर्शनेनाक्षेपकत्वासंभवाच्च, लिङ्

वाच्यत्वे अनुभवानुरोधेन धात्वर्थान्वये च तावतैव यागादौ प्रवृत्तिसिद्धेर्न किंचिद्वाक्यं कार्यपरमिति "वेदोपरा वेदान्ताः" इत्यादिप्रलापो दौर्भाग्यमात्रविलसितम् ।

एतेन महावाक्येषु "इत्युपासीत" इति पदाध्याहारेणोपास्तिपरत्ववादिनो निरस्ताः। किंच तथासति पञ्चाग्न्यादिविद्यावत्संसारिणि असंसारि रूपकल्पनेनाप्युपास्तिसंभवादलौकिकब्रह्मसद्भावे तदुपास्तौच तात्पर्यकल्पने वाक्यभेदप्रसङ्गाद्वेदान्ता न ब्रह्मणि मानंस्युः। अपि च, वस्तुतो जीवस्य संसारिणउपास्तिकृतासंसारिभावस्ताम्रादौ रसौषधप्रयुक्तस्वर्णादिभाववत्कालान्तरेअपेयात् ॥ किंच,तलवकारिणामुपनिषदि "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत" इत्युपास्यस्य विषयस्यब्रह्मत्वंबहुशःप्रतिषिद्धमित्यध्याहारक्लेशो मूलघात्येव। ज्ञानधारात्मकप्रसंख्यानं विधीयते इत्ययुक्तम्। ज्ञानस्य विषयप्रमाणमात्रतंत्रत्वेन विध्यनपेक्षत्वात् । यद्धि पुरुषेण कर्तुमकर्तुमन्यथा वा कर्तुं शक्यं तत्र विधेर्व्यापारः, ज्ञानं तु सतोर्विषयप्रमाणयो र्न निषेधसहस्रेणापि वारयितुं शक्यम्, असतोश्च न विधिसहस्रेणापि जनयितुं शक्यमित्यशक्यविषये सागरतरणादाविव श्रूयमाणोपि विधिः शिलायां क्षुरतैक्ष्ण्यवत् कुण्ठीभवतीत्यविवक्षितः, साधनेषु फलविशेषकर्तव्यता पर्यवसितो वा। अतएव प्राणाद्युपास्तीनामेव कर्मसमुच्चयो, न ब्रह्मविद्यायाः ॥

यच्च वाजसनेयिनः काण्वाश्च कर्मब्रह्मविद्ये प्रस्तुत्य समुच्चयं दर्शयन्तीत्युक्तम्, तदपि न । तथासति "ईशावास्यमिदं सर्वम्" इत्युपक्रान्तब्रह्मविद्याङ्गत्वेन "तेन त्यक्तेन भुञ्जीथाः" इति सन्न्यासविधिविरोधात् । "त्यक्तेन" इति हि भावेक्तो न तु कर्मणि, निरुपपदश्च त्यजिः सर्वत्यागलक्षणं सन्न्यासमेवाह,तथा च सर्वत्यागेन सन्न्यासेनात्मानं भुञ्जीथाः=पालयेथा इत्यर्थः । एवंहि रागप्रतिषेधपरो "मागृधः कस्यस्विद्धनम्" इतिवाक्यशेषोऽनुकूलः । कर्मणि क्तप्रत्यय इति पक्षस्तु भाष्यकृद्भिरेव निरस्तः। तथा च भाष्यम्–"एवमीश्वरात्मभावतया युक्तस्य पुत्राद्येषणात्रयसन्न्यास एवाधिकारो, न कर्मसु । नहि त्यक्तो मृतः पुत्रो भृत्यो वा आत्मसंबन्धिताया अभावादात्मानं पालयति, तस्मात्त्यागेनेत्ययमेवार्थः" इति ॥ अतएव "कुर्वन्नेवेह" इत्याद्यविद्वद्विषयम्, अविदुषामासरणंकर्मानुष्ठानंविना प्रत्यवायासंबन्धो न संभवतीत्यर्थकंसत्कर्मनिष्ठापेक्षया ब्रह्मनिष्ठाया आधिक्यपरं, ततोऽनात्मविनिन्दापूर्वकं प्रस्तुता ब्रह्मविद्या, "तत्र को मोहः कः शोक एकत्वमनुपश्यतः, स पर्यगाच्छुक्रम्" इत्यन्तेन, "तरति शोकमात्मवित् ।"

"तस्मात्सर्वमभवत्" इति श्रुत्यन्तरसिद्धज्ञानोपलक्षणमात्मोपलब्धिफलेन समापितेति । "विद्यां चाविद्यां च" इति मन्त्रो न परब्रह्मविद्यायाः कर्मसमुच्चयपरः, किन्तु प्राणाद्युपासनविद्यायाः । अतएव चात्र मृत्युं तीर्त्वेत्यादेः स्वाभाविकं कर्मज्ञानलक्षणं मृत्युं तीर्त्वा देवतात्मभावलक्षणममृतमश्नुत इत्यर्थः। तथा "संभूतिं च विनाशं च" इतिमन्त्रोऽपि व्याकृताऽव्याकृतोपासनसमुच्चयपरएव, अतस्तत्रानैश्वर्यलक्षणं मृत्युं तीर्त्वा प्रकृतिलयलक्षणममृतमश्नुत इत्यर्थः ॥

यद्यत्रापि ब्रह्मविद्याया एव कर्मादिसमुच्चयो विवक्षितः स्यात्तर्हि "पूषन्नेकर्षे" इत्यादिना उत्तरत्र मार्गयाचनमप्यसंगतं स्यात् । ब्रह्मविदो "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते" इति गतिप्रतिषेधात् ॥ नन्वेवं मन्त्रकाण्डे मन्त्राभ्यां कर्मोपासनसमुच्चयविधानस्य कः प्रसङ्ग इति चेत् । शृणु । "ईशा वास्यम्" इति मन्त्रे विरक्तस्य निवृत्तिलक्षणो मुख्यो वेदार्थः संन्यासपूर्वकज्ञाननिष्ठारूप उक्तः। तदुत्तरमन्त्रे चाविरक्तस्य जिजीविषोः कर्मनिष्ठात्मकः प्रवृत्तिलक्षणोऽमुख्यः । तत्र प्रवृत्तिलक्षणस्य प्रपंचार्थमुत्तरत्र प्रवर्ग्यान्तं ब्राह्मण मुपयुक्तं, निवृत्तिलक्षणस्य तु बृहदारण्यकमित्यन्यत्र प्रपंचितं, निष्ठाद्वयमिह संक्षेपेण दर्शयितुं पंचभिर्मन्त्रैर्ज्ञाननिष्ठा, अवशिष्टेन कर्मनिष्ठोक्तेति निर्धारितार्थ इति ॥ यदपि समधिगतवेदान्तार्थः कर्मण्यधिक्रियत इति तदपि न । असङ्गोदासीनसच्चिदानन्दरूपं निष्प्रपञ्चमात्मानं निश्चिन्वतः कर्माधिकारायोगात् । व्यवस्थापयिष्यते च कर्तृत्वाभिमानाधिकारित्वम् ।। अतः कर्मोपयुक्तमन्त्रब्राह्मणभागमात्राभिज्ञानवतः कर्माधिकारः । अन्यथा अर्थज्ञानस्य दृष्टार्थत्वानर्थक्यादिति । अनयैव दिशा उपासनज्ञानसमुच्चयादयोऽपि निरसनीयाः। उपासनस्यापि मानसक्रियात्वादिति ॥८॥

इत्थं नित्यनैमित्तिककर्मणां प्रत्यवायपरिहारमात्रफलकत्वमभ्युपेत्य, साक्षाज्ज्ञानसमुच्चयेन च मोक्षहेतुत्वं निरस्तं । वस्तुतस्तु तयोः पितृलोकादि फलान्तरे विनियोगात्तद्भोगाय शरीरारम्भस्यावश्यकत्वादपि तत्र संभतीति सूचयन् साक्षात्परंपरया वा ज्ञानोपयोगं च दर्शयन् उक्तमर्थं निगमयति—

मू० ॥ पैत्रो लोकोऽधिगम्यः क्रतुभिरधिगतो विद्यया देवलोको
यद्वा चेतःकषायक्षपणमिह तयोः स्मार्तमेवाऽस्तु साध्यम् ।
यज्ञेनेत्यादिवाक्याद्भवतु विविदिषा तत्फलं वेदनं वा
ज्ञानादेवाऽमृतत्वं न हि शशकवधूः सिंहपोतं प्रसूते ॥९॥

पैत्र इति॥ क्रतुभिः=नित्यनैमित्तिकयज्ञादिकर्मभिः, पैत्रः=अर्यमादिपितृदेवतासंबन्धी, लोकः=भोगभूमिविशेषः, अधिगम्यः=प्राप्यः,अधिगतः= "कर्मणा पितृलोकः" इत्यादिश्रुत्या निश्चितः। तथा विद्यया=उपासनात्मकमानसक्रियया, देवलोकः=देवानामिन्द्रादिहिरण्यगर्भान्तानां लोकः, अधिगम्य इत्यनुषज्यते। "विद्यया देवलोकः" इत्यादिश्रुत्या तत्क्रतुन्यायानुगृहीतया तत्तदुपासनात्तत्तद्देवताभावेन तत्तल्लोकावाप्तिरिति निर्ज्ञातमित्यर्थः। इत्थं विहितत्वमात्रबुद्ध्यानुष्ठितयोः कर्मोपासनयोः फलमुक्त्वा ईश्वरार्पणबुद्ध्याऽनुष्ठितयोः तयोः फलमाह—यद्वेति॥ तयोः=विद्याकर्मणोः, स्मार्तं="कषायपक्तिः कर्माणि ज्ञानं तु परमागतिः। कषाये कर्मभिः पक्के ततो ज्ञानं प्रजायते॥" इति स्मृतिबोधितं, चेतःकषायक्षपणं–चेतसः=चित्तस्य कषायाणाम् =बहुतरजन्मपरंपराहितोत्तरजन्मादिहेतुभूतदृढतररागद्वेषादि संस्काराणां, क्षपणं=नाशनमेव साध्यं=फलमस्तु। एवकारो मोक्षफलत्वमात्रव्यवच्छेदाय॥

अथवा। यज्ञेन इत्यादिवाक्यात् = "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इतिश्रुतिवाक्यात्, विविदिषा= सन्न्यासपूर्वकश्रवणप्रवृत्तिफलोपहितोत्कटज्ञानेच्छा, वेदनं=मोक्षजनकतत्त्वज्ञानं वा, तत्फलम्=तेषां नित्यनैमित्तिकयज्ञादिकर्मणां "सर्वे वेदा यत्पदमामनन्ति" इतिश्रुत्यनुसारात्सं*योगपृथक्त्वन्यायेनसर्वकर्मणां वा,फलमस्त्वित्यनुषज्यते॥ "विविदिषंति" इत्यत्रहि "विद् ज्ञाने" इत्यस्माद्धातोरिच्छायां सन् प्रत्ययः, तत्र यदि यज्ञेनेत्यादिपदैः करणत्वेनोपस्थापितानां कर्मणां प्रधानीभूतसन्प्रत्ययार्थेच्छायामन्वयस्तदा विविदिषा फलमिति पक्षः। यदितु प्रकृत्यर्थे ज्ञानेऽन्वयस्तदा ज्ञानमेव फलमिति पक्षः। अश्वेन ग्रामं जिगमिषतीत्यादिवाक्ये प्रकृत्यर्थगमनेऽश्वस्य करणत्वेनान्वयबोधदर्शनादिति भावः। न केवलं मानाभावः, अपि तु कर्मणामसामर्थ्यादपि न मोक्षहेतुत्वमित्यर्थान्तरन्यासेन दर्शयन्नुपसंहरति—ज्ञानादेवेति॥ अमृतत्वं=अमरणधर्मात्मस्वरूपत्वलक्षणं, अमृतवदतिमधुरतराभिव्यक्तपरमानन्दात्मस्वरूपलक्षणंवा कैवल्यं, ज्ञानादेव, न साधनान्तरात्। कर्मणां कारकत्वादागन्तुकनश्वरफलहेतुत्वमेव न नित्यसिद्धपरमानन्दात्मव्यञ्जकत्वं,विना ज्ञानं कर्मस-

---

* एकस्योभयार्थत्वे संयोगपृथक्त्वन्यायः। यथा "खादिरो यूपो भवति" "खादिरं वीर्यकामस्य" इत्यत्र खादिरस्य तन्न्यायेनोभयार्थत्वं तथा कर्मणां विविदिषासंपादकत्वं, तत्प्रकरणविहिततत्फलनिष्पादकत्वं च॥

गृहेणापि विस्मृतकण्ठचामीकरलाभादर्शनात्, विना कर्म ज्ञानमात्रेण दर्शनाच्चेति भावः। शशकः=दीर्घकर्णक्षुद्रमृगः, तस्य वधूः=शशी, सिंहपोतं=मृगेन्द्रार्भकं न प्रसूते हि॥ यथा शुष्कपर्णादिचलनमात्रेणापि पलायनपरा क्षुद्रतरा शशकवधूर्मत्तेभकुम्भदलनक्षमं बालकेलिसिंहडिम्भं जनयितुमसमर्था, तथा क्षुद्रफलानुत्पाल्क्षुद्रतरं कीर्तनाद्यल्पायासेनापि विहन्यमानं कर्म नाऽनादिनिरूढबन्धस्य मोक्षे समर्थं। किन्तु "तस्य ह न देवाश्च नाभूत्या ईशते" इति श्रुतेः स्वोत्पत्त्यनन्तरं ब्रह्मादिभिरपि प्रतिबन्धुमशक्यं ज्ञानमेव समर्थमित्यर्थः ॥९॥

ज्ञानकर्मणोर्भिन्नाधिकारिकत्वं दर्शयितुमुभयत्रापि परस्परविरुद्धान्यधिकारिविशेषणानि दर्शयन् समुच्चयवादिनमुपहसति—

अर्थी दक्षो द्विजोऽहं बुध इति मतिमान् कर्मकृत्सोऽधिकारी
शान्तो दान्तः परिव्राडुपरमपरमो ब्रह्मविद्याऽधिकारी।
इत्थं भेदे विवक्षन् समुदितमुभयं मुक्तिहेतुं, सुशीतं
नीरं वैश्वानरं चोभयमहह तृषोच्छेदकामः पिबेत्सः ॥१०॥

अर्थी इति॥ अर्थी = स्वस्ववर्णोचितवृत्त्युपार्जितक्रतुनिर्वाहक्षमद्रव्यसम्पन्नस्तत्तत्कर्मफलाभिलाषुकश्च, दक्षः=स्वशरीरेण ऋत्विगाद्यावर्जनेन च कर्मनिर्वर्तनसमर्थः, द्विजः=त्रैवर्णिकः, बुधः=नियमेन वेदानधीत्याऽऽचार्यैर्जैमिनीयतंत्रदर्शितन्यायैर्निर्णीतकर्मकाण्डार्थः, इति शब्द आद्यर्थकः, तेन विशिष्टाश्रमवयोवस्थादेशकालनिमित्तादिसम्पन्नताप्युपलक्षणीया। इति मतिमान्=उक्तविशेषणकलापविशिष्टोऽहमित्यभिमन्यमानः॥ शान्तः=अरागद्वेषः दान्तः=निगृहीतसमनस्केन्द्रियकलापः, परित्यज्य सर्वं व्रजतीति परिव्राट् विधिवदधिगतपारमहंस्यः, उपरमः=श्रवणदेहधारणाऽनुकूलव्यापारेतरव्यापारनिवृत्तिः, स एव परमः=उत्कृष्टो अनुष्ठेयो यस्य तथोक्तः॥ तथाच स्मृतिः—"नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च। शीलं तपो दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः" ॥ इति॥ ईदृशः पुरुषधौरेयः, ब्रह्मविद्याधिकारी॥ इत्थम्=उक्तप्रकारेण अधिकारिभेदे ज्ञानकर्मोभयं समुदितं=परस्परसमुच्चितं, मुक्तिहेतुं=मोक्षसाधनं, विवक्षन्=वक्तुमिच्छन्, सः=पूर्ववादी, तृषोच्छेदकामः=पिपासोपरमलिप्सुः सन् सुशीतम्=अत्यन्तशीतलं, नीरं=जलं, वैश्वानरं=ज्वलनंच, उभयं समुदितं=परस्परमिलितं, पिबेत्॥ संभावनायां लिङ्॥ विरोधानभिज्ञस्य मूढस्य

तदपि सम्भावितमित्यर्थः। 'अहह' इति खेदे॥ यथा शिशिरजले वह्निमेलनमशक्यं तदा वह्निनाशप्रसङ्गात्, तृषोपशमे वा वह्नेरनुपयोगः, प्रत्युत दाहकत्वात्, तथा कर्मणां ज्ञानसहभावो दुष्करः, ज्ञानस्य कर्मोपमर्दकत्वात्, ज्ञानफले च कर्मवैयर्थ्यं, प्रत्युत बन्धहेतुत्वादिति भावः॥ १०॥

ननु भवतु ज्ञानमात्रनिबन्धनो मोक्षः। ज्ञानेऽपि हि व्यवस्थां नपश्यामः। तथाहि—प्रकृतिपुरुषविवेकज्ञानं मोक्षहेतुरिति साङ्ख्यपातंजलाः। षोडशानां सप्तानां वा पदार्थानां साधर्म्यवैधर्म्यादिज्ञानप्रयुक्तं बुद्ध्यादि चतुर्दशगुणविशिष्टात्मविषयं साक्षात्कारज्ञानं तथेति गौतमकणादाः। पशु-पाशपत्यादिविवेकज्ञानं तथेति पाशुपताः। कार्यकारणांऽशांऽशिप्रभृतीनां भेदाभेदाभ्युपगमादविरुद्धसप्रपंचनिष्प्रपंचोभयप्रत्यग्भिन्नाभिन्नब्रह्मसाक्षात्काररूपं तथेति भर्तृप्रपंचप्रभृतयः। असंगाद्वितीयकूटस्थसच्चिदानन्दरूपस्वात्मब्रह्मसाक्षात्काररूपं तथेत्यौपनिषदाः। तथान्येपि वादिनोऽन्यथान्यथा ज्ञानानि परस्परविरुद्धानि तत्साधनानि चाऽऽमनन्ति। तेषु कतमद्धेयं कतमदुपादातव्यमितिन निर्णयः। नचाभ्यर्हितत्वादौपनिषददर्शनावलम्बनमेवोचितमिति युक्तम्। तत्रापि शब्दादपरोक्षज्ञानोदयाभ्युपगाच्छाब्दसंशयायोगाच्च व्युत्पन्नस्य महावाक्यश्रवणे ब्रह्मसाक्षात्कारः सम्पन्न इति न पुनः संसारानुवृत्तिः स्यात्। इष्टापत्तावनुभवविरोधो विचारादिवैफल्यं वेत्यनाश्वास एवेत्याशङ्कां परिहरन्विचारमवतारयति—

**मू०॥ ज्ञानं चाप्यद्वितीयस्वरससुखघनानंन्तचिन्मात्ररूप-**
**ब्रह्मात्मैकत्वबोधः स भवति सुमतेस्तत्त्वमस्यादिवाक्यात्।**
**देहाद्यध्यासदार्ढ्याच्छ्रुतमपि सहसा नैव संभावनीयं**
**ब्रह्मत्वं स्वस्य तस्मान्नयगुरुवचनैः साधु मीमांसनीयम्।११।**

ज्ञानंचेति॥ न विद्यते सजातीयं विजातीयं स्वान्तर्गतं वा द्वितीयं यस्मात्तदद्वितीयं, अतएव स्वयमेव रसः सारोऽनुभवनिष्ठैर्निरंतरमास्वादनीयो वा यस्य तत्स्वरसं। राहोः शिर इति वद्भेदोपचाराद्बहुव्रीहिः, कर्मधारयो वा। सुखघनं=निरन्तरनिरतिशयानन्दात्मकं अनंतं=दैशिककालिकवास्तवपरिच्छेदशून्यं यच्चिन्मात्रं=स्वप्रकाशज्ञानैकस्वभावं तदेव ब्रह्म च आत्मा च शोधिततत्त्वंपदार्थौ, तयोरेकत्वबोधः=भेदभ्रममात्रविरोध्यखण्डाकारकं ज्ञानं, तदेव सकलश्रुतितात्पर्यविषयार्थावगाहित्वात् व्यावहारिकवस्तुगोचरप्रमाणाविषयविषयत्वेनमानान्तराबाध्यत्वाच्चज्ञानं=सर्वानर्थनिबर्हण-

क्षमं तत्वज्ञानं, न तु सत्वपुरुषान्यताख्यात्यादिरूपं तत्, तादृशो बोधः सुमतेः=अतिपरिशुद्धचित्तस्याऽनेकजन्मकोटिसंचितसुकृतपरिपाकाज्जन्मान्तरानुष्ठितश्रवणादिजन्यसंस्कारवाहुल्याच्चातिदुरूहमप्यात्मतत्वं सकृदुपदिष्टमेव करतलामलकवदपरोक्षयितुं समर्थस्य मुख्याधिकारिण इत्यर्थः। तत्त्वमस्यादिवाक्यात्=सत्य ज्ञानखण्डे वस्तुनि गृहीततात्पर्यकाद्भवति॥ वाक्यादपरोक्षज्ञानं मुख्याधिकारिणएवोत्पद्यत इत्यर्थः॥ अयंभावः—अनुभवविरोधो विचारपर्यन्तं मुख्याधिकारिण आपाद्यते? उत मन्दमध्यमाधिकारिणोः? नाद्यः, न हि दुरदृष्टशतपराहतस्य तथैव श्रुतब्रह्मतत्वस्य तस्य नाहं ब्रह्मेत्यनुभवो यथापूर्वं संसारानुवृत्तिर्विचारापेक्षा वास्ति, प्रपंचितश्चायमर्थो भगवद्भिर्भाष्यकारैः "नावगतब्रह्मात्मभावस्य यथापूर्वं संसारित्वं शक्यं दर्शयितुम्" इत्यादिना। द्वितीयेत्वाह–देहादीति॥ मन्दमध्यमाधिकारिणोस्तु बहुतरभवपरंपराभ्यस्तद्वैतवासनाप्रचयदृढीकृताऽन्तःकरणदेहेन्द्रियपुत्रमित्रादिष्वहं ममेति तादात्म्यसंसर्गाध्यासलक्षणविपरीतभावनाबाहुल्यात् श्रुतमपि=शब्दादपरोक्षीकृतमपि स्वस्य ब्रह्मत्वं कदाप्यविज्ञातमणिस्वरूपस्य पुरुषस्य काचखण्डसदृशबहुलप्रदेशे मन्दविद्युत्सम्पातनिरीक्षितमणिस्वरूपमिव नैव सम्भावनीयम्॥ वाक्यार्थे अनीयत्। संभावयितुमेव नशक्यं,किंपुनरवधारयितुमित्यर्थः।

तथैत्यमसंभावना भवति–'अशनायाद्यतीतमपेतब्रह्मक्षत्रादिभेदमपरिच्छिन्नस्वप्रकाशं नित्यमुक्तसच्चिदानन्दैकरसं ब्रह्मैव त्वम्' इत्युपदिशन्ति वेदान्ताः, अहन्तु क्षुत्पिपासाद्याकुलं विशिष्टमातापितृजन्यत्वाद्ब्राह्मणत्वादिविशिष्टं परिच्छिन्नमिन्द्रियाधीनजन्यज्ञानाश्रयं सुखदुःखरागद्वेषादिसंकुलं कर्मपरवशं बद्धमात्मानं निरन्तरमेव प्रत्यक्षमनुभवामि। नचायं भ्रम इति शक्यं वक्तुं। सर्वजनसाधारणत्वात्, अनादौ संसारे कदापि बाधादर्शनाच्च। किंच चक्षुरादीनि बाह्यद्वैतविषयाण्येव मानान्यवधारितानि, तन्मूलान्यनुमानादीन्यपि तत्समानयोगक्षेमाण्येव, कर्मोपासनकाण्डश्रुतिरपि विशिष्टाधिकारिदेशकालसाधनफलकबहुविधकर्मपरा द्वैतविषयिण्येवोपलभ्यते। नचैषां बहुतरप्रमाणानामुपनिषन्मात्रावलंबनेनाऽप्रामाण्यं शक्यं कल्पयितुं। किंच गुरुदैवतशास्त्रादिरूपद्वैतापलापे श्रवणादिसिद्धिरपि न स्यादित्युपजीव्यविरोधः, प्रत्यवायप्रसङ्गश्च॥ यदि च प्रत्यक्षादिविरुद्धार्थेष्वपि वेदप्रामाण्यं, तदा "आदित्यो यूपः", "यजमानः प्रस्तरः" इत्यादिषु गौणीवृत्तिर्नकल्प्येत, भेदप्रत्यक्षस्याऽप्रामाण्यं च कल्प्येत। नचैवं न्याय्यं, तस्माद्वेदान्ता

अन्यपरा:काममप्रमाणानि वा सन्तु नाऽकस्माज्जगदपलापोयुक्त इति ॥

इत्थमेवेदमतिदुरूहमात्मतत्वं शतश उपदिष्टमप्यसंभावयन्तो बहवो दर्शनान्तराण्येव प्रतिपेदिरे। अपरे तु स्वयंमूढाः परानपि मोहयन्तो वेदान्तानेव कदर्थयन्ते ॥ अपरेतु संशयिता वाताहतनैरिव डोलायन्ते । यथा-दुर्बुद्धाः—"अस्पर्शयोगो नामैष दुर्दर्शः सर्वयोगिनाम्। योगिनो बिभ्यति ह्यस्मादभये भयदर्शिनः ॥" इति॥ एवमेव मुमुक्षवो मन्दमध्यमाधिकारिण आत्मतत्वज्ञानप्रत्याशया त्यक्तसर्वकर्माणः असंभावनादिदोषवशाच्च ज्ञाननिष्ठामप्यलभमाना अन्तराले मा विनश्येयुरिति परमकृपालुना भगवता बादरायणेन,भगवत्पादादिभिश्च विचारात्मकं शास्त्रं प्रणीतम्। अतस्तद्दर्शितन्यायैः सद्गुरुपूर्वकविचारादेव तत्वनिर्णयो नान्यथेति निगमयति—तस्मादिति ॥ तस्मात्=आत्मतत्वस्य जगद्विलक्षणस्य सहसा संभावयितुमशक्यत्वात्, नयैः=बादरायणभगवत्पादादिदर्शितन्यायैः तत्संप्रदायाभिज्ञसद्गुरुवचनैश्च,मुमुक्षुणा स्वस्य ब्रह्मत्वं साधु=निपुणतरं निर्णयावधि मीमांसनीयम् विचारणीयम्। पक्षप्रतिपक्षपरिग्रहेणेत्यर्थः। मानैर्जिज्ञासार्थात् "मान्वध" इत्यादिना स्वार्थसनन्ताद्विधावनीयर्। तत्र यद्यस्मिन्नेव जन्मनि प्रतिबन्धापगमस्तर्हौहिकमेव विचारफलंज्ञानं,यदि तु बलवत्प्रतिबन्धकमिह जन्मनि नापैति तदा आमुष्मिकमपि भवति। "तद्धास्य विजिज्ञौ" इति विजिज्ञा=विवित्तिः, नवकृत्वोऽभ्यस्तान्महावाक्योपदेशाच्छ्वेतकेतोरिहैव ज्ञानोदयश्रवणात् "गर्भएवैतच्छयानो वामदेव एवमुवाच" इति जन्मान्तरे कृतश्रवणस्य वामदेवस्य गर्भे ज्ञानोदयश्रवणाच्च । तथाच सूत्रम्—"ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्।" इति ॥ ११ ॥

इत्थं समर्थितं विचारमवतितारयिषुस्तदङ्गभूतां विप्रतिपत्तिं वादिमतोपन्यासमुखेन दिदर्शयिषुरादौ त्वंपदार्थे तां दर्शयति देहमित्यादिश्लोकद्वयेन—

मू० ॥ देहं केऽपि वदन्ति खानि तु परे प्राणान्मनश्चापरे
 बुद्धिं च क्षणिकां स्थिरामथ परे केचिच्चितं निस्सुखाम् ।
आत्मानं जडचित्स्वभावमपरे चिद्वज्जडं चेतरे
 सत्यज्ञानसुखाद्वितीयमपरे तत्राऽस्य को निश्चयः ॥ १२ ॥

देहमिति ॥ केऽपि=पामराः चार्वाकविशेषाश्च 'गौरोऽहं स्थूलोऽहं जानामि' इति स्थौल्यगौरवाद्याधारे देह एव ज्ञानसुखाऽहंतादिपरामर्शात्

स्वक्षविरुद्धेऽर्थे प्रमाणान्तराप्रसरादनभ्युपगमाच्च देहं = उपचयापचयधर्मिणं स्थूलदेहमेवाऽऽत्मेति वदन्ति । परे=तदन्ये चार्वाकाः, 'काणोऽहं बधिरोऽहं, अद्राक्षमश्रौषमिति' काणत्वबधिरत्वादिधर्मिष्विन्द्रियेषु तथा परामर्शात् स्वानि=इन्द्रियाण्येवात्मेति वदन्तीति सर्वत्रानुषज्यते । तुशब्दः पूर्वपक्षापेक्षयैषां किञ्चिदन्तर्मुखत्वाद्विशेषप्रदर्शनार्थः । अपरे=तेभ्योऽप्यन्ये, सत्यपि देहे मृतशरीरे तादृशपरामर्शादर्शनात्स्वप्नादिसमये लीनेष्वपीन्द्रियेषु प्राणक्रियोपलब्ध्या जीवतीति व्यवहारदर्शनान्मूर्च्छिते प्राणक्रियासंशये जीवनसंशयाच्च प्राणानेवात्मानं वदन्ति ॥ ततोऽप्यपरे=सत्स्वपि देहेन्द्रियप्राणेषु मनःप्रणिधानाप्रणिधानयोर्ज्ञानसुखादेरन्वयानुवृत्त्यव्यवस्थादर्शनात् "अन्यत्र मना अभूवं नादर्शं, अन्यत्र मना अभूवं नाश्रौषम्" इति श्रुत्यापि तदनुवादान्मन एवात्मेति वदन्ति । परे=वैनाशिकास्तु, पराभिमतमनसः सुषुप्तौ विलयेऽपि जीवनदर्शनाद्ग्राह्यान्याधेयत्वान्याधारमन्यायोगाच्चित्तचैत्योभयाकारपरिणामिनीं तदुभयविषयां क्षणिकां बुद्धिं विज्ञानमेव आलयविज्ञानधाराभिधामात्मेति वदन्ति । अथ=अनन्तरं, परे=भास्करादयः आत्मनः क्षणिकत्वे प्रत्यभिज्ञानविरोधाद्बन्धमोक्षोपपादनासंभवाच्छास्त्रवैफल्यापत्तेर्धारायाः दुर्निरूपत्वाच्च, स्थिरां=नित्यां, बुद्धिं=विज्ञानमयकोशं कर्तृत्वादिधर्मविशिष्टं मनसोऽप्यान्तरमात्मेति वदन्ति। तेभ्योऽन्ये केचित्=सांख्यपातञ्जलादयः, सुखदुःखादीनामात्मधर्मत्वे आत्मनः सविकारत्वापत्तेरनिर्मोक्षानित्यत्वयोः प्रसङ्गाद्गुणपरिणामरूपत्वमेव, आत्मनस्त्वसंगोदासीनचिन्मात्ररूपः, तस्य प्रकृतिगुणाविवेकाद्भोक्तृत्वलक्षणो बन्धः, विवेकज्ञानाच्च मोक्ष इति कल्पयन्तो निस्सुखाम्=अनानन्दरूपामहंकारादिप्रकाशानुमेयां चितं=ज्ञानमात्मेति वदन्ति । तेभ्योऽप्यपरे भाट्टाः, कर्तृत्वादीनां प्राकृतत्वेऽन्यकृतेनान्यस्य भोगे व्यवस्थानुपपत्तेः, कृतहान्यादिप्रसङ्गाच्चात्मन एव कश्चिज्जडांशः कर्तृत्वसुखदुःखाद्याकारपरिणामी, अपरो बोधांश इति कल्पयन्तो जडचित्स्वरूपमात्मानं वदन्ति । इतरे=प्राभाकरनैयायिकादयः, आत्मनः सांशत्वे घटादिवदनित्यतां प्रसञ्जयन्तो ज्ञानस्य गुणत्वं प्रकल्प्य चिद्वज्जडम्=चिद्वन्तं=समवायेन ज्ञानविशिष्टं स्वतस्त्वाकाशादिवत् जडमात्मानं वदन्ति। इत्येते जगत्सत्यत्वनानात्ववादिनां पक्षाः। अपरे=परमहंसपरिव्राजकाः, सत्यं=कालत्रयाबाध्यम्, ज्ञानं=स्वपरस्फूर्तावन्यनिरपेक्षं यत्सुखं तदेव वस्तुतो द्वितीयस्य मिथ्यात्वादद्वितीयमात्मेति वदन्ति । तत्र=तेषु दर्शितपक्षेषु, अस्य=विविदिषोः=को निश्चयः 'क' इत्याक्षेपे, विना विशेषदर्शनं निश्चयो न संभवतीत्यर्थः ॥ १२ ॥

इत्थं त्वंपदार्थे प्रत्यगात्मनि वादिनां विप्रतिपत्तिं प्रदर्श्य परिमाणादितद्धर्मेष्वपि तां दर्शयति—

**मू०॥ आहुः केचिदणुं शरीरसदृशं केचिद्विभुं ते परे**
**ते तं मानसगोचरं तदपरे नित्याऽनुमेयं जगुः।**
**अन्ये चिद्विषयं परेतु परमस्वज्योतिराभ्यन्तरं**
**सत्येवं श्रुतियुक्तिभिर्विविदिषो र्युक्तो विचारो मुहुः॥**

आहुरिति॥ केचित्=पाशुपतपांचरात्राद्यागमानुसारिणः, आत्मनो विभुत्वे देहभोगादिव्यवस्थानुपपत्तिं, मध्यमपरिमाणत्वे सावयवत्वानित्यत्वाद्यापत्तिं च मन्यमानास्तमात्मानमणु=परमाणुपरिमाणं आहुः। ततोऽपि केचिदार्हतादयः, अणुत्वे सर्वशरीरव्यापिशैत्याद्यनुपलब्धिं प्रसञ्जयन्तः शरीरसदृशं=दीपप्रभावत्संकोचविकासाभ्यां तत्तद्देहसमानपरिमाणं तमाहुः। परे=नैयायिकादयः, तथात्वेऽनित्यतामापादयन्तो वियदादिवद्विभुं= सर्वमूर्तद्रव्यसंयोगक्षमं परममहापरिमाणं तमाहुरिति परिमाणेविप्रतिपत्तिः। ग्राहकविषयेऽपि तामाह—ते इति॥ ते=पूर्वोक्तास्त्रयो वादिनः, तं=आत्मानं, मानसस्य=मनःकरणकप्रत्यक्षस्य, गोचरं=विषयं जगुरित्यपकृष्यते। धातुभेदो विप्रतिपत्तिविषयभेदद्योतनार्थः। तेभ्योऽपरे=सांख्यादयो नित्यानुमेयं कदाप्यापरोक्ष्यरहितं सत्वगुणप्रधानबुद्धितद्वृत्तिप्रतिफलनाधीनविषयप्रथानुमेयं जगुः। अन्ये=वैनाशिकाः चिद्विषयम्=चिच्चासौ विषयश्च चिद्विषयः तं स्वलक्षणक्षणिकविज्ञानप्रकाश्यं जगुः। अथवा—अन्ये=प्राभाकराः, चिद्विषयम्=चितः चिन्मात्रस्य विषयं सर्वज्ञानप्रकाश्यमित्यर्थः। सर्वस्मिन्नपि ज्ञाने 'आत्मा, ज्ञानं, विषय' इति त्रिपुटी भासते। विषयः कर्मतया, आत्मा आश्रयतया ज्ञानभास्यौ। ज्ञानं तु स्वप्रकाशमेव। सर्वमपि ज्ञानमाश्रयांशे स्वांशेचाऽपरोक्षमेव। विषयांशेत्वनुमित्यादि नानारूपमिति जगुः। परेतु=औपनिषदाः, परमं=भासकत्वेन प्रसिद्धसूर्यचन्द्राग्निकरणेभ्योप्युत्कृष्टं स्वयमेव द्योतते नान्यापेक्षं स्फुरणैकस्वभावत्वात्, अन्नमयादिकोशपंचकविवेके आनन्दमयकोशादप्याभ्यन्तरं परमप्रेमास्पदं स्फुरणैकरस्येन परिशिष्यमाणं वस्त्वात्मेति जगुः। एवं=दर्शितप्रकारेण स्वरूप-परिमाण-ग्राहक-विषयविप्रतिपत्तौ श्रुतितात्पर्यसंशये च सति, विविदिषोः=पूर्वोक्ताधिकारिणः, श्रुतियुक्तिभिः=श्रुतिगतोपक्रमादितात्पर्यग्राहकलिङ्गैर्गतिसामान्यज्ञानायपर्यालोचितनानाशाखोपनिषद्भिः साक्षात्कृतब्रह्मतत्वकुशलतरा-

चार्यपरंपरोपदर्शितस्यानुभवानुकूलयुक्तिभिर्श्रुतिया, मुहुः=आभ्रमनाशात्कालोऽप्यंपुनःपुनः, विचारः=श्रुतितात्पर्यपर्यालोचनलक्षणो यस्तु तत्परीक्षालक्षणश्च युक्त एव । श्रवणादेरवघातादिवत् दृष्टार्थत्वादाफलोदयमावृत्तेर्न्यायसिद्धत्वादवश्यकृत्यत्वमस्मिन्नर्थेऽन्युपदेशाभ्यामदर्शनाच्चेति भावः ॥ १३ ॥

इत्थं त्वंपदार्थे विप्रतिपत्तिप्रदर्शनपुरस्सरं विचारमवतार्य तत्पदार्थेऽपि तथा तामवतारयति—

मू० ॥ एवं विश्वस्य हेतुं प्रकृतिमभिदधुः केऽपि केचित्परानू-
नीशेनाधिष्ठितांस्तान् कतिचन कतिचिन्नश्वरं ज्ञानमेव।
अन्ये शून्यं* विरिंचिं कतिचन समयं केऽपि केचिद्यदृच्छां-
कर्माऽन्ये ब्रह्म मायाशबलितमपरं सोऽपि तस्माद्विमृश्यः

एवमिति ॥ एवं=पूर्वोक्तप्रत्यगात्मानमिव, विश्वस्य=कृत्स्नस्य जगतः, हेतुं=उपादानकारणं, केऽपि=कापिलाः, प्रकृतिं=सत्त्वरजस्तमोगुणानां साम्यावस्थालक्षणां महदादिमहाभूतान्तचतुर्विंशतितत्त्वात्मकविकारपरिणामिनीं प्रधानाख्यां मूलप्रकृतिं, अभिदधुः=उक्तवन्तः। ततोऽपि केचित्=वैनाशिकविशेषा आर्हताद्य, परान्=पृथिव्यादिभूतचतुष्टयपरमाणून्, अविद्यादिनिमित्तचक्रपरिवर्तनात् शरीराद्याकारेण बाह्यविषयाकारेण च संहन्यमानान् तथा अभिदधुः। कतिचन=पातञ्जलाः कणादगौतमीयाश्च, सा च प्रकृतिः, ते च परमाणवस्तान्, "पुमान्स्त्रिया" इत्येकशेषः। ईशेन=सर्वेश्वरेण, अधिष्ठितान्=कार्योन्मुखतया प्रवर्तितान् यथाक्रमं हेतूनभिदधुः। पातञ्जला ईश्वराधिष्ठितां प्रकृतिं, कणादगौतमीयास्तु तथाविधान् परमाणूनित्यर्थः। कतिचित्-विज्ञानवादिनः, नश्वरं=क्षणिकं, ज्ञानं=विज्ञानमेवान्तरं असद्बाह्याकारेण परिणममानं तथाऽभ्यभिदधुः। एवकारस्तन्मते विज्ञानमेव स्वलक्षणं वस्तु घटाद्याकारस्त्वपोहरूपा अलीका एवेति द्योतनार्थः। अन्ये=माध्यमिकाः क्षणिकविज्ञानमपि पूर्वापरकालास्पर्शि वर्तमानक्षणेऽप्यसदेवेति मन्यमानाः शून्यमलीकमसांवृतजगदारोपाधिकरणं तथाभिदधुः। कतिचन=हैरण्यगर्भाः, विरिंचिं=हिरण्यगर्भं तथाऽभिदधुः। पाठान्तरे—कतिचन=लोकायतिकाः, स्वभावं=बीजादिस्वरूपमेवाङ्कुरादिजननसमर्थमन्वयव्यतिरेकाभ्यां दृष्टमिति बीजादेरङ्कुराद्युत्पादकत्वमस्योष्णवत्स्वभाव एव। क्षित्यादीनां चतुर्णां परिणामिस्वभावानां यथादर्शनं स्थैर्यमेवेति न कर्त्रपेक्षेत्यभि

---

* स्वभावमित्यपि पाठः।

दधुः । केऽपि=कालवादिनो मौहूर्तिकाः, तत्तदार्तवफलपुष्पादीनां कालान्तरे जन्मादर्शनात्समयं=कालमेव, तथाभिदधुः । ततोऽपि केचित्=अनीश्वरवादिनः, यदृच्छाम्=आकस्मिकत्वापरपर्यायामतर्क्यहेतुकतामभिदधुः। अन्ये=कर्ममीमांसकाः, कर्म=विहितनिषिद्धाचरणजन्यं जीवादृष्टमेव तथाऽभिदधुः । अपरे=औपनिषदाः गुणत्रयवत्या सकलकार्यवासनासंभृतया अनिर्वचनीययानन्तशक्त्या मायया तादात्म्यात् शबलं=नानावर्णमिव सर्वज्ञं सर्वशक्तिसंपन्नं वस्तुतः सच्चिदानन्दाद्वयप्रत्यग्रूपं ब्रह्मैव केशलोमादेर्जीवत्पुरुषशरीरमिव भुजङ्गादेः रज्ज्वादिस्वरूपमिवाऽभिन्ननिमित्तोपादानकारणमित्यभिदधुः । तस्मादित्थं वादिवाक्यैर्विप्रतिपन्नत्वात्सोपि=जगद्धेतुरपि विविदिषुणा विमृश्यः=विचारणीय एवेत्यर्थः । "ऋदुपधाच्चाक्लृपिचृतेः" इति क्यप् ॥ १४ ॥

इत्थं जिज्ञासासूत्राक्षिप्तविचाराङ्गविप्रतिपत्तौ प्रदर्शितायां सिद्धान्ती सर्ववादिविजयेन स्वमतप्रतिष्ठापनाय सन्निहिततत्पदार्थव्यवस्थापनमुखेनोपक्रममाणः सर्वजगदभिन्ननिमित्तोपादानकारणत्वोपलक्षिते सच्चिदानन्दाद्वयप्रत्यक्स्वरूपे श्रौते ब्रह्मणि सर्ववेदान्तसमन्वयप्रदर्शनेन समस्तशास्त्रार्थसंग्रहरूपामुत्तरत्रिसूत्रीमर्थतः संगृह्णन् प्रतिजानीते—

**मू०॥ यस्मादुत्पत्तिगुप्ती क्षतिरपि जगतां यच्च शास्त्रैकयोनिः**
**सर्वज्ञं मायया यत् सहजसुखसदद्वैतसंवित्स्वरूपम् ।**
**तत् ब्रह्म स्वप्रकाशं श्रुतिशिखरगिरां सैव तात्पर्यभूमिः**
**स्वात्माऽसौ यं विदित्वा जनिमृतिजलधिं निस्तरन्तीह सन्तः॥**

यस्मादिति। यस्मात्=अभिन्ननिमित्तोपादानभूतात् ब्रह्मणः सकाशात्, जगतां = हिरण्यगर्भादिचतुर्विधभूतग्रामान्तानां वियदादिपुरुषान्तानां वा समस्तकार्याणां, उत्पत्तिः=तादात्म्येनाविर्भावः, गुप्तिः=पालनं, क्षतिः=कारणमात्रपरिशेषात्मातिरोभावोपि तद्ब्रह्मेति । "जन्माद्यस्य यतः" इति सूत्रदर्शितं लक्षणं प्रतिज्ञा च । एवमुत्तरत्रापि बोध्यम् । सूत्रे आदिपदेन स्थितिभङ्गयोरेव ग्रहणं, 'यतः' शब्देन "यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति ।" इति श्रुतिदर्शितमूलकारणाधीनजन्मादित्रयस्यैव प्रत्यभिज्ञानात् । न यास्कोपदर्शितावान्तरकारणाधीनानां 'अस्ति, जायते, वर्धते, विपरिणमते,

अपक्षीयते,नश्यति,इत्येतेषांभावविकाराणामिति प्रदर्शनायउत्पत्तिगुप्ती क्षतिरितित्रितयोपादानं मूलकारणलाभार्थम्। सूत्रे 'यतः' इति तसिलन्तपदादेव "जनिकर्तुः प्रकृतिः" इत्यनुशासनादुपादानत्वे लब्धे स्थितिभङ्गयोरुपादानं लक्षणत्रयप्रदर्शनायेति केचित्। अन्ये तु निमित्तमात्रेपि पंचम्यनुशासनाल्लयाधारत्वोक्तिरुपादानत्वलाभाय, स्थितिहेतुत्वोक्तिस्तु चेतनत्वलाभायेति त्रितयलब्धमभिन्ननिमित्तोपादानकारणत्वमेव लक्षणमित्याहुः। वस्तुतस्तु लक्षणं लक्ष्यपरिचयार्थम्। नचाद्वितीयं लक्ष्यमध्यारोपापवादाभ्यां कार्यजातस्य मिथ्यात्वनिर्णयमन्तरेण परिचेतुं शक्यमिति तदुपयोगितया त्रितयोपादानम्। यथाचैनत्तथा तटस्थलक्षणपरीक्षायां दर्शयिष्यते। नचैतद्विचित्ररचनात्मकस्सरूपजगद्विरचनमचेतनैः प्रधानादिभिः शक्यमिति सर्वज्ञं सर्वशक्तिसंपन्नं श्रुत्युक्तं ब्रह्मैव कारणं सिद्ध्यतीति भावः॥

आस्तांजगद्विरचनाकारणस्य सर्वज्ञतादिसिद्ध्यतीति,सूर्यैकदेशभूतसर्वार्थावद्योतनक्षमसमस्तविद्यास्थानोपबृंहितऋग्वेदादिलक्षणशास्त्रस्य पुरुषनिश्वसितवदनायासेन प्रकाशनमेव कारणे सार्वज्ञ्यादिसाधयितुं क्षममित्येतदर्थकं "शास्त्रयोनित्वात्" इतिसूत्रमर्थतः संगृह्णाति—यच्चेति॥ चकारोऽप्यर्थे। यत्=शास्त्रात्मकैककार्यजनकं सदपि सर्वज्ञमिति सम्बन्ध इत्यर्थः। अथवा—"जन्माद्यस्य यतः" इतिसूत्रेण तन्मूलश्रुत्या च कार्यलिङ्गकानुमानमेवकारणे प्रमाणं दर्शितं। तच्च प्रधानाऽदिनार्थान्तरितमित्याशङ्क्य च सूत्रस्यार्थान्तरमाह—यच्चेति। यत्=ब्रह्म, शास्त्रं=श्रुतिरेकमेव, योनिः=प्रमाणं यस्य तत्तथोक्तं। पुरःस्फूर्तिकतत्पुरुषानुरोधात् स्वात्मेति मुख्य विशेष्यानुसाराच्च पुंलिङ्गनिर्देशः। वैदिकप्रमाणकमित्यर्थः। "नावेदविन्मनुतेतं बृहन्तं।" "तंत्वौपनिषदं पुरुषं पृच्छामि" इत्यादिश्रुतिभिरितरप्रमाणागोचरत्वोक्तेः,साक्षाद्बोधनसमर्थाया:श्रुतेर्लिङ्गद्वारा बोधकत्वकल्पने प्रयोजनाभावादनुवादरूपत्वेनाप्रामाण्यापत्तेश्च। किंच, कार्यं हि कारणास्तित्वमात्रेलिङ्गं, न तु प्रधानमेव, ब्रह्मैवेतिवा तद्विशेषेपि,बहुभिस्तार्किकैरन्यथान्यथा कल्पनात्, विशेषाध्यवसानहेत्वभावाच्चेतिभावः। ननु श्रौतं ब्रह्म वा कथं कारणं? "अस्थूलमनण्वह्रस्वमदीर्घं" "न तस्य कार्यं कारणं च विद्यते" "तदेतद्ब्रह्मा पूर्वमनपरमनन्तरमबाह्यम्" इत्यादिश्रुतिभिस्तस्यसर्वधर्मशून्यत्वप्रतिपादनात्। यदि च तथाविधमपिसृष्टिशास्त्रप्रामाण्यात् दुग्धादिवद्दध्यादिभावेनजगदाकारेण परिणमेत् तर्हि कृत्स्नपरिणामे जगद्व्यतिरेकेण ब्रह्मासत्वप्रसङ्गः, एकदेशेनपरिणामे निरवयवत्वप्रतिपादकश्रुतिव्याकोपः,उभयथाप्यनित्यत्वप्रसङ्गश्चेत्यतआह—माययेति॥

5

"मायान्तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ॥

इत्यादिश्रुतेर्मायायाश्च दुर्घटघटनापटीयस्त्वादित्यर्थः। अयं भावः— यदि कार्यजातं कारणसमसत्ताकमभ्युपगतं स्यात्तदा स्यादयं दोषः। मिथ्याभूतं तु तद्रज्ज्वादौ सर्पादिवदज्ञानादविकृतेऽपि वस्तुन्यध्यस्यमानं वस्तुतोऽनाधिष्ठानं स्पृशतीति न तद्दूषयितुं क्षमते। अद्वितीयवस्तुन एव श्रूयमाणजगत्कारणत्वनिर्वाहाय कल्प्यमाना माया धर्मिग्राहकमानादुपजीव्यानुसाराच्च मिथ्याभूतैव सिद्ध्यतीति न तत्कृतेन जगत्कारणत्वेन ब्रह्मणो विकारित्वं। तथा च भाष्यम्—"यत्र हि यदध्यासस्तत्कृतेन गुणेन दोषेण वाऽणुमात्रेणापि स न संबध्यते" इति॥ तर्हि वस्तुतः किंरूपं तद्ब्रह्मेत्याकांक्षायां यतो वेत्याद्युपक्रान्तजगत्कारणत्वनिगमनपरात् "आनंदो ब्रह्मेति व्यजानात्" इति वाक्याद्ब्रह्मवल्लीगतात् "सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्राच्च सच्चिदानन्दाद्वयस्वरूपमिति। स्वरूपलक्षणमाह—यदिति। सहजं=स्वाभाविकं, नित्यमित्यर्थः। तथाविधं यत्सुखं=परमानन्दस्तदेव मिथ्याभूतसर्वप्रपंचबाधावधित्वात्सत्=सत्यं, अत एव नविद्यतेद्वैतं यस्य तदद्वैतं च,निरावरणस्फूर्तिस्वाभाव्यात्संवित्स्वरूपं ज्ञानस्वरूपं यत्तत् ब्रह्मेति संबन्धः॥

ग्राहकविप्रतिपत्तिनिराकरणायाह—स्वप्रकाशमिति॥ भारूपत्वादेव दीपस्य दीपान्तरवत्स्वपरप्रकाशे ज्ञानान्तरनिरपेक्षमित्यर्थः। उक्तरूपे ब्रह्मणि सर्ववेदान्तानांतात्पर्यपर्यवसानप्रदर्शनपरं "तत्तुसमन्वयात्" इति सूत्रमर्थतो व्याचष्टे—श्रुतीति श्रुतयः=वेदाः, तेषां "तं ह त्रीन् गिरिरूपानविज्ञातानिव दर्शयांचकार" इतिश्रुत्यन्तरे पर्वताकारेण प्रदर्शितत्वप्रसिद्धेः शिखराणीव शिखराणि वेदान्तास्तत्संबन्धिनीनां तद्रूपाणां वा गिरां सर्ववेदान्तवाक्यानामित्यर्थः, सैव=पूर्वोक्तं ब्रह्मैव, "शैत्यं हि यत् सा प्रकृतिर्जलस्य" इतिवत्सर्वनाम्नो विशेष्यानुसारेण स्त्रीलिङ्गता । तात्पर्यभूमिः=पदंपर्यविश्रान्तिस्थानम्। ननु भवतु तथा विधं ब्रह्म, किं नस्तेनेत्याशङ्क्य पुरुषार्थपर्यवसायिवाक्यार्थं दर्शयति — स्वात्मेति ॥ असौ=पूर्वोक्तं ब्रह्म,=स्वात्मैव न तटस्थमित्यर्थः। यं=स्वतसिद्धब्रह्मभावं स्वात्मानं, विदित्वा=श्रवणाद्युपायैः साक्षात्कृत्य, सन्तः=शमादिसम्पन्ना अधिकारिणः, जनिमृतिजलधिं= जननमरणोपलक्षितानाद्यनन्तदुःखसमुद्रम्, इह= अस्मिन्नेव जन्मनि, ज्ञानोदयसमकालमेवेत्यर्थः। निस्तरंति=नितां तरंति। जीवन्मुक्ता भूत्वा पुनः संसारं नानुवर्तन्तीत्यर्थः ॥ १४ ॥

अत्र मायाशबले सार्वज्ञ्यादिसंपन्नं ब्रह्मैव जगत्कारणं, तच्च वस्तुतः

सच्चिदानन्दाद्वयमेव, स्वप्रकाशमेव, सर्वश्रुतीनां तत्रैव तात्पर्यम्, तदेव च प्रत्यगात्मेति पञ्चार्थाः प्रतिज्ञाताः । जीवन्मुक्तिश्च दर्शिता । तान् क्रमेणोपपादयितुं पंचविंशतिश्लोकैर्विरुद्धवादिमतानि दूषयिष्यन् प्रथममशेषवादिनः सामान्यतो निरस्य विजयस्थानं स्वसिद्धान्तमवलम्बते–साङ्ख्यैरित्यादिना ॥

साङ्ख्यैः प्रख्यापितं न क्षममिह जगतां निर्मितौ तत्प्रधानं
हेतुर्नैतादृशेऽर्थे प्रभवति गदितस्तार्किकैरीश्वरोऽपि ।
नाणुः काणादबौद्धक्षपणकभणितो नापि निस्साक्षिशून्यं
तस्मादास्माकमेव श्रुतिगदितपरब्रह्मसिद्धं निदानम् ॥१६॥

सांख्यैरिति॥ इह=अस्यां मनसाप्यचिन्त्यरचनात्मिकायां,जगतां=सर्वकार्याणां, निर्मितौ=निर्माणे, साङ्ख्यैः=कापिलपातञ्जलैः, प्रख्यापितं=यथा घटशरावादयो भेदा मृदात्मतयाऽन्वीयमानाः मृदात्मकसामान्यपूर्वका लोके दृष्टास्तथा सर्व एव बाह्या आध्यात्मिकाश्च भेदाः सुखदुःखमोहात्मतया अन्वीयमानाः सुखदुः खमोहात्मकसामान्यपूर्वका भवितु मर्हन्ति। यत्तु तथाविधं सामान्यं तत्त्रिगुणं प्रधानमचेतनं चेतनस्य भोगमोक्षप्रयोजनार्थं महदादिविकारात्मना परिणमत इति स्वकपोलकल्पनयैव प्रसिद्धिं नीतमित्यर्थः । प्रधीयतेऽस्मिन् प्रलयेसूक्ष्मावस्थापन्नं महदादिविकारजातमिति प्रधानं=सत्त्वरजस्तमसां साम्यावस्थालक्षणंतत्त्वं, नक्षमं=नसमर्थं। लोकेह्यल्पतरमपि गृहप्रासादादिशिल्पं कुशलतरैरेव प्रेक्षावद्भिर्निर्मीयमाणं दृष्टं, नाचेतनैः। किमङ्ग यन्मनसाप्यचिन्त्यरचनात्मकैकैकवस्तुस्वभावं जगदित्यर्थः। भवतु तर्हि क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः, केवलासङ्गचिद्रूपोऽन्यादृशोवा, क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवदित्याद्यनुमानैः सिद्धःप्रधानस्य परमाण्वादेर्वा प्रवर्तनेनाधिष्ठानात्केवलनिमित्तकारणं तथेति वदतः पातञ्जलगौतमकाणादतांत्रिकपाशुपतान्प्रत्याह—हेतुरिति ॥ एतादृशे=जगन्निर्माणलक्षणेऽर्थे, तार्किकैः=श्रुतिनिरपेक्षतर्कैरेव जगत्कारणं कल्पयद्भिरुक्तवादिभिः, गदितः=उक्तः, हेतुः = केवलनिमित्तकारणभूत ईश्वरोऽपि, न प्रभवति=नसमर्थोभवति। यथमनयुक्तेरन्यथान्यथाप्यनुमानसंभवात्, तर्काप्रतिष्ठानात्परस्परविप्रतिषेधाद्विशेषावधारणहेतुश्रुत्यननुसाराच्चेति भावः। तदुत्प्रेक्षितोपादानान्यपि दूषयन्नन्यानपि निरस्यति — नेति॥ कणादस्य छात्राः काणादाः, बौद्धाः = बुद्धस्य शिष्याः

सौत्रान्तिकवैभाषिकमतानुसारिण, क्षपणका:=आर्हतास्तैः यथापटादय-स्तन्त्वादिभिरवयवैरारभ्यन्ते, एवं तन्त्वादयोऽपि स्वावयवै रंश्वादि-भिः, तेऽपि ततोपि न्यूनैः कार्पासावयवैरिति क्रमेणावयवपरंपरा निरवयवेषु परमाणुषु विश्राम्यतीति भूतचतुष्टयपरमाणव एव सर्गादौ द्व्यणुकादिक्रमेण महापृथिव्यादीनारभन्त इति काणादगौतमीयैः, पर-माणव एव क्षणिकाः अनियतस्वभावा बाह्याभ्यन्तरवस्त्वाकारेण संहन्यन्त इति सौत्रान्तिकीयादिभिश्च, भणितः=उक्तः, अणुः=परमाणुः, जातावेक-वचनं। एतादृशेऽर्थे न प्रभवतीत्यर्थः। दृष्ट्यङ्कुरादावारम्भदर्शनान्महत एव महदुपादानत्वदर्शनाच्च परमाण्वसिद्धेः, अभ्युपगमेपितेषां मेलनासंभवादेव क्ष्यमाणत्वात् क्वचिद्वृक्षादिभ्यः शाखाद्यवयवोत्पत्तिदर्शनात्परिमाणभेदेपि प्रत्यभिज्ञया द्रव्यभेदासिद्धेरवयवावयविनोः कार्यकारणभावे विनिगमना-विरहाच्चेति भावः।

अस्तु तर्हि शून्यमेव जगद्धेतुः, मृत्पिण्डबीजादीनां पूर्वावस्थोपमर्देन शून्यतापत्तावेव घटाङ्कुरादिजन्मदर्शनात्॥ यथाहुः—"नानुपमृद्य प्रादुर्भा-वात्" इति, शून्यवादिमतं निरस्यति—नापीति॥ निर्गतः साक्षी साधको यस्य तन्निःसाक्षि, शून्यमपि न प्रभवति। अयंभावः— सर्गादौ शून्यं ससाक्षिकं निस्साक्षिकं वा हेतुरुच्यते? आद्ये शून्यसाधकसाक्षिणः सत्वात्सर्वशून्यासिद्धिः। द्वितीयेऽपि सर्वप्रमाणागोचरीभूतं साक्षिणाप्य-भास्यमानं शून्यमेव नसिद्धयति, दूरेतस्य कारणत्वं। बीजावस्थोपमर्देपि बीजाङ्कुरोभयानुगतमृदादिस्वरूपानुपमर्देन तस्यैव घटाङ्कुराद्यनेकावस्थोपा-दानत्वसंभवेन दृष्टान्ताप्रतिपत्तेश्च। वस्तुतस्तु— न बीजादिस्वरूपस्यापि शून्यतापादनमुपमर्दः। संस्काररूपेण सर्ववस्तूनां सत्त्वोपगमात्। किन्त्वङ्कु-राद्यवस्थया तिरोभावमात्रमिति वक्ष्यते। अतः परिशेषात्प्रामाणिकत्वाच्च स्वमतं निरूढमित्याह—तस्मादिति॥ आस्माकं=अस्माकं परमहंसपरिव्रा-जकानां नित्यापरोक्षानुभवसिद्धं "तस्येदम्" इत्यणि "तस्मिन्नणि च युष्मा-कास्माकौ" इत्यस्माकादेशः। श्रुतिगदितं=सकलोपनिषद्भिस्तात्पर्येण प्रति-पादितं परं=उत्कृष्टं,यद्ब्रह्म तदेव निदानं=जगतामादिकारणं, सिद्धं=निरूढमि-त्यर्थः॥ १६॥

इत्थं सामान्यतो निरस्तेष्वपि बाह्यतंत्रेषु केषांचिन्मुमुक्षूणां मन्दमति त्वादस्वतन्त्रप्रज्ञानां, "ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत्" इत्यादिश्रुतिभिः कपिलादीनां माहात्म्यख्यापनात्तच्छिष्यपरं-

परास्तु तेषां सर्वज्ञत्वादिप्रसिद्धिर्दिग्भूतानां बहुतरतर्कोपबृंहितानां तद्ग्रन्था नां चदर्शनात्तद्दर्शितमोक्षोपायेऽपि प्रमाणत्वबुद्धिः स्यात्, तथा सत्यन्धगोलाङ्गू लन्यायेन तदुपन्यासने श्रौतसन्मार्गपरिभ्रंशात्पुरुषार्थो ह्याहन्येतेति बाद-रायणभगवत्पादाचार्यपरंपराप्रदर्शिततर्कैस्तत्तन्मतानि विशेषतोऽप्याभास यिष्यन् प्रधानमल्लनिबर्हणन्यायेन कापिलं मतमादौ निरस्यति—नाचैतन्या-दित्यादिश्लोकद्वयेन ॥

मू० ॥ नाचैतन्यात्प्रधानं प्रभवति चलितुं तन्निसर्गस्थितं चेत्
नित्यं सर्गप्रसङ्गो नियतिरपि यतः सर्गपूर्वा न पूर्वम् ।
धर्मो निर्हेतुकः स्यात्कथमथ न भवेद्बन्धमोक्षाव्यवस्था
निःसौख्यं नापि मोक्षं स्पृहयति मतिमान्कापिलं तेन दुष्टम् ॥

नाचैतन्यादिति ॥ गुणसाम्यावस्थालक्षणं प्रधानं सर्गादौ चलनेन साम्यावस्थातः प्रच्युतं सन्महदादिविकारं जनयेत् । तच्च चलितुमेव तावन्न प्रभवति=न समर्थं भवति ॥ कुतः? अचैतन्यात्=स्वतश्चैतन्यशून्यत्वाच्चेतनान्तरानधिष्ठितत्वाच्च । लोके हि मृत्सुवर्णाद्यचेतनं चेतनान्तराधिष्ठितमेव कार्योन्मुखप्रवृत्तिकं दृष्टं, दृष्टानुसारिणी ह्यन्यकल्पनेत्यर्थः । ननु यथा वत्स-विवृद्धये गवाद्यूधसः क्षीरमचेतनमेव प्रवर्तते, यथा वा नद्यादिजलं लोको-पकाराय स्वयमेव स्यन्दते, तथा प्रधानमचेतनमपि पुरुषस्य भोगापवर्ग-सिद्धये स्वत एव प्रवर्तिष्यत इति चेन्न । पयःप्रवृत्तेर्धेनुस्नेहवत्सचोषणादि-चेतनव्यापारसापेक्षत्वेन जलस्यन्दनादेर्निम्नप्रदेशादिनिमित्तान्तरसापेक्ष-त्वेनोभयत्रापि सर्वान्तर्यामिपरमेश्वराधीनत्वश्रुतेश्च दृष्टान्तासिद्धेः ॥ ननु सत्त्वं लघु प्रकाशस्वभावं, तमस्तु गुरु आवरणस्वभावं तयोरान्तरालिकं लघुत्वाद्वह्निज्वालावदूर्ध्वं जिगमिषतः सत्त्वस्य, गुरुत्वादधः पिपतिषतस्तम-सश्च विष्टम्भकं रजश्चलनस्वभावं, तच्च स्वभावाच्चलत्सत्त्वतमसी चालयती-त्यन्यथासिद्धा प्रधानस्य कार्योन्मुखी प्रवृत्तिरित्याशङ्क्याह—तदिति । तत्=प्रधानं, निसर्गस्थितं=स्वाभाविकचलनविशिष्टं चेदभ्युपगम्येत तर्हि विरामे कारणाभावान्नित्यं=अनवरतमेव, सर्गस्य=सृष्टेः, प्रसङ्गः=चलनस्वभावेन रजसा सदैव चाल्यमानैर्गुणैः प्रतिक्षणं कार्यारंभप्रलयासिद्धिः, गुणसाम्याव-स्थालक्षणप्रधानासिद्धिश्चेत्यर्थः ॥

ननु प्राणिकर्मवशाद्व्यवस्था भविष्यति । पूर्वसर्गभोग्यानां कर्मणां प्राणिभिः भोगेन क्षपणादेतत्सर्गभोग्यानां चापरिपाकेन फलानौन्मुख्याद

न्तरालेऽर्थसिद्धः प्रलयः॥ सर्गादौ च कर्मणां परिपाके सति निमित्तसद्भावात्प्रधानप्रवृत्तौ अर्थसिद्धः सर्ग इत्याशङ्क्याह—नियतिरिति॥ नियतिः= प्राक्सर्गसंचितं धर्माधर्मलक्षणप्राण्यदृष्टमपि, सर्गपूर्वा=पूर्वसृष्टिसिध्यधीना। तत्सिद्धिः पूर्वं न संभवति। सिद्धायां हि प्रधानप्रवृत्तौ महदादिक्रमेण शरीरारंभे अदृष्टसिद्धिः, तत्सिद्धौ च प्रधानप्रवृत्तिरित्यन्योन्याश्रयानवस्थादिदोषप्रसङ्गात्। कर्मणोप्यचेतनत्वाविशेषात्तदुपभोगपरिपाकाद्यभिज्ञचेतनाधिष्ठानं विना फलोन्मुखप्रवर्तकत्वयोरसिद्धेः।इदन्तु कर्मणां प्रधानप्रवृत्तिहेतुत्वमभ्युपगम्योक्तम्। वस्तुतस्तु साङ्ख्यनये धर्मेणाऽधर्मकृतसुखात्मकसृष्टिप्रतिबन्धोऽपनीयते, एवमधर्मेणाऽपि धर्मकृतो दुःखात्मकसर्गप्रतिबन्धोऽपनीयते, प्रतिबन्धापगमे च स्वयमेव प्रधानमुच्चावचसर्गे प्रवर्तते। यथाहुः— "निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्" इति। निमित्तं धर्माधर्मादि, प्रकृतीनां मूलप्रकृतेः महदादिप्रकृतिविकृतीनाञ्चाऽप्रयोजकं स्वस्वकार्यसर्गे, किन्तु वरणस्य = प्रतिबन्धकस्य, भेदः = भङ्गः, ततः=निमित्ताद्भवति, क्षेत्रिकवत् = यथाक्षेत्रकारो केदारं केदारान्तरोदकेन पिप्लावयिषुरपो न पाणिनाऽऽकर्षति किन्तु वरणं तासां भिनत्ति तद्वदिति पातञ्जलसूत्रार्थः। तथाच प्रलयेपि प्रतिबन्धकापनयहेतुधर्माधर्मयोः सत्वात्सदैव सर्गप्रसङ्गो दुरपह्नवः। किंचासङ्गोदासीनेषु पुरुषेषु वास्तवस्याध्यासिकस्य वा प्रकृतिसंगस्यानभ्युपगमात् निर्हेतुकः,असंबंधहेतुको वा बन्धोवाच्यः। आद्ये तस्यानागन्तुकवह्न्यौष्ण्यवद्वस्तुस्वभावत्वापत्त्या साधनसहस्रैरपि निवर्तयितुमशक्यत्वादनिर्मोक्षप्रसङ्ग इत्यभिप्रेत्याह—बन्धइति॥ निर्हेतुकः=कारणनिरपेक्षः। द्वितीयेप्याह — कथमिति॥ अथ=अनन्तरं, द्वितीयपक्षे बन्धमोक्षयोरव्यवस्था=विशेषाभावः, कथं नभवेत्? असंबन्धेपि प्रकृतेर्बंधहेतुत्वे मुक्तात्मनामपि बन्धप्रसङ्गः। यदिचाऽसंबद्धेनापि प्राकृतेन विवेकज्ञानेन मोक्षोऽभ्युपगम्येत तर्हि यस्य कस्यचिद्विवेकज्ञानेन सर्वमोक्षप्रसङ्गः, असंबद्धत्वाविशेषात्। यदि च बुद्धिगतावेव बन्धमोक्षौ पुरुषेषु व्यपदिश्येते, तर्हि मुक्तपुरुषेष्वपि व्यपदिश्येयातामिति भावः। यत्तु वदन्ति "दृष्टामयेत्युपेक्षकएकोदृष्टाहमितिविरमत्यन्या। सति संयोगेपि तयोः*प्रयोजनं नास्ति सर्गस्य"॥ इति, प्रयोजनं भोगापवर्गलक्षणं मुक्तात्मनां नास्तीत्यर्थ इतिच, तत्परस्पराभिप्रायप्रयोजनाभिज्ञचेतनयोः स्यात्, न निर्विकाराचेतनयोः, निष्पन्नेऽपि घटे कुलालचक्रभ्रम्यादिदर्शनादिति भावः॥

* तयोः संयोगेपि सर्गस्य जनने प्रयोजनं=प्रयुज्यते अनेनेति व्युत्पत्त्या सहकारिकारणं नास्तीत्यर्थः।

कपिलाभ्युपगतमुक्तेरपुरुषार्थत्वात्तच्छास्त्रस्य वैफल्यं चेत्यभिप्रेत्याह — निःसौख्यमिति॥ मतिमान्=प्रेक्षावान्, निःसौख्यम्=अनानन्दं पाषाणादिभावकल्पं तदभिमतं मोक्षं, न स्पृहयति=नेच्छति, तथाच मोक्षार्थी पुरुषः शास्त्रे न प्रवर्तेतेति भावः॥ईप्सिततमार्थस्येव "स्पृहेरीप्सितः" इति संप्रदानत्वादीप्सिततमत्वविवक्षायां कर्मत्वमेवेति मोक्षमिति द्वितीयाप्रयोगः॥ आत्यन्तिकदुःखनिवृत्तिरूपत्वात् स्पृहयिष्यतीति चेन्न। आत्मनो हि सुखरूपत्वे सर्वदुःखप्रहाणे निर्विघ्नस्वस्वरूपानन्दानुभवस्य परिशेषात्तदर्थेन दुःखाभावं स्पृहयेत्। असुखरूपत्वे तु तस्य लोष्ठादिवत्स्वतःप्रेमाविषयत्वात्संभवान्न किञ्चिदात्मार्थं स्पृहयेत्, किंपुनर्दुःखाभावं। किञ्चात्मनः त्वया नित्यानुमेयत्वाभ्युपगमेन स्वात्मनः परात्मनश्चाऽविशेषात्परस्मिन्निव नात्मन्यपि दुःखमनुभवितुं शक्यमिति न तदभावं स्पृहयेदिति सर्वथा कापिलं मतं निर्युक्तिकं निष्प्रयोजनं चेत्याह—कापिलमिति॥ कपिलेन प्रोक्तं कापिलं शास्त्रं, तेन=उक्तदोषनिवहेन दुष्टं=दोषयुक्तम्, तथाचानुपादेयमिति भावः॥१७॥

इत्थमभ्युपेत्य पराभिमतौ भोगमोक्षौ तन्निरासेऽस्मदादौ प्रधानप्रवृत्तिमोक्षदात्वं पुरुषार्थगुणिनश्च न संभवतीत्युक्तं, इदानीं तयोरप्यनुपपत्तिरिति दर्शयति—

**किञ्चाऽकर्तैव भोक्ता यदि यत कृतहानाकृताभ्यागमःस्या-**
**त्कीदृग्भोगोऽप्यसङ्गेऽनतिशयिनि भवेत्तेन भोग्यस्य कोऽर्थः।**
**कीदृक्तस्याविवेकः कथमथ स भवेद्भोगहेतुर्विवेकः**
**कस्य स्यात्तेन किं स्यादिति हि विमृशतो दुर्वचं ब्रह्मणोऽपि॥**

किञ्चेति॥ यद्यकर्तैव सन् पुरुषः कर्मफलानां भोक्तेत्यभ्युपगम्येत, प्रकृतिश्च कर्त्र्यभोक्त्रीति, तदा कृतस्य हानं वैफल्यं अकृतस्य कर्मणः फलाभ्यागमःस्यात्, तथाच धर्माधर्मशास्त्रवैफल्यप्रसङ्गः। उपलक्षणं चैतत्। तेन देहातिरिक्तात्मासिद्धिप्रसङ्गः, यज्ञदत्तापराधे देवदत्तादिदण्डप्रसङ्गः, अन्यस्मिन् भुञ्जानेऽन्यस्य तृप्त्यादिप्रसङ्गश्च बोध्यः। ननु न वयं कर्तृत्वशून्यभोक्तृत्वमभ्युपगच्छामः, कर्मणां गुणप्रवृत्तिप्रतिबन्धनिरासार्थत्वस्योक्तत्वात्। किन्तु शक्तिकृतं। दृक्शक्तिमत्त्वात्पुरुषो भोक्ता, सर्गशक्तिमत्त्वाच्च गुणा भोग्याः, तयोर्भोक्तृभोग्यशक्त्योर्वैयर्थ्यं माभूदित्यौत्सुक्यात्प्रवृत्तौ भोक्तृभोग्यरूपयोस्तप्यतापकयोरभिमानलक्षणसंबन्धाद्दर्थसिद्धो भोगस्तापलक्षण इत्याशङ्क्याह—कीदृगिति॥ असंगे=वस्तुतो गुणसंबंधशू-

न्ये, अतो निर्विकारत्वाच्च अनतिशयिनि=गुणसंबन्धप्रयुक्तातिशयानाधारे, पुरुषे तापलक्षणो भोगोपि कीदृक्, वक्तुमेवाऽशक्य इत्यर्थः ॥

ननु रजसा सत्वेतप्यमाने सत्वानुसारी पुरुषोऽपि तप्यत इवेति भोक्तृत्वमुपचर्यतइतिचेन्न। नह्युपचारमात्रेणभोक्तृतासिद्धिः। नह्यग्निर्माणवक इत्युपचारमात्रान्माणवको दहतिप्रकाशयति वा। किंच,प्रधानं पुरुषस्य भोगार्थं प्रवर्तमानं स्वार्थमपि कंचिदुद्दिश्यैव प्रवर्तेत, भृत्यदारादीनां स्वार्थपुरस्कारेणैव राजाद्युपभोगाय प्रवृत्तिदर्शनात्। न च भोक्तृशक्तिहीनस्य तस्य कश्चित्स्वार्थः संभवतीत्यभिप्रेत्याह—तेनेति। तेन=पुरुषभोगेन, भोग्यस्य=प्रधानस्य कः अर्थः स्वार्थः येन प्रवर्तेतेति शेषः। चेतनस्य प्रवृत्तिरेव स्वार्थनिबन्धना नाचेतनस्येति यद्युच्येत, तर्हि प्रयोजनोद्देशेन प्रवृत्तिरपि चेतनस्यैवेति भोगमोक्षार्थं प्रधानप्रवृत्तिरित्यसङ्गतमेवेति भावः। एतेनौत्सुक्यनिवृत्यर्थं प्रवृत्तिरित्यपि निरस्तम्। औत्सुक्यस्यापि चेतनधर्मत्वात्। ननु प्रधानपुरुषयोः पङ्ग्वन्धयोरिव प्रवृत्त्यसामर्थ्येऽप्यनाद्यविवेकप्रयुक्तपरस्पराविवेकलक्षणसंबन्धादेकतामिवापन्नयोः प्रवृत्तिर्भोगश्च सेत्स्यतीत्याशङ्क्याविवेकं निरस्यति—कीदृगिति। अविवेकः कीदृक्=किंप्रकारः, किंविवेकज्ञानाभावः? उतैक्यज्ञानं? उत तत्संस्कारः?नाद्यः, साङ्ख्यैरभावाख्यतत्वान्तरानभ्युपगमात्। अधिकरणात्मकाभावस्य विवेकज्ञानोत्तरमपि सत्वे नानिर्मोक्षप्रसङ्गाच्च। नद्वितीयः,भिन्नयोरैक्यज्ञानस्य सद्विषयत्वासंभवादन्यथाख्यात्यनभ्युपगमाच्च। अनिर्वचनीयैक्यसिद्धावस्मन्मतप्रवेशापत्तेः। परैर्भ्रान्त्यात्मकविशिष्टज्ञानानभ्युपगमाच्च। अतएव न तृतीयः। अनुभवं विना संस्कारायोगादितिभावः। अस्तुवान्यादृशस्तथापितस्याश्रयो दुर्निरूप इत्याह—कस्येति। अविवेकः प्रकृतेः, उत कार्याणां, उत पुरुषस्य धर्मः।नाद्यौ। अचेतनानां चेतनधर्मविवेकाविवेकाश्रयत्वाप्रसिद्धेः। नतृतीयः। निर्विकारासङ्गचिन्मात्रस्वरूपस्याविवेकाख्यधर्मसंबन्धायोगात्। अविवेकान्तरात्तदुक्तावनवस्थाद्यापत्तेः। अनयैवदिशा बुद्धितद्धर्मैरहंममेत्यभिमानलक्षणः संबन्धोपि निरसनीयः।

अविवेकाभ्युपगमेऽपि तस्य भोगप्रयोजकता न संभवतीत्यभिप्रेत्य पृच्छति—कथमिति॥ अथ=अनन्तरं अभ्युपगमेपीत्यर्थः। सः=अविवेकः भोगहेतुः=तापनिमित्तं, कथं=केन प्रकारेण भवेत्। अयोग्ये तेन भोगजननायोगादन्यथाऽभोग्येपि भोगापत्तेरिति भावः। अविवेकोक्तदोषान्विवेकेऽपि दर्शयति—विवेकः कस्यस्यादित्यादिना॥ पराभिमतविवेकज्ञानस्य मोक्षहेतु

त्यं निरस्यति—तेनेति। पुरुषे आध्यासिकस्य वास्तवस्य वा ज्ञाननिवर्त्यबन्धस्याऽनभ्युपगमाद्गुणानां च नित्यत्वान्मोक्षाऽसंभवाद्विवेकज्ञानवैफल्यमिति भावः ॥ इति=उक्तप्रकारेण, विमृशतः=विचारयतः, साङ्ख्यदर्शनं सर्वज्ञस्य ब्रह्मणः=हिरण्यगर्भस्यापि, दुर्वचं=दुरुपपादं, किमन्यैर्मन्दमतिभिरितिभावः। इत्थं कापिलदर्शनस्य बहुतरतर्कगाढत्वशङ्का निरस्ता। शिष्यपरंपरासु कपिलस्य सर्वज्ञसिद्धत्वादिप्रसिद्धिस्तु कणादगौतमबुद्धार्हतादिष्वपि तुल्या। नचैषां सिद्धानामेकमत्यं, नवा कस्यचिद्विशेषावधारणे प्रमाणमस्ति। ब्रह्मकारणत्वैकात्म्यादिपरप्रत्यक्षश्रुतिविरुद्धार्थवादित्वं च सर्वेषां समानं। "ऋषिं प्रसूतम्" इति श्रुतिस्तु सगरपुत्राणां प्रतप्तुर्भगवदवतारस्य माहात्म्यख्यापनपरा, नार्षदिककपिलस्य। नचायमेव स इतिभ्रमितव्यं। तस्येश्वरत्वेनेश्वरनिराकरणव्याघातात्। अतोऽन्यएवासौ। श्रुतिसामान्यमात्रं तु कपिल इति। एवं कणादगौतमादिष्वपि बोध्यम्। भवति चान्या मनुव्यासादिमाहात्म्यख्यापनपरा श्रुतिः—"यद्वै किं चन मनुरवदत्तद्भेषजं" "सहोवाच व्यासः पाराशर्यः" इत्याद्या। मनुना च—

"सर्वभूतेषु चात्मानं सर्वभूतानिचाऽऽत्मनि।
सम्यं पश्यन्नात्मयाजी स्वाराज्यमधिगच्छति ॥"

इति श्रौतं सार्वात्म्यदर्शनं प्रशंसता तद्विरुद्धनानात्मदर्शनं कपिलादिसम्मतं निन्द्यत इति गम्यते। व्यासेनापि महाभारते—

"बहवः पुरुषा ब्रह्मन्नुताहो एक एव तु।" इति सन्दिह्य,
"बहवः पुरुषा राजन् साङ्ख्ययोगविचारिणाम्"।
इति परेषां मतमुपन्यस्य तन्निरासायोक्तं—

"ममान्तरात्मा तव च ये चान्ये देहसंस्थिताः।
सर्वेषां साक्षिभूतोसौ न ग्राह्यः केन चित्कचित् ॥
विश्वमूर्धा विश्वभुजो विश्वपादाक्षिनासिकः।
एकश्चरति भूतेषु स्वैरचारी यथा सुखम् ॥"

इति श्रौतमैकात्म्यमेव दर्शितम्। एवमन्यैरपीति तदेवानवद्यम् ॥१८॥

इत्थं निरस्ते कापिलसमये, योगिमाहेश्वरकणभक्षाऽक्षचरणानां प्रकृत्याद्यधिष्ठातृकेवलनिमित्तकारणेश्वरवादोप्यद्वितीयात्मपरिशेषपर्यवसिताऽभिन्ननिमित्तोपादानकारणस्वरूपश्रौतपक्षप्रतिपक्षत्वाद्विशेषतो निरसनीय एवेति तन्निरासायाह—नेश इत्यादिश्लोकद्वयेन—

**मू०॥नेशोऽधिष्ठातुमीशोऽतनुकरणगुणस्तार्किकाणां प्रधानं**
**स्याच्चेत्तन्वक्षवत्त्वं सुचरितदुरितोद्भूतभोगप्रसङ्गः ।**
**दुःखाढ्यं कुर्वतोऽस्य प्रसरति विषमाचारनैर्घृण्यदोषः**
**कर्मभ्योऽथक्वाऽवस्थितिरिति विफलत्वाऽन्यथासिद्धयःस्युः॥**

नेशइति ॥ तार्किकाणां=तर्कप्रधानानुमानेनैव कारणत्वं निरूपयतां योगिप्रभृतीनां, अतनुकरणगुणः=तनुः=शरीरं, करणानि=बाह्याऽऽभ्यन्तरेन्द्रियाणि, बाह्योपकरणानि च, गुणः=तत्तत्कार्यानुकूलेच्छाप्रयत्नादयस्तद्रहितश्चैतन्यमात्रस्वभावोऽन्यादृशो वा, ईशः=पराभिमतेश्वरो निरवयवं रूपादिहीनत्वादप्रत्यक्षं च प्रधानं, परमाणूनामप्युपलक्षणमेतत् । अधिष्ठातुं=कार्यानुगुणतया प्रवर्तयितुं, नेशः = न समर्थः । शरीरकरणोपकरणसंपन्नश्चेतनोऽहि कुलालादिः मूर्तं सावयवं रूपादिमन्मृदादि चक्षुरादिनोपलभ्य हस्तादिना स्पृष्ट्वा घटादिभावं नयतीति दृष्टम् । भवदभिमतेश्वरस्तु तद्विपरीतस्तद्विपरीतमुपादानं नोपलब्धुं स्प्रष्टुं वा क्षमत इत्यर्थः॥ननु यथा देही देहेन्द्रियादिकं विनैवसाधनांतरेणाऽधिष्ठायव्यवहरति,तथेश्वरोपि प्रधानाद्यधिष्ठास्यतीत्याशङ्कामुद्भाव्याऽनिष्टप्रसंजनेन परिहरति–स्याच्चेदिति। तनुः=शरीरं अक्षाणि=इन्द्रियाणि,तनूनि=सूक्ष्माणि इन्द्रियाणि वा,तैस्तुल्यंतद्वत् तद्भावस्तन्वक्षवत्त्वं प्रधानादेः स्यादितिचेत्तर्हि सुचरितेन=पुण्येन, दुरितेन=पापेनचउद्भूतस्य भोगस्य जीव इवेश्वरेपि प्रसङ्गो दुर्वारः । भोगदर्शनाद्धि देहिनो देहेन्द्रियाऽधिष्ठातृत्वं कल्प्यते। तद्वदीश्वरस्य प्रधानाधिष्ठातृत्वकल्पने तत्कल्पकभोगोप्यवश्यं कल्प्येतेति भावः॥ अथवा अस्तु कुलालादेरिवेश्वरस्यापि देहेन्द्रियादिकं काहानिस्तत्राह—स्याच्चेदिति ॥ ईश्वरस्य तन्वक्षवत्त्वं देहेन्द्रियादिमत्त्वं स्याच्चेत्=अभ्युपगम्येत यदि, तर्हि संसारिवदेव सुकृतदुष्कृतफलभोगप्रसङ्गः । देहादेर्भोगायतनत्वादिनियमादिति भावः । किंचेश्वरः करुणानिधिर्वीतरागः स्वतन्त्रः प्राणिदुःखनिदाने सर्गे न प्रवर्तेत । प्रवर्तमानश्च पराधीनः?स्वार्थरागी वा? स्यात् । तत्राद्ये तस्य प्रवर्तयिताऽन्यस्तस्याप्यन्य इत्यनवस्था, अस्मदादिसाम्यं चस्यादिति । द्वितीयावलम्बने तत्राप्याह—दुःखाढ्यमिति । दुःखाढ्यं=दुःखबहुलं जगत्कुर्वतः, अस्य=आनुमानिकेश्वरस्य कांश्चिद्देवादीन् स्वभावसुखिनः करोति, नारकानतिदुःखिनो, मानुषादीनुभयस्वभावानिति निष्पादनमेव विषमस्याचरणं विषमाचारः, निर्घृणस्य भावो नैर्घृण्यं निर्दयत्वं चेति दोषः प्रसरति। तथाचानीश्वरता प्रसङ्गः, क्लेशकर्मत्यादिभयकुन्तलक्षणव्याहतिश्चेति भावः ।

मनसः, ततोऽनिरुद्धाख्याऽहंकारस्योत्पत्तिमभ्युपगच्छन्तः सात्वता अपि परास्ताः। "न जायते म्रियते वा विपश्चित्" इत्यादिश्रुतिविरोधात्। अभिन्न वोत्पन्नजीवस्यप्राक्संचितसुकृताद्यभावेनशरीराद्यसंभवात्। चैतन्यस्यापरिणामिनोवास्तवोपादानत्वाऽसंभवात्परिणामित्वेत्वनित्यत्वापत्तेश्चेति।श्रौतेश्वर कारणतापक्षेप्यधिष्ठानानुपपत्त्यादयो दोषास्तुल्या इति चेन्न। श्रौतेश्वरस्याऽनिर्वचनीयसर्वशक्तिसम्पन्नमायाशबलत्वेन सर्वशक्तिमत्वात्। किंच, न वयमनुमानबलेन कारणं व्यवस्थापयामः। किन्तु श्रुतिबलेन। श्रुतिर्हि रूपादिविषये चक्षुरादिवत्स्वविषये निरपेक्षं प्रमाणं। यस्तु श्रुतिसिद्धार्थे कथंचिद्दृष्टार्थानुसारोऽप्यवलम्ब्यते तत्सुहृद्भावमात्रेण। केवलानुमानं तु दृष्टसाधर्म्य मात्रावलम्बनं नकिंचिद्दृष्टविपरीतं कल्पयितुं क्षमते। यथाहुराचार्यवाचस्पतिमिश्राः "आगमानपेक्षितमनुमानन्तु दृष्टसाधर्म्येण प्रवर्तमानं दृष्टविपर्यये तु तुषादपि बिभेतितराम्" इति॥ अन्यथासिद्धिः=आवश्यकमायाशबलब्रह्मणैव जगन्निर्माणसिद्धिः॥ अयं भावः॥धर्माधर्मसापेक्षत्वमीश्वरस्य वदता धर्माऽधर्मयोःप्रमाणान्तराप्रसराद्वश्यं श्रुतिरेव मानमित्यभ्युपगन्तव्यम्। तथाचार्धजरतीयन्यायायोगाज्जगत्कारणेपि सैव मानमित्यभिन्ननिमित्तोपादानब्रह्मसिद्धौ तेन परकल्पितेश्वरप्रधानादेरन्यथासिद्धिरिति। अत्र साङ्ख्ययोगिनां श्रुतिविरुद्धः प्रधानकारणवाद ईश्वरताटस्थ्यं च निरस्तम्। पुरुषनानात्वं त्वग्रे निरसिष्यते। यस्तु श्रुत्यविरुद्धांशः पुरुषस्याऽसङ्गचिद्रूपत्वं, अष्टाङ्गादिकं च तदभ्युपगम्यत एवेति बोध्यम्॥ १९॥

नन्वसङ्गोदासीनचिद्रूप ईश्वरः प्रधानस्याऽमूर्तस्याधिष्ठानेऽस्त्वसमर्थः नित्यज्ञानेच्छाकृतिमान् सर्वमूर्तद्रव्यसंयोगी तु मूर्तैः परमाणुभिः पृथिव्यादीन् सृजतीति युक्तमिति कणभक्षाऽक्षचरणयोः पक्षमपि विशेषतः परीक्ष्य निरस्यति—सर्वज्ञ इत्यादिश्लोकद्वयेन—

मू०॥ सर्वज्ञः सर्वलिप्सुः सकलकृतियुतो नित्यमीशो यदिस्या
त्सर्वंकार्यं सदास्यादुदयभृतिलया यौगपद्येन च स्युः।
बाह्योपादानवत्स्यात्तनुकरणधियां विश्वसर्गे व्यपेक्षा
निस्तर्कं चानुमानं कृतिरपिहियतश्चेष्टयाऽर्थं विधत्ते॥२०॥

सर्वज्ञइति॥ यदि पराभिमतईश्वरः, नित्यम्=अनवरतमेव, सर्वज्ञः=सर्वविषयकैकज्ञानवान्, सर्वलिप्सुः=सर्वविषयकैकेच्छावान्, सकलकृतियुतः=सर्वजननानुकूलैकयत्नवान्, स्यात्तदा सर्वंकार्यं सदैवस्यात्, तथाच

कारणत्वस्य कार्यनियतपूर्ववृत्तित्वरूपत्वेनेतरेतराश्रयात्। नाप्युत्पत्तिमत्त्वं, उत्पत्तेश्चात्मनः सत्त्वमाद्यक्षणसम्बन्धो वेति युक्तं। कारणसत्त्वेनाप्यसतः सत्त्वायोगादाद्याऽसिद्धेः, क्षणानां दुर्लक्ष्यत्वेनानुमतव्यावर्तककार्यमशून्यत्वेन च द्वितीयस्याप्ययोगात्। नकस्मात्तु दण्डनियतपश्चाद्भावित्वं यद् दण्डकार्यत्व-मित्येवं (1)प्रातिस्विकरूपेण कथंचिद्विशिष्टं भिन्नमेव नविशेषपदम्। तच्चाऽननुगमात्र कार्यतावच्छेदकम्। अन्यतमत्वादिनाकथंचिदनुगमेऽप्यनन्तदिग्व्याप्यभि-चारकल्पगुभूतवस्त्वादिविशेषधर्मावच्छिन्नं प्रति कुलालादेः प्रातिस्विक-रूपेणैव कर्तृत्वकृतेः न गुरुभूतसन्दिग्धसर्वधर्मित्वाविरुद्धसामान्यधर्मस्यकार्यता-वच्छेदकत्वम्। किंच कार्यत्वस्यैव कार्यतावच्छेदकत्वे आत्माश्रयापत्तेः। ज्ञानेच्छाप्रयत्नेष्ववच्छेदकत्वेन शरीरस्यान्वयव्यतिरेकसिद्धा कारणता नि-त्यज्ञानेच्छाकृतिस्वीकारे भज्येतेति प्रतिकूलतर्काणां सत्त्वाच्चानुमानमेव दुर्ल-भमिति भावः। ननु यत्नं विना कुलालादेर्घटादिजनकत्वाऽयोगात्कार्यमात्रे यत्नस्य कारणता आवश्यकी। कार्यत्वं चातिरिक्तमेवाऽखण्डं कार्यतावच्छे-दकं। तथाच क्षित्याद्यनुकूलयत्नस्य जीवेष्वसंभवादीश्वरस्तदाश्रयः सेत्स्य-तीत्याशङ्क्याह—कृतिरिति॥ कृतिः= यत्नोऽपि, हि=यस्मात्कारणाच्चेष्टया अर्थं=कार्यं, विधत्ते=जनयति न साक्षादित्यर्थः। तथाच न कृतिः कार्य-मात्रे कारणं, किन्तु चेष्टात्वाऽवच्छिन्नं प्रत्येव, चेष्टात्वं च शरीरजन्यतावच्छे-दकः क्रियात्वव्याप्यजातिविशेषः। नचोत्क्षेपणत्वादिना साङ्कर्यं। साङ्कर्यस्य जातिबाधकत्वाऽनभ्युपगमात्। अखण्डोपाधिर्वा चेष्टानुशक्यतावच्छेदक इति भावः। इत्थंच चेष्टाऽननुविधायिनि मेघच्छायादौ यत्नाऽदर्शनादीश्वरस्य च क्षित्यादिजननानुकूलशरीरचेष्टानभ्युपगमाद्दर्शितानुमाने चेष्टाजन्यत्वं द्रव्यत्वादिपक्षधर्मावच्छिन्नसाध्यव्यापकत्वात्तदवच्छिन्नसाधनाऽव्यापकत्वा-च्चोपाधिरित्यपि बोध्यम्॥ २०॥

इत्थं तार्किकाणामीश्वरकारणतावादं निरस्य परमाणुकारणतावाद-मपि निरस्यति—

**कस्मादण्वोः क्रियास्यात्कथमथ मिलितौ निष्प्रतीकौ कथं वा**
**कार्यं ताभ्यां तृतीयं किमिति च न महत्पारिमाण्डल्यतः स्यात्।**

---

(1) प्रातिस्विकरूपेण=भिन्नभिन्नरूपेण॥

तेभ्यः कस्मान्महान्स्यादिति ममिति पुनरप्यर्थे नित्या न ते स्या-
दित्यण्वाणुः कथं वा निरवयव इति ब्रूह्यसत्कार्यवादिन्? ॥

कस्मादि॥ हे असत्कार्यवादिन्=कारणात्मना प्रागसदेव कारणादुत्पन्नाभिन्नं कार्यमुत्पद्यत इत्यभ्युपगच्छन्, इति नैयायिकवैशेषिकयोस्तंत्रेण सम्बोधनम्। एवम् अग्रिमवाक्येष्वपि योज्यम्। ब्रूहि=उत्तरमिति शेषः। एवं हि तयोः प्रक्रिया—परमाणवः किल दोधूयमानाः कंचित्कालमनारब्धकार्याः यथायोगं रूपादिमन्तः पारिमाण्डल्यपरिमाणाश्चावतिष्ठन्ते। ततः सर्गादौ जीवादृष्टवशात् क्रियावन्तस्ते परस्परं संयुज्य द्व्यणुकादिक्रमेण कृत्स्नकार्यद्रव्यमारभन्ते। परमाण्वादिकारणगतरूपादिगुणाश्च क्रमेण द्व्यणुकादौ स्वसमानजातीयं गुणान्तरमारभन्ते। परमाणुर्द्व्यणुकगतेऽणुत्वह्रस्वत्वे तु न परिमाणान्तरमारभेते। परिमाणस्य स्वसमानजातीयोत्कृष्टपरिमाणजनकत्वनियमेनाणुत्वह्रस्वत्वयोर्जनकत्वासंभवात्। किन्तु परमाणुद्वित्वसंख्यैव द्व्यणुकेऽणुत्वह्रस्वत्वे, द्व्यणुकत्रित्वसंख्यैव च त्र्यणुके महत्त्वदीर्घत्वे चेति आरभन्ते। परमाणवस्तु नित्या निरवयवाश्चेति। तां क्रमेण दूषयिष्यन्, संयोगस्य क्रियाधीनत्वात्परमाणुष्वाद्यक्रियैव नोपपद्यत इत्याह—कस्मादिति। अण्वोः=परमाण्वोः, क्रिया=संयोगानुकूलं चलनं सर्गादौ कस्मात्कृतः स्यात्। किं प्रयत्नवदात्मसंयोगात्? उताऽदृष्टवदात्मसंयोगात्? उत—मूर्तद्रव्यान्तरनोदनाख्य संयोगात्? उत वेगादिवशात्? नाद्यः, निरस्तत्वात्। न द्वितीयः, प्रलयारम्भकालेऽपि सर्गप्रसङ्गात्। न तृतीयः, प्रलये परमाण्वतिरिक्तमूर्तद्रव्यानभ्युपगमात्, परमाणुतत्संयोगस्यापि क्रियापेक्षत्वेनान्योन्याश्रयचक्रकानवस्थानां प्रसङ्गात्। न चतुर्थः, प्रलयाद्यक्षणमारभ्य यावत्सर्गं प्रतिपरमाणु क्रियापरम्पराकल्पनाया अप्रामाणिकत्वादतिगौरवप्रसक्तत्वाच्च। किञ्च, पूर्वप्रलयेऽपि परमाणुपर्यन्तमवयवविभागाद्ध्वंसः॥ तत्रापि परमाणुक्रियैव कारणं इति कोऽप्यस्माद्विभागान्निवृत्याऽदृष्टस्य सुखदुःखान्यतरपर्यवसायित्वनियमेन तदननुकूलप्रलयस्याऽदृष्टहेतुत्वानुपपत्तेश्च प्रलयस्याऽप्रसिद्धिः परमते स्यादिति "दोधूयमाना" इति विशेषणञ्च॥

क्रियाभ्युपगमेऽपि परमाण्वोः संयोगो न सिद्ध्यतीत्याह—कथमिति। अथ=अनन्तरम्, क्रियाभ्युपगमेऽपीत्यर्थः। निष्प्रतीकौ=निरवयवौ, अणू इति विभक्तिविपरिणामेनाऽनुषज्यते। किमेकदेशेन? उत कार्त्स्न्येन? नाद्यः। एकदेशाभ्युपगमे निरवयवत्वभङ्गापत्तेः। न द्वितीयः। कार्त्स्न्येन संयोगे उपचयासंभवेन द्व्यणुकस्यापि परमाणुत्वापत्तेः। संयोगस्याऽव्याप्यवृत्ति-

त्वनियमभङ्गापत्तेः, निश्छिद्रे एकस्मिन् अपरस्य प्रवेशाद्यसंभवेन कात्स्न्येन संयोगस्यानुभवानारोहाच्च। तत्तद्दिगवच्छेदेन कल्पितप्रदेशे संयोग इति चेन्न। कल्पितस्य कार्यनिर्वाहकत्वे मायावादाभ्युपगमापत्तेः। संयोगाभ्युपगमेऽपि तृतीयद्व्यणुकोत्पत्तिर्दुरुपपादेत्याशयेनाह—कथं वेति। वा शब्दः शङ्कान्तरद्योतकः, ताभ्यां परमाणुभ्यां भिन्नं तृतीयं द्व्यणुकं कथं स्यादित्यनुकृष्यते। कार्यकारणयोस्तादात्म्यातिरिक्तसंबन्धस्य दुरुपपादत्वादिति भावः। अवयवावयविनोः समवाय एव सम्बन्ध इति चेन्न। तस्य संबन्धिभ्यां भेदे ताभ्यामसम्बद्धस्य संयोगस्य संबन्धत्वादर्शनात्संबन्धिव्यवस्थानुपपत्तेश्च तस्य सम्बन्धान्तरं, तस्यापि संबंधान्तरं वाच्यमित्यन्योन्याश्रयचक्रकानवस्थानां प्रसङ्गात्। अभेदे तदभिन्नाभिन्नस्य तदभेदावश्यकत्वात्परमाणुद्वयस्याप्यैक्यापत्तेरिति दूरापास्ता तृतीयद्व्यणुकसिद्धिः, अपसिद्धान्तश्च। किंच, अत्यन्तभिन्नयोः कुण्डबदरयोरिव संयोगएव संबन्धो न्याय्यः। स च पूर्वसिद्धयोः क्रियाधीन एवेति सम्बन्धोत्पत्त्यनुपपत्तिः। किंच, समवायस्योभयसंबन्ध्याश्रितत्वे एकतरविनाशान्नाशापत्तिः। एकाश्रयत्वे सम्बन्धत्वानुपपत्तिः। सम्बन्धो हि सम्बन्धिभ्यां भिन्नस्तावाश्रितश्चेति तल्लक्षणहानात्। किंच प्रत्यवयवमवयवी कात्स्न्येन सम्बद्धः? उतैकदेशेन? आद्ये कर्णाद्यवयवेपि कृत्स्नागौरस्तीति दोहनादिप्रसङ्गः। मूर्तद्रव्यस्यैकस्यैकत्र कात्स्न्येन सतोऽन्यत्र तथावर्तितुमशक्यत्वात्प्रत्यवयवमवयविभेदप्रसंगश्च। द्वितीये अवयवेष्वेकदेशेन वर्तितुमवयवान्तरं, तत्रापि वर्तितुमवयवान्तरमपेक्षणीयमित्यनवस्था प्रसङ्गो, मेरुसर्षपयोः समानपरिमाणप्रसंङ्गश्च। अनयैव दिशायथायोगं द्रव्ये समवायेन गुणोत्पत्तिः, कारणगुणानां कार्यगुणारम्भकत्वं च निराकरणीयम्। अभ्युपगमेऽपि परमाणुद्व्यणुकयोरणुत्वह्रस्वत्वे परिमाणान्तरारम्भके न भवतः, त्र्यणुकादीनां महत्वदीर्घत्वे तथा भवत इति वैषम्यस्य दुरुपपादत्वात्। द्व्यणुकस्य महत्वप्रसङ्गस्त्र्यणुकस्याणुतरत्व प्रसङ्गो वा दुर्वारइत्यभिप्रेत्याह—किमितीत्यादिना॥ परिमण्डलानि=परमाणवः तेषां भावः पारिमाण्डल्यं तत्परिमाणं, तस्मात् द्व्यणुकंपरमाण्वपेक्षया महत् किमिति कस्मात् * नचाणुतरत्वप्रसङ्गः, परमाण्वपेक्षयाऽणुतरत्व स्याऽप्रसिद्धस्याऽऽपादयितुमशक्यत्वात्। नित्ये परममहत्वे मानाभावेन परिमाणजन्यतावच्छेदकस्य वैजात्यस्यैवमहत्वत्वरूपतत्तद्व्याप्यत्वाद्वा द्व्यणुक

---

* नोत्पद्यत इति शेषः। परमाणुपरिमाणादेव द्व्यणुके परमाणुपरिमाणापेक्षया महत्परिमाणं कुतो नोत्पद्यत इत्यर्थः।

परिमाणेपि तस्यानिवारणात्, अवयवोपचयेपि परिमाणानुपचयस्यानुभवविरुद्धत्वाच्चेति भावः। अनुभवविरुद्धस्याप्यभ्युपगमे त्र्यणुकेपि महत्त्वं न स्यादित्याशयेनाह—तेभ्य इति॥ तेभ्यो=द्व्यणुकेभ्यो जायमानस्त्रुटिर्महान् कस्मात् स्यात्। अणुजन्यस्याणुतरत्वप्रसङ्गस्य दुर्वारत्वात्। द्व्यणुकापेक्षयाऽणुतरत्वस्य परमाणौ प्रसिद्धत्वात्॥

अयं भावः—न तावत् द्वित्वसंख्यादिमद्व्यायाः परिमाणहेतुत्वं संभवति। प्रलये शरीराद्यभावेन जीवानामपेक्षाबुद्ध्यसंभवेन द्वित्वोत्पत्त्यसंभवात्। भगवदपेक्षाबुद्धेश्चानादेर्द्वित्वोत्पादकत्वाभ्युपगमे द्वित्वस्योत्पत्तिकालाऽपरिचयादनादित्वापत्तौ परमाणुद्वित्वादेः जन्यत्वाजन्यत्वाऽतिरिक्ततृतीयविधापत्तेश्च। नाशानापत्तेश्च, अपेक्षाबुद्धिनाशस्य द्वित्वादिनाशहेतुत्वाभ्युपगमाद्भगवद्बुद्धेर्नाशायोगात्। अतो द्व्यणुकादिपरिमाणमेव तत्र हेतुरिति फलाद्भ्युपगन्तव्यमित्यणुतरत्वप्रसङ्गो दुर्वार एवेति। किंच, प्रत्यक्षसिद्धत्रुटिरेव नित्योऽस्तु, कृतं परमाणुकल्पनयेत्याह—किमिति। असौ=त्रुटिरेव, ते=तव नित्यः किमिति न स्यात्। यदि तु चाक्षुषद्रव्यस्य सावयवत्वानित्यत्वनियमात्तस्यावयवाः कल्प्येरंस्तर्हि मूर्तद्रव्यस्यापि तथानियमात्परमाणोरप्यनित्यत्वसावयवत्वे स्यातामित्याह—नित्यश्चेति। अणुः=परमाणुर्वो, नित्यः निरवयवश्च कथमिति संबन्धः। अष्टौ दश वा दिशः संबद्धमूर्तस्य परमाणोरपि तावन्तोऽवयवा अवश्यमपेक्षणीया इति सावयवत्वस्य दुर्वारत्वादित्यर्थः। अत्राऽसत्कार्यवादिन्निति संबोधनेन सकलशिष्टपरिगृहीतसत्कार्यवादविरुद्धबौद्धाद्यभिमताऽसत्कार्योत्पत्तिस्वीकारेणापि कणादादेरनुपादेयवचनता सूचिता। यथाहुः सांख्याः—"शक्तिमद्धि कारणम्, शक्तिश्च कारणनिष्ठा कार्यस्य सूक्ष्मावस्थैव, तथाच शक्त्यात्मना मृदादौ सत एव घटादेराविर्भावाय कारणान्तराणि, नासतः सत्त्वाय, असतोऽप्युत्पत्त्यभ्युपगमे सर्वत्राऽसत्त्वाविशेषात्सिकतादिभ्योऽपि तैलादिनिष्पत्तिप्रसङ्गात्। नचासत्त्वात्कारणेनासंबद्धं तेनोत्पादयितुं शक्यमिति कारणोपादानवैयर्थ्यप्रसङ्गाच्च। किंच, असत उत्पत्तिः सती चेत् कारणानां वैयर्थ्यम्, असती चेत्तस्या उत्पत्तिरन्या तस्या अप्यन्येत्यनवस्था। घटादिरूपा चेत्घट उत्पत्तिरित्यनर्थान्तरम्। आद्यक्षणसम्बन्धोऽपि सम्बन्धिसिद्ध्यधीन इति स्वरूपतः कारणे सदेव घटाद्याविर्भवतीति सिद्धम्" इति॥ वस्तुतस्तु सत आविर्भावाय कारणकलापोपादानमिति मतेपि, आविर्भावः सन्वा? असन्वा? आद्ये सामग्र्युपादानवैयर्थ्यम्, द्वितीयेऽप्यसत्कार्याभ्युपगमस्स्यादिति दोषसाम्याच्च सांख्याभि-

मतो घटादेः स्वतस्सत उत्पादनलक्षणस्सत्कार्यवादस्साधुः। किन्तु यथेदानीं घटादिकं ब्रह्मसत्तयैव सत्, एवमुत्पत्तेः प्रागपि। न हि कारण ब्रह्मसत्तातिरेकेण कार्ये पृथक्सत्तास्ति "वाचारंभणं विकारो नामधेयम्" "तत्सत्यं स आत्मा" "सर्वं तं परादाद्योऽन्यत्रात्मनस्सर्वं वेद" इत्यादिश्रुतिभ्यः। आविर्भावतिरोभावौ तु मायामयस्यानिर्वचनीयावेवेति तत्वम् ॥२१॥

इत्थं अर्धवैनाशिकानां वैशेषिकादीनां समये निरस्ते हैतुकत्वाविशेषात् सर्ववैनाशिकबौद्धराद्धान्तं निरसितुमवसरः। चत्वारः किल बुद्धस्य शिष्याः—सौत्रान्तिकः, वैभाषिकः, योगाचारः, माध्यमिकश्चेति। तत्र बुद्धेनाऽऽद्ययोर्बाह्यार्थेष्वभिनिवेशमालोक्य तदाशयानुसारेणैव सर्वशून्यतालक्षणे तत्वे तयोर्बुद्धेरवताराय बाह्यार्थवादमभ्युपेत्य राद्धान्तोऽभिहितः। तृतीयस्य त्वीषत्परिपक्वचित्तस्य विज्ञानमात्रास्तित्ववादेन, चतुर्थस्य मुख्याधिकारिणस्तु साक्षादेव शून्यवाद उपदिष्टः। यथाऽऽहुः—

देशना लोकनाथानां सत्वाशयवशानुगाः।
भिद्यन्ते बहुधा लोके ह्युपायैर्बहुभिः पुनः॥

गंभीरोत्तानभेदेन क्वचिच्चोभयलक्षणा।
भिन्नाऽपि देशनाऽभिन्ना शून्यताद्वयलक्षणा॥" इति॥

देशनाः=उपदेशाः, लोकनाथानां=बुद्धानां, पूजायां बहुवचनम्। गांभीर्यं=गूढाभिप्रायता, उत्तानता=स्फुटोक्तिरित्यर्थः। तत्र सौत्रान्तिकमते आन्तरे विज्ञाने घटपटाद्याकारवैचित्र्यस्य आनुभाविकस्य तत्तदर्थसादृश्यातिरिक्तस्य दुर्वचत्वात्, असति च बाह्यार्थे ज्ञानेऽर्थसादृश्योदयाऽसंभवात्तन्निमित्तभूतो बाह्यार्थो विज्ञान वैचित्र्यादनुमीयते, नत्वसौ प्रत्यक्षः, वैभाषिकमते तु असति विज्ञानस्य बाह्यार्थसम्बन्धे तदाकारत्वासंभवात्, सति च प्रकाशसम्बन्धे बाह्यार्थप्रकाशस्याऽवर्जनीयत्वात्प्रत्यक्षगोचरोऽपीति तयोर्मतभेदे क्षणिकबाह्यार्थवादप्रक्रियाणामेकरूपत्वात् द्वयोर्मतमेकीकृत्यमूलशैथिल्योपपादनपूर्वकं निरस्यति बाह्यमित्यादिश्लोकत्रयेण—

मू०॥ बाह्यं भोग्यं प्रजल्पन्क्षणिकमणुचयं भोक्तृ संघातमन्तः
स्कंधानां पंचकञ्चेदृशमिति सुगतः पृच्छ्यतां वेदबाह्यः।
किन्ते मानान्तरेण प्रमितमिदमुत प्रौढिरेषा त्वदीया
किं वा मोहात्प्रलापः किमथ जड जगद्विप्रलिप्सा कुबुद्धे २२

बाह्यमिति॥ गन्धस्नेहोष्णतेरणस्वभावानां पार्थिवादिचतुर्विधपरमाणूनां भूतभौतिकलक्षणः भोग्यसंघात एकः, रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकपञ्चस्कन्धात्मको भोक्तृसंघातोऽन्यः, खराः=कठिनाः तत्स्वभावाः पार्थिवपरमाणवः, स्निग्धाः आप्याः, उष्णतास्वभावास्तैजसाः, ईरणं=चलनं, तत्स्वभावा वायवीयाः, तेषामाद्यः संघातः। कर्मकरणव्युत्पत्तिभ्यां सविषयाणीन्द्रियाणि रूपस्कन्धः, । विषयाणां बाह्यत्वेऽपीन्द्रियसम्बन्धाद्देहारम्भकत्वाच्च आध्यात्मिकत्वम्। अहमित्याकारकमालयविज्ञानम्, इन्द्रियजन्यनिर्विकल्पकज्ञानानि च विज्ञानस्कन्धः । सुखदुःखाद्यनुभवो वेदनास्कन्धः । डित्थः, कुण्डली, श्यामो, ब्राह्मणः, इत्यादिरूपः सविकल्पकप्रत्ययः संज्ञाविषयकत्वात्संज्ञास्कन्धः, रागद्वेषमोहधर्ममदमानादयः संस्कारस्कन्धः । तत्र स्वमात्रगोचरनिर्विकल्पकज्ञानधारात्मकमालयविज्ञानं आलयः, चित्तं, आत्मेति च गीयते। तदिदं चैत्तिकं बुद्धिवाच्यं वक्ष्यमाणाऽभावत्रयातिरिक्तं सर्वं क्षणिकं । "यत्सत् तत्क्षणिकं यथा विद्युदादि सच्चेदं सर्वम्" इत्यनुमानाच्च तस्य क्षणिकत्वम् । अनयारीत्या बहिर्भवं बाह्यं=भूतभौतिकजातं, क्षणिकं=स्वोत्पत्तिकालेतरकालाऽस्पर्शिनं, अणुचयं = धान्यराशिवत्परमाणुपुञ्जरूपं, भोग्यं=भोगविषयं प्रजल्पन्, तथा अन्तः=अध्यात्मं, ईदृशं=बाह्यवदेव क्षणिकं दर्शितं स्कन्धानां पञ्चकं भोक्तृसंघातं प्रजल्पन्, वेदबाह्यः=वेदविरुद्धार्थप्रलापी, वेदद्वेष्टा च सुगतः=बुद्धः, तच्छिष्यः सौत्रान्तिको वैभाषिकश्च, निपुणैः उभयवादिवचनसारपरीक्षाकुशलैः मध्यस्थैः इति=वक्ष्यमाणरीत्या, पृच्छ्यतां। अन्यद्वारा संवादस्तस्य साक्षादसंभाष्यत्वद्योतनार्थः । तथाचोक्तम्—

"हैतुकान्बकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत्" इति।

पुराणेषु च तेषामसंभाष्यत्वं प्रसिद्धम् । प्रमाणमूलकत्वाभावाद्भ्रान्त्यादिमूलकत्वाच्च सर्वथा अनादरणीयं तद्दर्शनमिति सूचयन् सनिन्दोपहासं प्रश्नप्रकारमेव दर्शयति—किमित्यादिना ॥ हे जड=अज्ञ! हेतुबुद्धे!=निष्कारणमेव परानिष्टोपायोपदेष्टृत्वात्कुत्सितबुद्धे, स्वहिताऽनभिज्ञत्वे सति परहितविघातित्वं सम्बोधनद्वयतात्पर्यार्थः । इदम्="क्षणिकं परमाणुसंघात्मकं च जगत्" इत्यादिरूपं परमरहस्यं ते=तव, कर्तुरेव ।शेषत्वविवक्षायां षष्ठी, त्वयेत्यर्थः । मानान्तरेण=प्रसिद्धप्रत्यक्षादिमानातिरिक्तमानेन प्रमितं किं? किमितिप्रश्ने । नचाऽस्मिन्विषये प्रत्यक्षं प्रमाणं, तस्य सन्निकृष्टार्थग्राहित्वात् । क्षणिकपरमाणूनां सन्निकर्षपर्यन्तं स्थित्यसंभवात्, अयोग्यत्वाच्च । नाप्य-

नुमानं, तस्य सहचारग्रहाधीनत्वात्, क्षणिकयोश्च युगपदुभयग्रहणाऽसंभवेन सहचारस्य दुर्ग्रहत्वात्। अतएव नोपमानादीनां प्रसरः, तेषां त्वया प्रमाणत्वाऽनभ्युपगमाच्च। अतोऽलौकिकेन केन चिन्मानेन सप्तमेन्द्रियकल्पेन तत्समधिगतंवाच्यं। तच्चाऽप्रसिद्धमिति भावः। पुरुषवचनस्य प्रमाणमूलत्वबाधे रागमोहद्वेषाऽन्यतममूलत्वमेव पर्यवस्यतीति क्रमेण प्रश्नव्याजेन दर्शयति—उतेत्यादिना। उतेति पक्षान्तरे। एषा=पूर्वोपदर्शिता कल्पना त्वदीया प्रौढिः=बुद्धिवैभवख्यापनं "सर्वप्रमाणविरुद्धमपि अहमेवं व्यवस्थापयामि स्वतन्त्रप्रज्ञत्वात्" इति, तर्हिस्वख्यातिपूजादिरागमूलकत्वमेवेति भावः। *तदप ह्नवेत्याह—किञ्चेति। मोहात्=प्रमाणवस्तुतत्वापरिज्ञानाद्भ्रान्त्या बालिशानामिव प्रलापः=अनर्थकं वचः, त्वदीय इतिविपरिणामेनसम्बध्यते। तदपह्नवेऽप्याह—किमथेति। जगत् वेदेन श्रेयसे नीयमानमालोक्य निर्निमित्तादेव द्वेषात्तद्विघाताय तस्य विप्रलिप्सा=विप्रलंभेच्छा दस्यूनामिवाऽसन्मार्गोपदेशेन प्रतारणेत्यर्थः। सर्वेष्वपि पक्षेषु अनुपादेयवचनतैव, नचाऽपरः प्रकारोऽस्तीति भावः॥ २२॥

इत्थं वैनाशिकमते मानमूलत्वाभावं दोषमूलकत्वंचोक्त्वा मानविरोधमपि दर्शयति—संघीभावइत्यादिद्वाभ्याम्—

**मू०॥ संघीभावः कथंवा चलनविरहिणां भङ्गुराणामणूनां**
**संघोऽनन्यः कथंवा विषयपदमियात्कश्च संघं विधत्ते।**
**स्कंधानां सन्निपातः कथमिव कियतां भोक्तृता काच धारा**
**कस्य स्तां भोगमोक्षौ वद जड सफलं केन वा दर्शनं ते॥**

संघीभाव इति॥ वैशेषिकमतनिरासोक्तयुक्त्या हेत्वसंभवात् चलनविरहिणां= क्रियाशून्यानां, भङ्गुराणां= क्षणिकत्वात्क्रियोत्पत्तिपर्यन्तमनवस्थायिनां अणूनां कथं=केनप्रकारेण वा भूतभौतिकदेहाद्यात्मना संघीभावः। यदा स्थायिष्वप्यणुषु क्रिया न संभवतीत्युक्तं तदा किंवक्तव्यं क्षणिकेष्विति भावः। किञ्च, परमाणुसंघो घटादिः परमाणुभ्य अन्यः? अनन्योवा? आद्ये वैशेषिकमतोक्तदोषः अपसिद्धान्तश्चेत्यभिप्रेत्य द्वितीयं निरस्यति—संघ इति। परमाणुभ्योऽनन्यः=अभिन्नः समुदायः, विषयपदम्=इन्द्रियगोचरतां कथमियात्=प्राप्नुयात्, महदुद्भूतरूपादिमद्द्रव्यस्यैव चक्षुर्योग्यत्वात्, परमाणुषु महत्त्वाऽभावादयोग्यत्वात्। केशानां दूरेऽप्रत्यक्षाणामपि समु-

---

* उत्तरहस्यबोधकवचनस्य रागमूलकत्वस्य गोपने कृततु

द्वायस्य प्रत्यक्षता दृष्टेति चेत्, न। तेषां प्रत्येकमपि समीपे प्रत्यक्षत्वेनाऽयोग्यत्वाभावात्। दोषवशाददर्शनन्तु नाऽयोग्यत्वापादकम्। नह्ययोग्यानां संघातो योग्यः, वायुसङ्घातस्य चाक्षुषत्वप्रसङ्गात्। किञ्च, अचेतनानां परमाणूनां तृणपुलधान्यराश्यादिवच्चेतनाधीन एव संघीभावो वाच्यः। चेतनश्च कर्ता त्वया नेष्यत इति संघातासिद्धिरित्याह—कथंचेति। त्वन्मते भूतभौतिकादिसंघं च कः विधत्ते? नकोऽपीत्यर्थः। ननु द्वाभ्यां लोके कार्यस्य कारणाधीनात्मलाभलक्षणः प्रतीत्यसमुत्पादो दृश्यते हेतूपनिबन्धतः, प्रत्ययोपनिबन्धतश्च। हेतोरेकस्य बीजाद्यात्मकपूर्वसंघातस्य अङ्कुरादिफलोपधानलक्षण आद्यः। प्रत्ययानां कार्यारम्भाय परस्परापसर्पणशीलानामनेकेषां भूतचतुष्टयपरमाण्वाऽऽकाशकालधातूनां एककार्योपधानलक्षणसम्बन्धो द्वितीयः। तथाहि—हेतूपनिबन्धतो घटाङ्कुरकुटजाद्यङ्कुर वैलक्षण्यम्, प्रत्ययोपनिबन्धाच्च पार्थिवपरमाण्वादिषड्विधकारणप्रयुक्ताः काठिन्यस्नेहपरिपाकनिर्गमनसावकाशत्वपरिणामा अङ्कुरादावुपलभ्यन्ते। तत्र बीजाङ्कुरादीनां "अहमेनं निर्वर्तयामि, अहमनेन निर्वर्तितः" इति ज्ञानाभावेऽप्यन्वयव्यतिरेकाभ्यां परस्पराधीनत्वदर्शनात् तावतैव सर्वकार्यसिद्धेर्नचेतनकर्त्रपेक्षाऽस्ति। तथाच बुद्धसूत्रम् "उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषां धर्माणां धर्मता" इति। तथागतानां=बौद्धानां कारणे सत्येव कार्योत्पाद इत्यन्वयात् कारणाभावे च कार्यानुत्पाद इति व्यतिरेक मात्राद्वा एषां, दधातीति धर्मः=कारणम्, ध्रियत इति धर्मः कार्यम्, तेषां धर्मता=कार्यकारणभावलक्षणा स्थितैव न कर्तारमन्तरेण क्षतेति तत्सूत्रार्थः। तथाच संघाते न कर्त्रपेक्षा इति चेत्, न। हेतुप्रत्ययानामङ्कुराद्यनुकूलाप्रवृत्तिः अन्यनिरपेक्षा वा स्यात्? सापेक्षा वा?। आद्ये प्रवृत्त्यनुपरमप्रसङ्गात्प्रलयसुषुप्त्याद्यसिद्धिः। द्वितीये चेतनाधीनत्वानभ्युपगमादनवस्था। किञ्च, पूर्वपूर्वसङ्घाताः नियमेन स्वसदृशानेवोत्तरोत्तरसंघातानुत्पादयेयुः? विसदृशानेव वा? अनियतस्वभावान्वा?। आद्ये बीजादङ्कुरस्य, ततः काण्डस्य, ततस्ततः पत्रपुष्पादीनां च विसदृशानामनुत्पादप्रसङ्गः। द्वितीये सर्वभावानां प्रतिक्षणमत्यन्तवैलक्षण्यप्रसङ्गः, उत्पन्नमात्राद्बीजादङ्कुरकाण्डपत्रपुष्पादेरुत्पत्तिप्रसङ्गः, व्युत्क्रमेणाऽप्युत्पत्तिप्रसङ्गः, घटादिबीजेभ्यः कुटजाङ्कुराद्युत्पादप्रसङ्गश्च। तृतीये च मनुष्यादि पुद्गलो द्वितीयादिक्षणेषु देवो मनुष्यो हस्ती वा स्यादिति सर्ववस्तुष्वनाश्वासप्रसङ्गः। तस्मात्साधनानां नियतकालप्रवृत्तिहेतुः तत्फलसहकारिस्वरूपाभिज्ञः चेतनः जगद्धेतुरवश्यमभ्युपगन्तव्यः।

ननु पञ्चस्कन्धीसन्निपाते चित्ताभिज्वलने भोक्तुस्सद्भावात् तस्यैव अविद्यादिक्रमेण भूतभौतिकसंघाते कर्तृत्वसंभवाच्च नायं दोषइत्याशङ्क्याऽऽह—स्कन्धानामिति । पञ्चस्कन्धानां सन्निपातः=संघातोऽपि कथमिव=केनप्रकारेणेव, तादृशदृष्टान्तोऽप्यप्रसिद्धः किंपुनर्दार्ष्टान्तिकमिति द्योतनाय इवकारः । यतस्तस्यापि संघातत्वाविशेषात् कर्त्रन्तराधीनता वाच्या। तथाच तस्य तादृशकर्त्रन्तराधीनत्वेऽनवस्था, स्वाधीनचित्ताऽभिज्वलनाधीनत्वे त्वन्योन्याश्रय इतितस्याप्यसिद्धिः, स्थायिनः कर्तुरनभ्युपगमादिति भावः । किञ्च, स्कन्धसंघातस्य संघातिभ्योऽत्यन्तभिन्नस्य भोक्तृत्वम् ? उतस्कंधानामेव? उतसंघातान्तर्गतस्यैकस्य? आद्ये अतिरिक्तावयविस्वीकारादपसिद्धान्तो वैशेषिकमतोक्तदोषप्रसङ्गश्च । द्वितीये नानाभोक्तृणां ऐकमत्यासंभवाच्छरीरमुन्मथ्येत। तृतीयेतु निर्धारणहेत्वभावदोष इत्याह—कियतामिति।किंसङ्ख्यापरिच्छिन्नानां भोक्तृत्वमित्यर्थः। नन्वालयविज्ञानधारैव स्वप्रकाशकत्वादात्मा भोक्ता च, सच संघातात्मना सदैवाऽनुवर्तमानः करणकलापं प्रकाशयन्नधिष्ठास्यतीति कर्ता च, इत्यस्तिनिर्धारणहेतुरित्याशङ्क्याह—काचेति। आलयविज्ञानधारा च का=किंक्षणिकविज्ञानेभ्योऽन्या? अनन्यावा? । आद्ये स्थाय्यात्मैव नामान्तरेणाऽभ्युपगत इत्यस्मन्मतप्रवेशः। द्वितीये क्षणिकविज्ञानानां पूर्वोत्तरकालाऽस्पर्शित्वात्परस्परवार्तानभिज्ञानामैकमत्यस्य दुःसंपादतया भोगेच्छया तत्साधनसंघातनिर्मातृत्वाऽनुपपत्तिरित्याशयः । किञ्च, यद्भोगार्थः संघातस्स्यात्स नास्ति स्थिरो भोक्ता इति भोगो भोगार्थ एव स्यादिति नान्येन प्रार्थयितव्यःस्यात् । तथा मोक्षोऽपि मोक्षार्थ एवेति नान्येन मुमुक्षुणा भवितव्यं स्यादित्याशयेनाह—कस्येति । भोगो मोक्षश्च कस्य स्तां न कस्यचिदित्यर्थः । तथाच त्वच्छास्त्रवैफल्यमपीत्याह—यदेति । हेजड=निर्बुद्धे ? ते=तव, दर्शनं=शास्त्रम्, केन वा फलेन सफलं । न तावद्भोगेन, तदसंभवस्योक्तत्वात्। भोगविरोधितपः क्लेशसंयमपारिव्राज्याद्युपदेशाच्च । नापि मोक्षेण, मोक्षपर्यन्तमात्मावस्थानाऽभ्युपगमेऽपसिद्धान्तात्, मोक्षस्यदुःखनिवृत्तिरूपत्वे क्षणिकदुःखानां स्वरसभङ्गुरत्वेन साधनोपदेशवैयर्थ्यात्, अन्यादृशत्वेऽक्षणिकत्वाच्चेति भावः ॥ २३ ॥

नन्वविद्यासंस्कारनामरूपषडायतनस्पर्शवेदनातृष्णोपादानभवजातिजरामरणप्रभृतीनामितरेतरनिमित्तनैमित्तिकभावेन संततं परिवर्तनादर्थाक्षितस्संघात इति सर्वदोषपरिहारः। तथाहि — क्षणिकेषु परस्परभि-

तेषु पृथिव्यादिधातुषु स्थायित्वैकत्वसुखशुचित्वदेहत्वमनुष्यत्वमातृपितृत्वादिबुद्धिः, आत्मनोऽहंबुद्धिश्च अतत्त्वविषयत्वादविद्या, सैव संसारानर्थस्य मूलकारणम्, ततश्च रागद्वेषमोहाख्याः संस्कारा उत्पद्यन्ते। तेभ्य आलयसंस्थितात्संस्काराद् गर्भस्थस्याद्यं ज्ञानमुत्पद्यते। ततः देहारंभकपृथिव्यादिचतुष्टयं नामाश्रयत्वान्नाम। ततः शुक्रशोणितात्मकं सितकृष्णरूपं देहस्य कललबुद्बुदाद्यवस्थं वा नामरूपे। ततो देहनिष्पत्तौ भोगसंपादकानि पृथिव्यादिचतुष्टयरूपविज्ञानात्मकनामरूपेन्द्रियाश्रयायतनसंबंधात् षडायतनानीन्द्रियाणि। तेषां विषयसंबंधः स्पर्शः। ततः सुखादिर्वेदना। ततः पुनर्विषयतृष्णा। ततः प्रवृत्तिरुपादानम्। ततो भवहेतुत्वाद्भवौ धर्माधर्मौ। ततः पुनः पञ्चस्कंधरूपं भोगायतनं जातिः। तत्परिपाको जरा। ततो मरणम्। एवं शोकपरिदेवनादुःखदौर्मनस्यमदमानादयोऽपि बोध्याः। तदेतेषु परस्परनिमित्तनैमित्तिकभावेन घटीयन्त्रवदनिशमावर्तमानेषु अर्थादुपपन्नो द्विविधस्संघातः। वस्तुतः क्षणिकेष्वपि भोक्त्रादिषु स्थायित्वबुद्ध्या भोगमोक्षयोः पुरुषप्रवृत्तौ शास्त्रसाफल्यं चेत्याशंक्याह—

मू०॥ नाविद्यादिप्रवृत्तेर्द्विविधसमुदयस्ते यदेकैकसन्ना
नश्यन्नुत्पादने न प्रभवति किमरे हेत्वसंबन्धि कार्यम्।
तच्चेन्निर्हेतुकं स्यात्करणविफलता स्वप्रतिज्ञाविरोध
स्त्रैविध्यं चाप्यभावे कथमिति वितथो बुद्धयंधोः प्रलापः॥

नेति॥ दर्शितानामविद्यादीनां परस्परं हेतुफलभावेन निरंतरं प्रवृत्तेः, बाह्याध्यात्मिकभेदेन उपदर्शितः द्विविध समुदयः=संघातो न संभवति। यत्=यस्मात्, ते=अविद्यादयः एकैकस्मिन्कार्ये उत्पादिते, सन्नाः अवसन्नाः=विनष्टाः। तथाचोत्पत्तिमात्रनिमित्तत्वाज्जोत्पन्नानां संघीभावे क्षमन्त इत्यर्थः। अयं भावः—यत्खलु हेतूपनिबद्धं कार्यं तदन्यानपेक्षहेतुमात्राधीनत्वादुत्पद्यताम्। संघातस्तु प्रत्ययोपनिबद्धो नानाहेतुसमवधानाधीनः कथं घटताम्?। नच विनष्टैरचेतनैश्च प्रत्ययैर्विनश्यतां मेळनं स्थापनं वा सुकरम्। किंच, अविद्यादयः संघातमाश्रित्यात्मानं लभमानाः कथं तस्यैव निमित्तं स्युः। पूर्वसंघातस्य उत्तरोत्तरसंघातं प्रति निमित्तत्वाभ्युपगमाच्चाविद्यादीनां निमित्तनैमित्तिकत्वकल्पनवैफल्यमपीति॥ अभ्युपेत्यापि क्षणिकानामविद्यादीनां निमित्तत्वमिदमुक्तम, वस्तुतस्तु तदेव न संभवतीत्याह—नश्यन्निति॥ पूर्वक्षणे नश्यन्=विनाशग्रस्तः कार्यस्योत्पादने न प्रभवति=असमर्थो भवति॥ निमि-

त्तविनाशाभ्युपगमेन हेतोः कार्यसंबंधाभावात्तदनुकूलव्यापाराभावाच्चेति भावः।

ननु कार्योत्पत्तौ कारणस्याऽव्यवहितप्राक्कालसत्वमेवोपयुज्यते, न कार्यकालसत्वमपि, तदा कार्यस्य सिद्धत्वेन तत्सिद्ध्यर्थं कारणसत्ताया अनुपयोगात्। नापि व्यापारसिद्ध्यर्थं तदुपयोगः। स्वोत्पत्तेरेवास्य व्यापारवत्वसंभवात्। यथाहुः—"भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते" इति॥ तत्राह—किमिति॥ "अरे" इति नीचसंबोधने। अरे बौद्ध! हेत्वसंबन्धि=कारणानुपरक्तं कार्यं किम्? नकिञ्चिदित्यर्थः। मृत्सुवर्णकारणका घटरुचकादयो हि मृत्सुवर्णाद्यात्मानोऽनुभूयन्ते। यदि च कारणानुपरक्तं कार्यस्यात्कथं तेषां तदात्मनाऽनुभवः। नच कारणसादृश्यमेवानुभूयते न तादात्म्यमिति युक्तम्। भेदानुल्लेखेनानुभवस्य सादृश्यविषयत्वायोगात्। किंच, अनुगतधर्माभावे सादृश्यासिद्धिः, अनुगतधर्माभ्युपगमे च तदेव कारणं कार्यकालावस्थायीति सिद्धमक्षणिकत्वम्। अपिच, उत्पत्तिविनाशौ वस्तुनः स्वरूपभूतौ? उत धर्मौ? वस्त्वन्तरभूतौ वा? । आद्ये उत्पत्तिविनाशयोर्यौगपद्यं, वस्तूत्पत्तिविनाशशब्दानां पर्यायत्वं च स्यात्। द्वितीये धर्म्यसंबन्धे धर्मत्वायोगाद्वस्तुनः क्षणिकत्वहानिः। तृतीये वस्तुन उत्पत्तिविनाशाभ्यामसंस्पर्शाच्छाश्वतत्वप्रसङ्गः। यदि च दर्शनादर्शने उत्पत्तिविनाशौ, तथापि तौ द्रष्टृधर्मौ न वस्तुधर्माविति वस्तुनः शाश्वतत्वमेव। ननु पूर्वापरभावमात्रदर्शनाद्धेतुफलभावः कल्प्यते, वस्तुतस्तु तयोः कार्यकारणयोः संबंधस्य दुर्निरूपत्वान्निर्हेतुकमेव कार्यमुत्पद्यत इत्याशंक्याह—तदिति॥ तत्=कार्यं, निर्हेतुकं=कारणशून्यमेव स्याच्चेत्=उत्पद्येत यदि तर्हि घटादिकार्ये करणानां दण्डचक्रमृत्पिण्डादीनां साधनानां विफलता=नैष्फल्यं, कुलालादेर्विना दण्डादिभिर्घटादि सिद्धिप्रसङ्गश्च। तथा "चतुर्विधान्हेतून्प्रतीत्य चित्तचैत्ता उत्पद्यन्ते" इति परेषां प्रतिज्ञा सूत्रं च विरुध्येत। आलंवनप्रत्ययः, समनंतरप्रत्ययः, अधिपतिप्रत्ययः, आलोकादयश्चेति चतुर्विधा हेतवः कार्यं प्रति अयन्ते अनुकूलीभवन्तीति प्रत्यया इत्युच्यन्ते। यथानीलाकारस्य ज्ञानस्य नीलादालंवनशब्दितविषयान्नीलाकारता, समनन्तर प्रत्ययादव्यवहितपूर्वोत्पन्नविज्ञानाद्बोधरूपता, नीलरूपाकारतैव न रसगंधाद्याकारतेत्यधिपतिवन्नियामकाच्चक्षुरादेर्नीलादिप्रतिनियताकारता, आलोकादिभ्यश्च स्पष्टतेति चतुर्विधकारणानि प्राप्य चित्तं नीलादिज्ञानं, चैत्ताः चित्तसंबंधिनस्सुखादयश्चोत्पद्यन्त इति हि तदर्थः॥ निर्हेतुककार्योत्पादाभ्युपगमेत्वेतत्प्रतिज्ञाविरोधश्चेत्यर्थः। यदितूक्तप्रतिज्ञानिर्वाहाय कारणस्य फलकालाव-

स्थानमिष्येत तदापि "क्षणिकास्सर्वसंस्काराः" इति प्रतिज्ञा विरोध इत्युभयतस्पाशा रज्जुः॥

किंच, बुद्धिबोध्यं त्रयादन्यत्संस्कृतं क्षणिकं च, तदपि त्रयं प्रतिसंख्याऽप्रतिसंख्यानिरोधावकाशं चेत्यनेन ज्ञानविषयभूतमभावत्रयातिरिक्तंजन्यं क्षणिकं च, "अमुमहं नाशयिष्यामि" इति वस्तुप्रतिकूलाबुद्धिः प्रतिसंख्या, तत्पूर्वको वस्तुनाशः प्रतिसंख्यानिरोधः, तदन्यो ध्वंसस्त्वप्रतिसंख्यानिरोधः, आवरणाभावस्त्वाकाशमिति त्वत्प्रतिपादितमभावत्रैविध्यमपि दुरुपपादमित्याशयेनाह—त्रैविध्यमिति॥ अभावे=निर्विशेषत्वादसत्वाच्च निरुपाख्ये, त्रैविध्यं=त्रिप्रकारतापि कथं?=केन प्रकारेण?। अवस्तुनः कारणाद्यसंबन्धादुत्पत्तिवैलक्षण्याद्यसंभवात्, संभवे च निरुपाख्यत्वासत्वयोर्हानाविस्यर्थः। किंचाद्यनिरोधो क्षणिकवस्तुनः? संतानस्य वा? स्याताम्। नाद्यः क्षणिकस्य पुरुषबुद्धिपूर्वकमुद्गरप्रहारादिपर्यन्तमनवस्थानात्, पूर्वोक्तयुक्तिभिर्निरन्वयनाशाऽसंभवेन सर्वावस्थाऽन्वयिवस्तुपरिशेषे शून्यतालक्षणनिरुपाख्यत्वाऽसिद्धेश्च। नद्वितीयः। हेतुफलभावेनाऽविच्छिन्नसंतानिनामेव संताननतया अन्त्यसंतानिविनाशादेव संताननिरोधो वाच्यः, तत्र यद्यन्त्यः किञ्चित्फलमारभेत, तर्हि संतानाऽविच्छेदः। अन्त्यत्वाऽनुपपत्तिश्च। यदि नारभेत तर्हि तस्याऽसत्वप्रसङ्गः। अर्थक्रियाकारित्वाऽतिरिक्तसत्वस्य परैरनभ्युपगमात्। तदसत्वे च तत्पूर्वपूर्वसंतानिनामप्यर्थक्रियाकारित्वाऽभावात्संतानमात्राऽसत्वापत्तौ, कस्य निरोधः?। नचाऽन्त्येन विसदृशकार्योत्पादने पूर्वसंतानविच्छित्तिरिति युक्तम्। असत्यनुगते स्थायिनि सादृश्यवैसादृश्ययोर्दुरुपपादत्वस्योक्तत्वात्। एतेन परेषां श्रवणमननयोगाभ्यासादिजन्यतत्वज्ञानेन अविद्यादिनाशाऽधीनमोक्षप्रत्याशापि निरस्ता। अविद्यादेः स्वरसभङ्गुरत्वसाधननिरोध्यत्वयोर्विप्रतिषेधात्। नाप्याऽऽवरणाभाव एवाकाशः। शब्दाश्रयत्वेन तस्य भावत्वनिश्चयात्। अपिच, आवरणाऽभाव एव आकाशश्चेत्, एकस्मिन्सुपर्णे उत्पतति सुपर्णान्तरस्योत्पिपतिषोर्निरवकाशत्वप्रसङ्गः। यत्रावरणाभावस्तत्रोत्पतिष्यतीति चेत्, येनाऽऽवरणाभावो विशेष्यते तत्तर्हि वस्तुभूतमेवाऽऽकाशम्, नावरणाऽभावमात्रम्। अभावस्य निषेध्यनिषेधाऽधिकरणोभयनिरूप्यत्वादिति भावः। किं च। आत्मनोऽपि क्षणिकत्वे पूर्वानुभूतस्मरणानुपपत्तिः। अन्यानुभूतस्याऽन्येन स्मरणेऽतिप्रसंगात्, सादृश्याऽसंभवात्; बाल्येऽनुभूतस्य स्थाविरे सादृश्याभावेऽपि स्मरणात्, स्वात्मनि स एवाहमन्यस्तत्सदृशोवेति संशयासंभवाच्च। निष्प्रमाणको निर्युक्तिको निरर्थकश्च क्षणभंगवाद

इत्युपसंहरति—इतीति॥ निंद्यवचनो बंधुशब्दः, "कुत्सितानि कुत्सनैः" इति समासः। बुद्धबंधोः=शिष्टैर्गर्हितस्य बुद्धस्येत्यर्थः। प्रलापः=क्षणिकवादादिलक्षणोन्मत्तप्रलापसदृशवाक्यसंदर्भः। वितथः=अनृतः, विवेकिभिरनुपादेय इति यावत्॥ २४॥

इत्थं बाह्यार्थवादिवैनाशिकमते निरस्ते विज्ञानवादी प्रत्यवतिष्ठते—"अभिमत एवास्माकं बाह्यार्थवादिमतनिरासः। नहि वस्तुतस्सुगतस्य बाह्यार्थवादोऽभिप्रेतः। किन्तु विज्ञानैकस्कन्धवादस्य बुद्धावारोहाय परिकल्पितः। तथाहि—न तावद्बाह्यार्थास्संभवन्ति, ते हि परमाणवोवा तत्समूहा वा। द्वयोरप्ययोग्यत्वदुर्निरूपत्वाभ्यां निरासात्। किंच, विज्ञानं बाह्यार्थे कमतिशयं जनयत्तं प्रकाशयेत्। न तावदिन्द्रियवज्ज्ञानम्, अनवस्थाप्रसङ्गात्। नापि प्राकट्यम, अतीताऽनागतेष्वसंभवात्। नचातिशयानाधाने विषयव्यवस्था सिद्ध्यति। तस्मादतीतानागतवद्वर्तमानत्वेनाभिमतविषयेष्वप्यावश्यकैर्वासनानुसारिभिरालय विज्ञान प्रसूत प्रवृत्ति विज्ञानाऽऽकारैरेव व्यवहारसिद्धेः कृतं बाह्यार्थेनेति"। तदेतन्निराचिकीर्षुराह—

**मू०॥ नापोद्यं मानसिद्धं कथमिवविविधज्ञानमर्थापलापे**
**बाधोऽर्थानां न दृष्टो बहिरिति च पदं न प्रसिद्धार्थमृच्छेत्।**
**वेद्या विज्ञानभेदाः कथमथ विविधा वासना वा कुतस्स्युः**
**किंच प्रागुक्तदोषाः क्षणिकचिति हतस्तेन विज्ञानवादः॥**

नापोद्यमिति॥ मानेन=प्रत्यक्षादिप्रमाणेन, सिद्धं=प्रमितं स्तंभकुंभादि बाह्यवस्तु, नापोद्यम्=शक्यार्थे "शकि लिङ्च" इति चकारात् "वदः सुपि क्यप्च" इति कृत्यः। अपवदितुमशक्यमित्यर्थः। अपलापोह्युपलंभकप्रमाणाभावाद्वा? उपलंभस्यान्यविषयत्वाद्वा?। नाद्यः, चक्षुरादे स्तेनार्थोपलंभस्य च विश्वजनीनत्वात्। नापि द्वितीयः। बाधाद्यभावेप्यर्थोपलब्धेरन्यविषयत्वे, स्वगोचरत्वेऽप्यनाश्वासात्। नच विज्ञानविषययोर्भेदग्राहकाभावः, "अहमिदं जानामि" इति साक्षिणा ज्ञातृज्ञानज्ञेयानां भेदग्रहात्। नचात्र (1)विप्रतिपत्तिः वहिर्वदवभासत इति(2)वत्करणं कुर्वतो भवतोऽप्यनुभवसिद्धत्वात्। ननु बाह्यार्थस्य परमाणुतदन्यत्वादिना दुर्निरूपत्वात्तदभ्युपगन्त्रापि घटाकारं पटाकारं ज्ञान मित्यनुभवानुरोधेन ज्ञाने विषयाकारत्वस्यावश्यं वाच्यत्वात्, विषयाकारस्य ज्ञानेनैवावरोधेन व्यवहार-

(१) अत्र=भेदे. (२) वत्करणम्=वहिर्वदवभासत इति वच्छब्दोचारणम्.

सिद्धौ पृथग्विपयकल्पनवैयर्थ्यमित्याशंक्याह—कथमिवेति॥ अवयवान्य-त्वाऽनन्यत्वादिना दुर्वचत्वेनार्थापलापे ज्ञानमपि कथं विविधं नानाकारम्। इवेति प्राग्वत्, तदपि किम् अवयवाकारं? अवयव्याकारं? गुणक्रियासामा-न्याकारमेकमनेकं वा? आकाराणामपि ज्ञानाद्भेदोऽभेदो वा? इति विकल्प-साम्यात्, ज्ञाने मूर्तधर्मस्थौल्याद्ययोगाच्चेत्यर्थः। यथाह शून्यवादे कीर्तिः—

"तस्मान्नार्थेन विज्ञाने स्थूलाभासस्तदात्मना।
एकत्र प्रतिषिद्धत्वाद्बहुष्वपि न संभवः" इति॥

तस्मादुक्तविकल्पाऽसहत्वान्न बाह्यार्थेनापि विज्ञाने स्थूलत्वाऽव-भासस्संभवति। एकस्मिन् ज्ञानाकारे विरोधाद्बहूनां मिथो वार्तानभिज्ञ त्वादमूर्तत्वाच्चेति तदर्थः। अथवा—ज्ञाने वैचित्र्यनिमित्तस्य बाह्यार्थस्याप-लापे निर्निमित्तं विविधं=नानाकारं ज्ञानं कथमित्यर्थः। वासनास्त्वनुपदमेव निरसिष्यन्ते। अथवा—विविधशब्दः सादृश्यपरः। विविधं=अनेकार्थसदृ शं ज्ञानं कथमित्यर्थः। ज्ञानस्य प्रतिविषयं व्यवस्थासिद्ध्यर्थं विषयसारूप्य मभ्युपगच्छता नोपजीव्यो विषयोऽपलोतुं शक्य इति भावः। अथवा—घट-ज्ञानं, पटज्ञानमिति विशेषणयोर्घटपटयोर्भेदो, विशेष्यज्ञानैक्यं चानुभूयते। तत्र विशेषणापलापे ज्ञानं विविधं=नानाविशेषणकम् अनुभूयमानं कथ-मित्यर्थः। एवं घटस्मरणं घटप्रत्यक्षमिति विशेषणाभेदेऽपि ज्ञानभेदोऽनुभू-यते, तदपि कथमिति योजनीयम्। ननु येन सहैवानुभूयते तत्तताऽनति-रिक्तम्, यथा चन्द्रद्वित्वं। ज्ञानसहोपलंभनियताश्चार्थाः। यथाहुः—

"सहोपलंभनियमादभेदो नीलतद्धियोः।
भेदश्च भ्रान्तविज्ञानैर्दृश्येतेन्दाविवाऽद्वये॥" इति॥

इति चेन्न। रूपादीनामालोकसहोपलंभनियमेऽपि भेददर्शनेन व्यभि-चारात्। नन्वन्वयव्यतिरेकाभ्यां वासनानिमित्तमेव ज्ञानवैचित्र्यमित्यवग-म्यते। स्वप्नमायादिष्वन्तरेणापि बाह्यमर्थं वासनावैचित्र्येण ज्ञानवैचित्र्यदर्श-नात्। वासनामन्तरेण त्वर्थनिमित्तं ज्ञानवैचित्र्यं नाऽस्माभिरभ्युपगम्यते। तथाच स्वाप्नप्रत्ययसाम्याज्जाग्रत्प्रत्ययस्यापि असद्विषयत्वमेव। यथाहुः—

"अनादिवासनोद्भूतविकल्पपरिनिष्ठितः।
शब्दार्थस्त्रिविधो धर्मो भावाऽभावोभयाश्रयः॥" इति॥

नीलपीतादिस्सद्धर्मः। नरविषाणत्वादिरसद्धर्मः। अमूर्तत्वादिः सदसद्धर्मः, विज्ञानस्य शशविषाणादेश्चामूर्तत्वमिति वक्तुं शक्यत्वादित्यु-त्तरार्धार्थ इति। तत्राह—बाध इति। स्वाप्नार्थानामिव जाग्रदर्थानां बाधो न

ध्य इत्यर्थः। तथा च नासद्विषयकत्वे प्रत्ययत्वं वासनानिमित्तकत्वं वा प्रयो जकम्। अपितु बाध एव। अन्यथा जाग्रत्प्रत्ययस्य स्वाप्नप्रत्ययबाधकत्वाऽयोगादिति भावः। वस्तुतस्तु—स्वाप्नप्रत्ययस्यापि अनिर्वचनीयप्रातिभासिकार्थविषयकत्वान्न निरालंबनत्वमिति बोध्यम्। किंच, आन्तर एवार्थो बहिर्वदवभासत इति वदता, अवश्यं बहिः पदस्य किञ्चिदालंबनं वाच्यम्। नहि भवति देवदत्तः शशविषाणवदवभासत इति। तथा च बाह्यार्थो नापह्नोतुं शक्य इत्यभिप्रेत्याह—बहिरितीति। बाह्यार्थापलापे बहिरित्येतत्पदं प्रसिद्धमर्थं नच्छेत्=न प्राप्नुयादित्यर्थः। चकाराद्गुरुशिष्यबोध्यबोधकवादिप्रतिवादिप्रभृतीनामत्यन्ताऽसत्वमभ्युपगच्छतः शास्त्रप्रणयने वादकथादौ च प्रवृत्त्यनुपपत्तिरित्यपि बोध्यम्। किंच, पूर्वोत्तरकालाऽस्पर्शिनां स्वमात्रसंवेदनेनोपक्षीणानां विज्ञानानां स्वोत्पत्तिविनाशपूर्वाऽपरीभावविज्ञानांतर संतानादिगोचरत्वासंभवात्तदुत्पत्तिविनाशपूर्वाऽपरीभाव बंधमोक्षादिप्रतिज्ञा निरालंबनैवेत्यभिप्रेत्याह—वेद्या इति॥ विज्ञान भेदाः=विज्ञानानां भेदाः=व्यावृत्तयः विच्छित्तयः वैलक्षण्यादीनि च कथं त्वया वेद्याः=ज्ञातुं शक्याः। तेषां क्षणिकत्वस्वमात्रगोचरत्वाभ्युपगमादित्यर्थः। अथवा—विज्ञानानां भेदाः=विशेषाः नीलपीताद्याकाराः उक्तभेदादयश्च कथम्? लक्षणया केन वेदित्रा वेद्याः=ग्रहीतव्याः। न तावत्स्वेनैव, स्वात्मनि क्रियाविरोधात्। नाप्यन्येन, साक्षिस्वीकारापत्तेरित्यर्थः।

ननु साक्षिभास्यत्ववादेऽपि तस्य साक्षिणोऽपि स्वात्मनि क्रियाविरोधादन्यवेद्यत्वमित्यनवस्था, अन्योन्याश्रयो वा। दीपस्य दीपान्तरेणेव विज्ञानस्य साक्षिभास्यत्वानुपपत्तिश्चेति चेन्न। अनागन्तुकप्रत्यक्चैतन्यैकरसे निर्विशेषे स्वप्रकाशे साक्षिणि प्रकाशान्तरापेक्षाभावात्। मन्मते बुद्धिपरिणामस्य विज्ञानस्य चिद्रूपत्वाभावेऽपि स्वच्छत्वादुत्पत्तिसमकालमेव व्योमवत्सर्वगतचित्प्रतिबिंबग्राहितया स्फुरणमित्यदोषात्। तथाचोक्तं वार्तिके—

"वियद्वस्तुस्वभावानुरोधादेव न कारकात्।
वियत्संपूर्णतोत्पत्तौ कुंभस्यैवं दशा धियाम्॥" इति॥

तस्माद्यथा छेत्ता छिदया छेद्यं व्याप्नोति, न तु छिदाम् स्वात्मानं वा छिदान्तरेण, नापि छिदैव छेत्री, तथा साक्षी विज्ञानेन प्रमेयं व्याप्नोति, न विज्ञानं स्मात्मानं वा विज्ञानान्तरेण, नापि विज्ञानं स्वयमेव भासकमिति भावः। वासनावैचित्र्यात्प्रवृत्तिज्ञानवैचित्र्यमित्युक्तिं निराचष्टे—अथेति॥ अथ=बाह्यार्थज्ञानाकारत्वाभ्युपगमानन्तरमपि तद्वैचित्र्यहेतुभूता वासनाः

कुतः=कस्मान्निमित्ताद्वा स्युः । तथाच वासनासिद्धौ ज्ञानवैचित्र्यसिद्धिः, तत्सिद्धौ च वासनासिद्धिरित्यन्योन्याश्रयः। अनादित्वेन परिहारे त्वप्रमाणमूलकत्वाद्धंधपरंपरान्यायापत्तिरित्यवश्यं वासनासिद्ध्यर्थं बाह्यार्थोऽभ्युपेय इति भावः। अथवा—कुत इति सप्तम्यन्तात्सार्वविभक्तिकस्तसिः। कस्मिन्स्युरित्यर्थः। वास्यस्य स्थायिनोऽनभ्युपगमादसन्निहितभाविविज्ञानानां च वासयितुमशक्यत्वादित्यर्थः। अथवा—प्रथमान्तात्तसिः। कुतः= किं स्वरूपा वासनास्स्युः। किं विज्ञानेभ्यो भिन्ना उत न? आद्ये विज्ञानैकस्कंधवादहानिः। द्वितीये त्वभेदे निमित्तनैमित्तिकभावानुपपत्तिः। आलयविज्ञानसंतानपतितमेवाऽसंविदितं ज्ञानं वासनेति चेन्न। तस्यापि चिरातीतस्याऽसतो वैचित्र्यनिमित्तत्वायोगात्। यत्तूक्तं विज्ञानेन बाह्येऽर्थे अतिशयाधानाऽसंभवात्प्रकाशानुपपत्तिरिति, तन्न। चित्प्रतिबिंबग्राहिवृत्त्या बाह्येऽर्थे आवरणभंगलक्षणस्य चिदुपरागलक्षणस्य वाऽतिशयस्याधानेन प्रकाशसंभवात्। अतीतानागतवस्तूनामपि सूक्ष्मरूपेणावस्थानाभ्युपगमेन तत्रापि ज्ञानेनाऽसत्त्वापादकाऽज्ञानाऽऽवरणनाशेन पारोक्ष्येण स्फुरणसंभवात्। उपपादयिष्यते चैवमुपरिष्टात्। भेदाभेदादिना दुर्वचत्वं च, सर्ववस्तूनां मायामयत्वात्, नत्वत्यन्तासत्वात्। अन्यथा विज्ञानानामपि भेदाऽभेदादिना दुर्वचत्वेनाऽसत्वप्रसक्तौ शून्यवादप्रसङ्गात्। किञ्च, विज्ञानस्य क्षणिकत्वात्सौत्रान्तिकमतोक्त दोषाऽनिर्मोकश्चेत्याह—किञ्चेति ॥ प्रागुक्ताः=पूर्ववादिमतनिरासार्थमुक्ताः—अभावग्रस्तानामुत्पादकत्वासंभवः, प्रतिज्ञाविरोधः, वस्तुनः शाश्वतत्वप्रसंगश्चेत्येवमादयो दोषाः क्षणिके चिति=विज्ञानेऽपि स्युरेवेत्यर्थः। स्थितिदर्शनोपवासाद्यर्थेषु तिष्ठता पश्यता पोपधमित्याद्यपशब्दप्रयोगादप्यसंगतं सुगतदर्शनमित्यनुक्तदोषसमुच्चयार्थश्चकारः। तेन=उक्तदूषणगणेन, विज्ञानवादः=क्षणिकविज्ञानैकस्कंधवादः हतः=निरस्तः न पुनरुत्थातुं क्षमत इत्यर्थः ॥ २५ ॥

इत्थं क्षणिकविज्ञानवादिनां प्रतीत्यसमुत्पादः, क्षणिकभावाद्भावकार्योद्‍यलक्षणो निरस्तः। इदानीं क्षणिकभावस्य निरपेक्षस्य कार्योत्पादकत्वे पुरुषप्रयत्नादिसहकारिवैयर्थ्यात्, सापेक्षत्वे च क्षणस्याऽभेद्यत्वेनोपकृतत्वाऽनुपकृतत्वावस्थाद्वयासंभवाद्भवदुक्तदोषनिवहाच्च वैनाशिकैरर्थान्निरुपाख्यादभावादेव जगदुत्पत्तिरभ्युपगता,शून्यवादिनापि निरधिष्ठानमेवजगदारोपमभ्युपगच्छता अर्थात्तादृशाभावादेव सांव्यवहारिकजगदुत्पत्तिरभ्युपगतेति पूर्ववादिनां पक्षान्तरं शून्यवादिमतं चैकीकृत्य निराकरिष्यन्नाह—

**नाऽभावाद्भावजन्म क्वचिदपि कलितं निर्विशेषाद्विचित्रं**
**न स्यात्तेनानुविद्धेऽह्यसदसदिति च प्रत्ययस्स्यादशेषे।**
**केनाऽभावप्रथा ते किमिति न सकलं सर्वतस्स्यादभीष्टं**
**सर्वेषां स्यादयत्नं किमिति जड भवानात्मघाते प्रवृत्तः॥ २६ ॥**

नाभावादिति॥ अत्यन्तासत अभावात् भावस्य=भावपदार्थस्य जन्म क्वचिदपि देशे काले वा न कलितम्=न दृष्टम्, न श्रुतं चेत्यर्थः। यद्यभावाद्भावोत्पत्तिस्स्याच्चिरविनष्टबीजेभ्यः शशविषाणादिभ्यश्च सदैवाङ्कुराद्युत्पादस्स्यात्। नच तथादृश्यत इति भावः। किंच, बीजाद्युपमर्दस्य, मृत्पिण्डाद्युपर्दस्य शशशृङ्गादेश्च निरुपाख्यस्य वैलक्षण्याभावादङ्कुरघटादीनां परस्परवैलक्षण्यं न स्यादित्याह—निर्विशेषादिति॥ निर्विशेषात्=व्यावर्तकधर्मशून्यात्, घटाङ्कुरादिविचित्रं=परस्परव्यावर्तक गुणक्रियासामान्यविशिष्टं न स्यात्। कारणवैचित्र्यं विना कार्ये तदयोगात्। यदितूत्पलादौ नैल्यादीवाऽभावेऽपि विशेषा अभ्युपगम्येरंस्तर्हि अभावत्वमेव भज्येतेति भावः। नच प्रतियोगिवैचित्र्यादेव वैचित्र्यहेतुत्वम्। तद्वैचित्र्येऽपि हेत्वन्वेषणादनवस्थाद्यापत्तेः, प्रतियोग्यभ्युपगमे शून्यवादहानाच्च। किंच, यद्येनान्वितं प्रतीयते तत्तस्यैव विकारः, यथा—कटकादयो हाटकस्य। तथाच सत्सदिति सदन्वितप्रतीतिगोचरस्य जगतस्सदेवोपादानं नासत्, तथासत्यसदन्वितत्वेनैव प्रतीतिप्रसङ्गादित्याह—तेनेति॥ तेन=अभावेन, अनुविद्धे=अन्विते अशेषे जगति 'घटोऽसन् पटोऽसन्' इत्येवं रूप एव प्रत्ययस्स्यात्, नतु सन्सन्निति। नच तथाकस्यचित्प्रतीतिरस्तीति सदेवोपादानमित्यर्थः। ननु सतोवा कूटस्थस्य कथं कारणत्वम्? सद्धि कार्यजननस्वभावमतत्स्वभावं वा?। अद्ये समर्थस्याऽपेक्षाऽयोगाद्यावदनेन कर्तव्यं तावत्सहसैव कुर्यात्। द्वितीये न कदापि कार्यं जनयेत्। कादाचित्कसहकारिसापेक्षत्वान्नायं दोष इति चेत्, न। सहकारिणामुपकारानाधायकत्वे वैयर्थ्यात्। तदाधायकत्वे उपकारस्यापि कार्यत्वात्तदाधानाय सहकार्यन्तरं तत्कृतोपकारान्तरं, तत्राप्यन्यदन्यदित्यनवस्थापातात्। उपकारस्यैवाऽन्वयव्यतिरेकाभ्यां कार्यहेतुत्वसंभवेन कूटस्थस्य कारणत्वभङ्गात्। उपकारलक्षणविकाराश्रयत्वे कौटस्थ्य भङ्गाच्च। यथाहुः—

"वर्षातपाभ्यां किंव्योम्नश्चर्मण्यस्ति तयोः फलम्।
चर्मोपमश्चेत्सोऽनित्यः खतुल्यश्चेदसत्फलः॥" इति॥

तस्मादसतोऽपि हेतुत्वसंभव इति चेन्न। कूटस्थस्याप्यनिर्वाच्याऽविद्याकृतस्य कामसंसर्गस्यानादिसहकारिसंनिधिनित्याद्विचित्रजगत्स्यासाधिष्ठानत्वलक्षणे विवर्तोपादानत्वे बाधकाभावात्। कथमन्यथा व्योम्नि तलमलिनताद्यध्यासः। न च तत्रोपकाराधानाऽसंभवः। उपकारस्याप्यनिर्वचनीयत्वात्। अतएव तत्प्रयुक्तकार्यमप्यनिर्वचनीयमेव। न च अविद्यादिभिरेव कार्यसिद्धौ कूटस्थस्य सतोऽन्यथासिद्धिरिति वाच्यम्। तथाविधस्यापि रज्ज्वादेरन्वयव्यतिरेकाभ्यां सर्पाद्युपादानत्वदर्शनेन निरधिष्ठानाऽऽरोपासंभवात्। अविद्यादेः धर्मिकूटस्थकारणत्वनिर्वाहाय कल्पितत्वेनान्यथासिद्धत्वाभावात्॥ किंच, प्रागभावानङ्गीकर्तुः प्रपंच न सिध्यति, कुतस्तरां तस्य कारणत्वमित्यभिप्रेत्याह—येनेति। ते=तव असत्यस्य प्रपञ्चसिद्धिः येन? न तावत् प्रत्यक्षेण, अवस्तुन इन्द्रियसंबंधाऽयोगात्। अत एव तद्व्याप्तिग्रहाभावादनुमानेनापि। नाप्युपलब्ध्या, तस्याश्च प्रामाण्यानभ्युपगमात्। नापि साक्षिणा, तदभ्युपगमे सर्वशून्यत्वभंगात्। क्षणिकविज्ञानानां च स्वमात्रग्राहकत्वाद्रूपत्वेन तेषां संबंधाऽघटनादित्यर्थः। निर्विशेषस्यात्मभावस्य विचित्रजगज्जननस्यायोगात्ये तस्य सार्थविकल्पात्सर्वकार्याणां सर्वदोत्पत्तिस्स्यादित्याशयेनाह—किमिवेति। सकलं कार्यं सर्वतः=सर्वत्र किमिति न स्यात्? एवं सर्वदा सर्वात्मकं च किमिति न स्यादित्यपि बोध्यम्। अत एव कृषीवलादेर्विनापि कृष्यादिप्रयत्नमभीष्टसिद्धिस्स्यात्, असत्यस्य तुल्यत्वादित्याह—अभीष्टमिति॥ अयत्नात्=यत्नं विनापि सर्वेषां सर्वमभीष्टं सर्वदा स्यात्। तथा च कृष्यादिप्रवृत्तिर्व्यर्थेत्यर्थः। किंच, सर्वशून्यता ज्ञानस्य फलं नैरात्म्यलक्षणा मुक्तिस्त्वयाभिमता। साच न पुरुषार्थः। प्रत्युताऽनर्थ एव। नहि कश्चिदात्मनो नाशमनर्थं वा स्पृहयति। प्रत्युत तद्द्वेष्येवेति शास्त्रस्य वैफल्यमनर्थार्थत्वं चेत्यभिप्रेत्योपहसति—किमितीति॥ अथवा, असन्मार्गोपदेशेन जगदनिष्टकारिणस्तथागतस्यायमेव दुरन्तनरकाद्यनिष्टमिति खेदेनाह—किमितीति॥ हे जड=स्वपरहितानभिज्ञ, आत्मघाते=स्वनरकेऽनाघसन्मार्गोपदेशे भवान् किमिति प्रवृत्तः? अहो ते दुर्नयविलसितम्! इत्यर्थः॥ २६॥

एवं मुक्तकच्छानां समये निरस्ते विवसनसमयः प्रसङ्गान्निरस्यते। ते ह्येवमाहुः—जीवाऽजीवाऽऽस्रवसंवरनिर्जरबंधमोक्षाख्याः सप्तपदार्थाः। संक्षेपतस्तु जीवाजीवौ द्वावेव पदार्थौ। तयोरेव जीवास्तिकायः, पुद्गलास्तिकायः, धर्मास्तिकायः, अधर्मास्तिकायः, आकाशास्तिकायश्चेत्यपरः पञ्चधा

विभागक्रम: ॥ अस्तिकायशब्द: पदार्थवाची। तत्र जीवास्त्रिविधा:— अर्हन्मुख्याः नित्यसिद्धा:, तच्छिष्यपरंपरासु मुक्ताः, सांप्रतिकबद्धाश्चेति। पृथिव्यादिचतुष्टयं स्थावरं जंगमंचेति षड्विधः पूर्यते गलति चेति व्युत्पत्तेरुपचयापचयधर्मी पुद्गलास्तिकाय:। मोक्षमार्गप्रवृत्त्यनुमेयो धर्मास्तिकाय:। संसारस्थित्यनुमेय स्त्वधर्मास्तिकाय:। लोकाऽलोकाऽऽकाशभेदेन आकाशास्तिकायो द्विधा। आद्योऽधस्ताद्बद्धस्थानं, द्वितीय उपरिष्टान्मुक्तोपसृप्य:। पौरुषं ज्योतिर्विषयेष्वास्रावयतीत्यास्रव इन्द्रियप्रवृत्ति:। आस्रवस्रोत: संवृणोतीति संवर: शमदमादि:। पुण्याऽपुण्याख्यसर्वकर्मनिर्जरणहेतुत्वान्निर्जरस्तप्तशिलाऽऽरोहणादि:। बंधोऽष्टविधं कर्म। तत्राऽऽर्हतदर्शनान्नमुक्ति:,आर्हतदर्शनमप्रमाणं,नाना तीर्थकरदर्शितमार्गेषु कोविशेषइत्येवं विधनिश्चयत्रयहेतवः सन्मार्गप्रवृत्तिविघ्नश्चेति चतुर्विधं क्रमाज्ज्ञानावरणीयं, दर्शनावरणीयं, मोहनीयमन्तरायंचेति चतुस्संज्ञं श्रेयोविघातित्वाद्घातिकर्म॥ मम वेदितव्यं तत्वमस्ति, तच्चैतन्नासकम्, अहमार्हतशिष्यपरंपरात्मकगोत्रप्रविष्ट इति त्रिविधज्ञानहेतवो यावज्ज्ञानोदयं जीवनसंपादकंचेति चतुर्विधं क्रमाद्वेदनीयं, नामिकं, गोत्रिकम्, आयुष्कं चेति चतुस्संज्ञं श्रेयोऽनुकूलत्वादघातिकर्मेत्यष्टविधं कर्म। विगलितसमस्तक्लेशतद्वासनस्याऽनावरणज्ञानस्य सुखैकतानस्याऽऽत्मनउपर्युपर्यलोकाकाशेऽवस्थानं मोक्ष:। धर्माऽधर्मबलात्संसारे निमग्नस्य जीवस्य तत्वज्ञानात्तद्विच्छेदे जलतुंबिकान्यायेन सततोर्ध्वगमनं मोक्ष इत्यन्ये। तएतेसप्तपदार्था अनैकान्तस्वभावा इति प्रतिपादनाय सप्तभंगीनयं नाम न्यायमवतारयति—तद्यथा—स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च, स्यादवक्तव्य:, स्यादस्ति चाऽवक्तव्यश्च,स्यान्नास्तिचाऽऽवक्तव्यश्च, स्यादस्ति च नास्तिचाऽवक्तव्यश्चेति। एवंस्यादेक:, स्यादनेक:, स्याद्भिन्न:, स्यादभिन्न इति सर्वधर्मेषु विकल्पा बोध्या:। अस्माच्च न्यायात्सर्वाऽनैकांत्यसिद्धि:। सप्तचैकान्तभङ्गा: कथंकथं कदा कदा च प्रसरन्तीत्यपेक्षायामनन्तवीर्य आह—

"तद्विधानविवक्षायां स्यादस्तीति गतिर्भवेत्।
स्यान्नास्तीति प्रयोग:स्यात्तन्निषेधे विवक्षिते॥
क्रमेणोभयवाञ्छायां प्रयोग: समुदायभृत्।
युगपत्तद्विवक्षायां स्यादवाच्यमशक्तित:॥
आद्यावाच्यविवक्षायां पञ्चमो भंग इष्यते।
अन्त्यावाच्यविवक्षायां षष्ठभंगसमुद्भव:।
समुच्चयेन युक्तश्च सप्तमो भंग उच्यते॥" इति॥

सदसत्त्वैकान्ते भंगे अनिर्वाच्यत्वनियमभङ्गाय चतुर्थो भङ्गः। एवमेव परेषु सत्त्वाद्युक्ताऽनिर्वचनीयत्वैकान्त्यभङ्गायान्ये भङ्गाः। सर्वत्र "स्यादिति" कथंचिदित्यर्थको निपातः सर्वथाऽनैकान्त्यद्योतनाय। तथाचाहुः—

"स्याद्वादः सर्वथैकान्तत्यागात्किंवृत्तचिद्विधिः।
सप्तभंगनयापेक्षो हेयाऽऽदेयविशेषकृत्॥" इति॥

किंवृत्तचिद्विधिः=किंशब्दनिष्पन्नकथंचिच्छब्दयोगित्वात्, सर्वथा वस्त्वनेकान्त्यम्। तथाहि—यदि वस्त्वेकमेव तर्हि सर्वदा सर्वत्र सर्वात्मनाऽस्त्येवेति स ,तद्वाच्छिन्नाऽच्छिन्नत्वे स्याताम्, हानोपादानयोरशक्यत्वात्। अनेकान्त्ये तु कादाचित्के कालिके च ते उपपद्येते इति। तदेतन्निराचिकीर्षुराह—

**नैकोऽर्थः सप्तधा स्याद्भवति यदि भवत्साप्तविध्यं च तत्र**
**जीवाजीवादयोऽर्थाः किमिति च न तथा स्याद्गणाऽव्यवस्थम्।**
**संदेहस्याविरोधादपुनरथ ते बंधमोक्षाव्यवस्था**
**सर्वोऽनैकान्त्यवादो गतत्रपत। ततो भाति मत्तप्रलापः॥**

नैकोऽर्थ इति॥ एकः=अभिन्नः घटकुंभादिरर्थः, अस्तित्वनास्तित्वादिविरुद्धधर्मैः सप्तधा=सप्तप्रकारः न स्यात्, एकत्र विरुद्धधर्माणामसमावेशात्। समावेशे च धर्मिणोऽप्यद्वैतप्रसङ्गात्। परस्परविरोधेन धर्माणां भिन्नत्वे कल्पितेऽपि धर्मिस्वरूपस्य सर्वस्वरूपस्यैव परिशेषाद्वानैकान्त्याभावात्। परमार्थतोऽस्ति प्रततत्वं तद्वस्त्वेव न नास्तीत्यपलपितुं शक्यम्। आत्माऽपलापे अपलापकस्याप्यसिद्धेः। व्यवहारे जगद्रूपमपि व्यावहारिकप्रमाणसिद्धमधिष्ठानसत्तया सत्तयाऽस्त्येवैकरूपमेव। न च तथास्ति क्वचिदस्ति क्वचिन्नास्तीति द्विविधव्यवहारानुपपत्तिः। अत एव वस्तुनो देशकालसंबंधविशेषमपेक्ष्य परिच्छिन्नरूपेण कल्प्यमानयोरस्त्यान्यास्त्ययोर्वस्तुसंस्पर्शेन तद्रूपत्वाऽविरोधित्वात्। परमार्थदृष्टौ तु जगत्संभावनैव नास्तीति धर्म्यनिरूपणे कस्मिन्नानैकान्त्यमिति भावः। किंच, अनेकान्त्यवादिनः पदार्थेषु साप्तविध्यप्रतिपादनाऽनुपपत्तिः, तस्याप्यनैकान्त्यादिति स्वप्रक्रियाव्याघातश्चेत्यभिप्रेत्याह—भवति यदीति॥ यद्येकोऽर्थो विरुद्धसाप्तविध्यलक्षणाऽनैकान्त्यवान्भवति, तर्हि त्वया पदार्थेषु विभागेन दर्शितं साप्तविध्यं च=सप्तप्रकारत्वमपि, तत्र=अनैकान्तिकं स्यादित्यर्थः। तथाच सप्तपदार्था

इति प्रतिज्ञाविरोध इति भावः। अथवा, एकैकस्मिन्वस्तुनि विरुद्धं त्वदुक्तसाप्तविध्यलक्षणमनैकान्त्यमपि तद्वत्=अनेकान्तं स्यात्। तथाच सर्ववस्तुष्वनैकान्त्यनियमाऽसिद्धिरित्यर्थः। अथवा, साप्तविध्यमनैकान्तिकं नवा? उभयथाप्यनैकान्त्यनियमासिद्धिः, आद्ये आत्माश्रयादिश्चेत्यभिप्रेत्याह—भवतीति॥ अत्र तद्वदिति मतुबन्तमात्माश्रयादिद्योतनाय बोध्यम्। किंच जीवाजीवादिस्वरूपमप्यनियतरूपं चेत्परस्परसंकीर्णस्य तस्य नियतरूपेण विभागाऽनुपपत्तिश्चेत्यभिप्रेत्याह—जीवाजीवादय इति॥ अर्थाः=त्वदभिमतपदार्थाः, तथा=स्याज्जीवः,स्यादजीव इति भङ्गसंभवादनेकान्तस्वभावाः किमिति न भवेयुरिति विपरिणामेन संबंधः। अनियते च शास्त्रार्थे शिष्याणामनाश्वासात्प्रवृत्तिर्नस्यात्। कस्यचित्कथंचित्प्रवृत्तावपि धर्माधर्मयोस्तत्फलयोश्च सांकर्यादनर्थावाप्तिरपि स्यादिति भावः। न केवलं शास्त्रार्थ एव शिष्याणामेव प्रवृत्त्यनुपपत्तिः। किन्तु कस्यापि क्वापि प्रवृत्त्यनुपपत्तिः। अन्नादौ विषादौ च तृप्ति मरणसाधनत्वानैकान्त्य साम्यादित्याशयेनाऽऽह—स्यादिति॥ अनैकान्त्ये जगत्=वस्तुमात्रं, अव्यवस्थं=हानोपादानोपयोगिसदसद्व्यवस्थाशून्यं स्यादित्यर्थः। तथाच स्याद्वादो "हेयाऽऽदेयविशेषकृत्" इत्येतद्विपरीतमिति भावः।

किंच, त्वदभिमतानैकान्त्यज्ञानं विरुद्धनानाकोट्यवगाहित्वात्संशयात्मकमेव स्यादित्याह—संदेह इति॥ ते=तव, अवधृतिः=शास्त्रार्थनिर्णयत्वेनाभिमतं ज्ञानं कोट्यंशे विरोधात्=विरुद्धनानाकोट्यवगाहित्वादित्यर्थः।सन्देहः=संशयात्मकं ज्ञानं स्यात्—एकस्मिन्धर्मिणि विरुद्धनानाकोट्यवगाहिज्ञानं संशय इति तल्लक्षणयोगादित्यर्थः। तथाच तस्याऽप्रमात्वाच्छास्त्रस्याऽप्रामाण्यं स्यादिति भावः। नचानैकान्त्यस्य वस्तुयाथात्म्यत्वान्नतदवगाहन उक्तदोष इति युक्तम्। वस्तुनि विकल्पाऽसंभवेन तस्य वस्तुयाथात्म्यत्वासिद्धेः। तथाचोपहसितमाचार्यवाचस्पतिमिश्रैः="तस्मात्स्थाणुर्वा पुरुषोवेति ज्ञानवत् सप्तत्वपञ्चत्वनिर्द्धारणस्य च फलस्य निर्द्धारयितुः प्रमाणस्य च, तत्प्रमेयस्य च सप्तत्वपंचत्वसदसत्वसंशये साधुसमर्थितं तीर्थकरत्वमृषभेण" इति॥ अथवा, यदि विरुद्धकोट्यवगाहित्वेऽप्यनैकान्त्यज्ञानं प्रमास्यात्तदा स्थाणुर्वा पुरुषोवेति संशयोऽपि तथा स्यात्, स्थाणुपुरुषयोर्भेदस्याप्यनैकान्त्यादित्याशयेनाह—संदेह इति॥ कोट्यंशे विरोधात्संदेहत्वेन सर्वानुभवसिद्धोऽपि प्रत्ययः अवधृतिः=वस्तुयाथात्म्यनिश्चयस्स्यादित्यर्थः। अपिच जैनैः शरीरपरिमाणो जीव इत्यभ्युपगमात्तथाविधस्य च सावयत्वावश्यंभावान्मनुष्यदेहपरिमितस्य बाल्याद्यवस्थाभेदे हस्तिमशकादिदेह-

148622

प्राप्तौ च व्यापनसमागमनयोरवयवोपचयाऽपचयावन्तरेणाऽसंभवादुपचिताऽपचितयोर्मेद्रत्पत्तिविनाशधर्मताप्रसक्तावभिनयोत्यन्तस्य निष्कारणोबंधः, विनष्टे च तस्मिन्नन्यस्य निष्कारणो मोक्षश्चाऽव्यस्थितः फलितस्त्यादित्याशयेनाह–अथेति॥ अस्त्येवाऽनैकान्त्यप्रयुक्ताऽव्यवस्था, तत्रेयमपराप्यव्यवस्थेति द्योतनार्थमथशब्दः॥ निष्कारणयोर्बंधमोक्षयोः, अव्यवस्था=अस्थितिः, असंभव इत्यर्थः। अथवा, निष्कारणमेव बंधमोक्षकल्पने पूर्वमुक्तानामर्हदादीनां च बंधप्रसङ्गः, विनैव शास्त्रीयोपायं सर्वेषां मोक्षप्रसङ्गः, ततो बंधमसङ्गश्चेत्यव्यवस्था=अनियमस्त्यादित्यर्थः। तत्कल्पितपरमाणुकारणवादः,पदार्थविशेषाः, धर्माऽधर्मादयो मोक्षोपायादयश्च सर्वाने कान्त्यं समर्थयद्भिस्तैरेव पराहता नपृथग्दूषणार्हा इति स्वोक्तिव्याहतं सर्वप्रमाणविरुद्धं च जैनदर्शनमितिदर्शयन्नुपसंहरति—सर्वेति॥ दिगवसन=दिगंबरेति निर्लज्जत्वमत्तत्वद्योतकं संबोधनं। ततः=उक्तदोषगणात्तव सर्वोऽनैकान्त्यवादो मदिरादिना मत्तस्य, ग्रहावेशादिना परवशचित्तस्येव वा प्रलापः=निरर्थकजल्पितं भाति सचेतसामिति शेषः। तथाचसर्वथाऽनुपादेय इत्यर्थः॥

इत्थं बाह्यदर्शनेषु निरस्तेषु वैदिकैकदेशी हिरण्यगर्भः प्रत्यवतिष्ठते॥ ननु "हिरण्यगर्भस्समवर्ततताग्रे भूतस्य जातः पतिरेक आसीत्" "नैवेहकिंचनाग्र आसीत्","मृत्युनैवेदमावृतमासीत्" इत्यादिश्रुतिभिः "आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत" इत्यादिस्मृतिभिश्च हिरण्यगर्भस्यैव सर्वजगदादिकारणत्वमवगतमिति न भवदभिमतब्रह्मकारणत्वसिद्धिः। न च "यो ब्रह्माणं विदधाति पूर्वम्" "यो देवानां प्रभवश्चोद्भवश्च" इत्यादि मन्त्रेषु हिरण्यगर्भस्यापि जनकोऽन्यः श्रूयत इति वाच्यम्। "नैवेह किञ्चनाग्र आसीत्" "आदिकर्ता सभूतानाम्" इति ब्राह्मणस्मृतिवाक्याभ्यामितरनिरासे "सोमः पवते जनिता मतीनाम्" इति मन्त्रस्य सोमलतायायागद्वारा सर्वदेवताप्यायकत्वात्तज्जनकत्वोपचारिकत्ववत्तेषामप्युपचारेणोपास्यदेवतान्तरप्रशंसार्थत्वात्। अतएवास्मदुदाहृतमन्त्रेषु आसीदितिपदं "सदेव सौम्येदमग्र आसीत्, ब्रह्मवा इदमग्र आसीत्" इत्यादौ भवदभिमते ब्रह्मणीव नित्यसत्तायास्त्रैकालिकत्वादतीतकालसंबंधोप्यस्तीति तन्मात्राभिप्रायं नातीतसत्वाभिप्रायम्। अर्चिरादिमार्गेण हिरण्यगर्भावाप्तिरेव हि तत्र तत्र ब्रह्मविदां श्रूयते। तच्च हिरण्यगर्भस्यैव परत्वेऽवकल्पते। अन्यथा दहरादिविद्यासु हिरण्यगर्भस्य कारणं ब्रह्मैवभवन्मत उपास्यमिति तत्क्रतुन्यायेनोपासकस्य कारणप्राप्तिरेव फलं वाच्यमिति हिरण्यगर्भाऽवाप्तये मार्गोपदेशः "प्रजापतेः सभांवेश्मप्रपद्य" इत्यादिमन्त्रलिङ्गञ्चाऽसंगतं स्यात्। तस्माद्धि-

रण्यगर्भ एव परः, तदुपास्तिपरश्च सर्ववेदान्त इति॥ तदेतन्निराकर्तुमाह-

**एवं हैरण्यगर्भाद्युदितमपि जगत्कारणं नाऽऽदरार्हं**
**यस्मात्कस्य प्रसूतिः श्रुतिभिरधिगता क्लृप्तमायुर्मितं च।**
**अस्य ज्ञानादियोगं गमयति च यतो ब्रह्मतो ब्रह्मवाणी**
**तस्माद्ब्रह्मैव मायाशबलितमुचितं श्रौतमेकं निदानम् ॥२८॥**

एवमिति॥ हिरण्यगर्भो हि योगाद्यभिमतेश्वरवत्केवलनिमित्तकारणं वा? ब्रह्मवदभिन्ननिमित्तोपादानं वा? अस्मदभिमतसूक्ष्मभूतकार्यलिङ्गसमष्ट्युपाधिको वा? आद्ये योगादिमतनिरासदर्शितान् तनुकरणादिसापेक्षत्वनिरपेक्षत्वयोर्दोषानतिदिशति—एवमिति॥ हैरण्यगर्भैः=हिरण्यगर्भोपासकैः, आदिपदात्कालस्वभावादिवादिपरिग्रहः। तैः, उदितम्=उक्तं हिरण्यगर्भादिरूपं जगत्कारणमपि, एवम्=कापिलवैशेषिकाद्युपदर्शितकेवलनिमित्तकारणवदेव नादरार्हम्=अनादरणीयं दूष्यमित्यर्थः। द्वितीये तु सत्यभूतप्रपंचाकारपरिणामित्वे सविकारत्वादनित्यत्वप्रसङ्गः। तृतीयेऽपि कार्योपाधेः जीवसमष्ट्यात्मनो जीवत्वमेवेति मूलकारणत्वानुपपत्तिः॥ जीवसमष्ट्यात्मत्वं तु तस्य "स एव तस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षत" इति प्रश्नोपनिषदादौ प्रसिद्धम्। अतएव सर्वभूताधिपत्यं कारणत्वं च सापेक्षमेव त्वदुदाहृतमन्त्रे जातपदस्वारस्यादपि तस्याऽन्याधीनजन्मता। अन्यथा आसीदित्यनेन पौनरुक्त्यात्। किञ्च, बृहदारण्यकेऽपि "स यत्पूर्वोऽस्मात्सर्वस्मात्सर्वान्पाप्मन औषत्" "सोऽबिभेत् स वै नैव रेमे" इत्यादिना सर्वदाऽस्यपापभयादिश्रवणादपि न तस्य मूलकारणत्वम्। अत एव "नैवेह किञ्चनाग्र आसीत्" इति न मूलकारणं प्रतिषिध्यते, "मृत्युनैवेदमावृतमासीत्" इत्युत्तरवाक्ये आवरणीयकार्यजातस्य, आवारकस्य मृत्योः हिरण्यगर्भस्य च सद्भावप्रतिपादनात्। तस्य च पिण्डघटोभयानुगतमृत्स्वरूपस्येवोभयानुगतकारणब्रह्मसत्ताया अनभ्युपगमे दुरुपपादत्वात्।

"स वै शरीरी प्रथमः स वै पुरुष उच्यते।
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत॥"

इति त्वदुदाहृतस्मृतावपि प्रथमः शरीरीति तस्य जीवत्वप्रतिपादनादादिकर्तृत्वमपि तदुत्तरकार्यापेक्षमेव। अत एव "यो ब्रह्माणम्" इत्यादिमन्त्राणां नोपचरितार्थत्वमित्यभिप्रेत्याह — यस्मादिति॥ यस्मात्कारणात् कस्य=हिरण्यगर्भाख्यस्य त्वदभिमतकारणस्य प्रसूतिः=अन्याधीनोत्पत्तिः

इति स्मृतेश्च न ब्रह्मविदोऽर्चिरादिगतिः। शुकस्य सूर्याभिगमनं तु योगमाहात्म्यख्यापनाय सशरीरस्यैवेति तत्प्रकरणस्थसर्वभूतदृश्यत्वोपन्यासादवगम्यते। सविशेषब्रह्मविदां त्वनात्मकामत्वात्सांकल्पिकपितृमात्राद्युपासनाफलोपभोगकामत्वाच्च तद्भोगायार्चिरादिगतिः,ततोऽपि कारणब्रह्मभावे भोगासिद्धेरनादिसिद्धेश्वरत्वस्यो पास्तिफलत्वासंभवाच्च तेषां कार्यब्रह्मभावेनैव भोगोऽप्यर्थसिद्ध इति न तत्क्रतुन्यायविरोधः। अत एव न मन्त्रलिङ्गविरोधोऽपि। "कार्यं बादरिरस्यगत्युपपत्तेः" इत्यधिकरणे दहराद्युपासकानामपि कार्यब्रह्मावाप्तेः सिद्धान्तितत्वादिति भावः। सर्गाद्यनुकूलज्ञानस्येश्वराधीनत्वश्रवणेन स्वतः सार्वज्ञ्याद्यभावादपि हिरण्यगर्भस्य न मूलकारणतेत्याह—अस्येति॥ यतो ब्रह्मवाणी=वेदवाक् "योब्रह्माणं विदधाति पूर्वम्" इत्येवमाद्या, अस्य=हिरण्यगर्भस्य,ब्रह्मतः=मूलकारणेश्वरसकाशात् ज्ञानादियोगम्=वेदद्वारासृष्ट्यनुकूलज्ञानैश्वर्यशक्तिसंबंधं, गमयति=बोधयति। तथाच बाधकाभावेन सोमलतावैषम्यान्नोपचरितार्थत्वं युक्तमिति भावः। चकार उत्पत्ति समुच्चयार्थः ज्ञानादियोगमित्यस्यानन्तरं योज्यः। इत्थं हैरण्यगर्भमतं निरस्तम्। स्वभावादिवादास्तु युक्त्याऽऽभासादिमूलकाः प्रत्यक्षश्रुतिविरोधात्तत्तत्प्रसंगोक्तयुक्तिजालैश्च निरस्तप्राया एवेति न पृथङ्निरस्यन्ते। एवं निरस्तेषु वादिगणेषु विजयमुद्घोषयन्निव प्रकृतं श्रौतब्रह्मकारणवादं निगमयन्नुपसंहरति—तस्मादिति॥ तस्मात्=अविरोधात्, श्रौतम्=सर्वोपनिषत्तात्पर्यविषयीभूतम्; एकम्=अद्वितीयसच्चिदानन्दात्मकं ब्रह्मैव, अनिर्वचनीयानन्तशक्तिमायाशबलितं जगतो निदानम्=आदिकारणं सिद्धं नान्यदित्यर्थः।

इति तत्पदवाच्यार्थनिर्णयः॥



नमः शिवाय॥ इत्थं बहुतरविरुद्धवादिमतनिरासपुरस्सरं लक्षणस्वरूपप्रमाणैस्तत्पदवाच्यार्थं व्यवस्थाप्येदानीं त्वं पदार्थमपि वादिविप्रतिपत्तिनिरासमुखेनैव परिशोध्यदिदर्शयिषुः चार्वाकान् प्रथममास्कन्दति॥ तत्र देहात्मवादिनस्तावदेवमाहुः—"अहमित्यनुभवे देह एव प्रथते, न देहान्तर्वर्त्यन्यः कुण्ड इव दधि। अत एव च 'अहंस्थूलो गौरो गच्छामि, जानामि' इत्याऽऽपण्डितपामरं स्थौल्यगौरतेच्छाज्ञानादेःसामानाधिकरण्यानुभवः। नहि धर्मिभेदे धर्माणां सामानाधिकरण्यानुभवः। नहि भवति 'मधुरं कुण्डं कंबुग्रीवादिमद्दधि' इति। लोहितस्स्फटिक इति धीस्तु स्फटिकलोहितद्रव्य

योः पृथक्करणे बाध्यते। नच नाहं मनुष्य इति कस्य चिद्बाधप्रत्ययोऽस्ति। विदुषामपि गच्छामि, तिष्ठामि, लंघयामि ब्राह्मणो मनुष्योऽहमित्याद्यनुभवात्। यद्यपि समस्तेषु व्यस्तेषु च पृथिव्यादिषु न चैतन्यं दृष्टम्। तथापि कायाकारपरिणतेषु भविष्यति,मदिराकारपरिणतेष्विव(१) किण्वादिषु मदशक्तिः, खदिरचूर्णादिसंवलिततांबूल इव च रागोदयः। देहाधीनोपलंभनियमाच्च ज्ञानादेर्देहधर्मत्वम्। तथाचाहुः—"चैतन्यविशिष्टः पुरुषः कायः' इति। तेषामन्यधर्मत्वे दृष्टहानिः, अदृष्टकल्पनाच स्यादिति देह एव आत्मा" इति॥ तांश्चतुर्भिः श्लोकैः निराकरिष्यन्नादौ देहव्यतिरिक्तमात्मानं लिङ्गैः साधयति—

**कश्चिद्दुःखी स्वजन्मप्रभृति सुखयुतश्चापरः कस्य हेतोः**
**कस्मादाद्या प्रवृत्तिस्तनुरपि च कुतः किं नवेत्ति प्रमीतः।**
**स्वाभाव्यं हेतुसाम्ये सममिति विदितं दीपबीजाङ्कुरादौ**
**वैषम्यं कर्मजन्यं यदि गदसि जनैः पूर्वमप्यात्मसिद्धिः॥ २९॥**

कश्चिदिति ॥ कश्चित्पुरुषः स्वजन्मप्रभृति=स्वोत्पत्तिकालादारभ्य दुःखी=दारिद्र्य रोग वियोगादि नानादुःखाश्रयः, अपरः=अन्यस्तु, सुखयुतः=आरोग्य संपत्त्यादि सुखयुक्त इति समानेऽपि मनुष्यदेहे वैषम्यं कस्य हेतोः?=कस्मात्कारणात्? (२)"षष्ठी हेतुप्रयोगे" इति हेतौ षष्ठी। तस्मिन्पापपुण्यातिरिक्तहेत्वसंभवात्तयोश्चास्मिन् जन्मनि क्रियमाणयोः पश्चाद्भावात्पूर्वजन्मसंबंध्यात्मा आवश्यक इति ॥ किञ्च, प्रवृत्तिमात्रे इष्टसाधनताज्ञानं हेतुरिति सर्वसिद्धम्। नच जातमात्रस्य शिशोः स्तन्यपानादिप्रवृत्तिहेतुभूतमस्मिञ्जन्मनि प्रत्यक्षात्मकं तत्संभवति। अन्वयव्यतिरेकाऽग्रहणात्। स्मृतिरूपमनुमितिरूपं वा नानुभवव्याप्तिज्ञानादिजन्यसंस्कारमन्तरेणेति तद्धेतुसाधकजन्मान्तरसंबंध्यात्मा आवश्यक इत्यभिप्रेत्य पृच्छति—कस्मादिति ॥ आद्या=प्राथमिकी शिशोः स्तन्यादौ प्रवृत्तिः कस्मात्? जन्मान्तरसंबंध्यात्मानमनभ्युपगम्य तद्धेतुनिरूपणासंभवादिति भावः। किंच, अचेतनानां भूतानां रथप्रासादादिसंघातात्मना परिणतिर्दृष्टाऽदृष्टान्यतरद्वारा तत्प्रयोजकतदुपभोक्तृपूर्वसिद्धचेतनाधीना दृष्टेति तद्वदेव देहाकारपरिणतेरपि तदुपभोक्तृपूर्वसिद्धचेतन प्रयोज्यत्वमावश्यकम्, अन्यथा देहाकार

(१) किण्वं पापे सुराबीजे इति विश्वः। (२) हेतु शब्दप्रयोगे हेतौ द्योत्ये षष्ठी स्यात्। अन्नस्य हेतोर्वसति।

परिणतेरेवाऽसिद्धेरित्यभिप्रेत्य पृच्छति—तनुरपीति ॥ तनुः=शरीरमपि कुतः=कस्मात्प्रयोजकादित्यर्थः । तन्वाकारपरिणतेरसिद्धौ भूतेषु तदधीनचैतन्यलाभो दूरापास्त इति सूचनार्थश्चकारः । किंच, चैतन्यस्य भूतगुणत्वे रूपादिवत्परैरपि ग्रहणप्रसङ्गः, भूतविशेषगुणानां सर्वान् प्रतियोग्यत्वात् । अपिच, मदिरावयवेषु मदशक्तिभेदवद्देहावयवेष्वपि विभिन्नचैतन्याभ्युपगमप्रसङ्गेन नानाचेतनानां नियतैकमत्यासंभवादेकपाशबद्धशकुनीनामिवाऽभिलषितदेशगमनाशक्तिः, युगपदनेकसिंधुराकृष्टकदलीकाण्डस्येव देहस्योन्मथनं वा स्यात् । तस्मान्न देहधर्मश्चैतन्यम् । यत्तूक्तं चैतन्यस्य देहाधीनोपलंभनियमाद्देहधर्मत्वमिति, तत्र व्यभिचारं दर्शयन्पृच्छति—किन्न वेत्तीति ॥ प्रमीतः=मृतः पुरुषः, न वेत्ति=न जानाति, तत्र किं कारणमित्यर्थः । देहाकारपरिणतभूतानां तदानीमपि सत्वाज्ज्ञानप्रसक्तेर्दुर्वारत्वात् । तथाच तादृशस्थले व्यभिचारान्न देहाकारपरिणतेर्ज्ञानहेतुतेति भावः ।

अभ्युपगम्यचेदमुक्तम् । अस्तुचैतन्यस्य देहाधीनोपलंभनियमः, तथापि रूपादीनामालोकाधीनोपलंभनियमेऽपि अन्यधर्मत्वदर्शनेन तदधीनोपलंभनियमस्य तद्धर्मत्वाऽसाधकत्वात् । ननु न सुखदुःखादिवैचित्र्येऽदृष्टं हेतुः, समानसामग्रीकैककुलालनिर्मितघटेषु क्वचिद्दुग्धादियोगः, क्वचिद्विगर्हितवस्तुयोग इति विनाप्यदृष्टं वैचित्र्यवद्यदृच्छयैव तत्सिद्धेरित्याशंक्याह—स्वाभाव्यमिति ॥ स्वः भावः=धर्मः यस्य, तद्भावः स्वाभाव्यम्=असाधारणधर्मः, तत्संबंधो वा । तैलवर्त्यादिहेतुसाम्ये दीपाद्दीपान्तरे, बीजादङ्कुरादिद्वारापि बीजान्तरे, अङ्कुराद्बीजद्वाराऽङ्कुरान्तरे च जायमाने सममन्यूनाऽनतिरिक्तंदहनप्रकाशनसंस्थानसामर्थ्यादिस्वाभाव्यमिह लोके प्रमाणैर्विदितम् । यादृच्छिकवैषम्यकल्पने च सर्ववस्तूनामत्यन्तवैलक्षण्यम्, अव्यवस्थायां सर्वव्यवहारविलोपापत्तिश्चेत्यदृष्टवैचित्र्यमेव तद्धेतुरित्यर्थः । एककुलालनिर्मितघटेषु दुग्धादियोगवैषम्येऽपि, भोजकादृष्टवैषम्यमेव हेतुरिति, न यादृच्छिकत्वम् । अतो गत्यन्तराभावात्कर्मैव वैषम्यहेतुर्बलात्त्वयाऽपि वाच्यः, तथाचाऽस्मदभिमतसिद्धिरित्याह—वैषम्यमिति ॥ उक्तसुखादिवैषम्यं विचित्रविहितनिषिद्धाचरणलक्षणकर्मजन्यं यदि गदसि=वदसि, तदा जनेः=एतज्जन्मनः पूर्वमपि देहान्तराऽधिष्ठानेनैतद्देहभोग्यविहितनिषिद्धाचरितुरात्मनस्सिद्धिर्दुर्वारेत्यर्थः । एवं पूर्वदेहस्याऽपि भोगायतनत्वात्तद्भोग्यकर्माऽनुष्ठातुरात्मनस्ततोऽपि पूर्वं तथैव सत्वं वाच्यमित्यनादित्वमात्मनस्सिद्धम् । एवमागमादपि नित्यात्मसिद्धिरितिद्रष्टव्यम् । स्थौल्यगौरतान्चैतन्यादेस्सामानाधिकरण्याऽनुभवस्त्वन्योऽन्याध्यासात् 'अयो दहति, रक्तः

स्फटिकः' इति प्रत्ययवद्भ्रान्त्यैव। न च बाधाभावः,प्रदीपघटयोरिव प्रकाश्य-प्रकाशकयोर्धर्मधर्मिभावाऽनुपपत्तिलक्षणयौक्तिकबाधसत्त्वात्। जाग्रद्देहाऽभिमानाऽभावेऽपि स्वप्ने, स्वाप्नदेहापगमेऽपि जागरे सोऽहमिति प्रत्यभिज्ञादर्शनात्, जातिस्मराणां तत्त्वज्ञानां च प्रत्यक्षेणाऽऽत्मनि देहातिरेकाऽनुभवात्, ग्रहावेशेनाऽभिभूतस्य व्यवहरतोऽपि प्रत्यभिज्ञादर्शनात्, आविष्टस्य ग्रहस्य परशरीरेणाऽपि व्यवहारभोगादिदर्शनाच्चाऽतिरिक्ताऽऽत्मसिद्धिरिति बोध्यम् ॥ २९ ॥

ननु दर्शितलिङ्गैर्देहातिरिक्तात्मन्यनुमानं मानं दर्शितं स्यात्, तच्च "अहं मनुष्यः" इत्यादिसार्वजनीनप्रत्यक्षविरुद्धेऽर्थेऽनुमानं क्रमते,तद्विपरीतस्य। भवदभिमतजातिस्मरतत्त्वज्ञयोश्चार्वाकैरदर्शनात्,इतरस्त्वच्छन्ति तत्तद्वायभिमतमर्थमवचनीय चार्वाकस्याऽनाश्वासाच्च तदसिद्धेः ॥ किञ्च, नाऽप्रत्यक्षं प्रमाणमस्ति, अयोग्योपाधिशंकया देशकालान्तरे लिङ्गस्य व्यभिचारशङ्कयाचाऽनुमानप्रामाण्याऽयोगात्। कृत्स्नैकदेशसादृश्यविकल्पन उपमानस्याऽपि तदयोगात्। तयोरप्रामाण्ये तदधीनशक्तिग्रहापेक्षस्य शब्दस्य दूरापास्तं प्रामाण्यम्। एवमर्थापत्त्यनुपलब्ध्योरपि व्याप्तिनिश्चयमापेक्ष्यत्वात्तत्र व्यभिचारादिशंकाया अवर्जनीयत्वादप्रामाण्यमेव। यथाहुः—

"देशकालादिरूपाणां भेदाद्भिन्नासु शक्तिषु।
भावानामनुमानेन प्रमितिर्दुर्लभा" इति ॥

अत्राऽनुमानग्रहणमन्येषामप्युपलक्षणम्। किञ्च, अनुमानादेःप्रत्यक्षमूलकत्वादर्थसंभावनाऽपि स्यात्, वेदस्यत्वपौरुषेयस्याऽर्थसंभावनाऽपि दुर्लभेत्याऽऽशंकामपनयन्नाह—

**मानं प्रत्यक्षमेकं यदि, कथय कथं भाषितं ते प्रमाणं ?**
**संभाव्यार्थं सदोषं यदि तदपि बली किं न वेदो विदोषः ।**
**न ह्यध्यक्षं विनाक्षैर्नच तव सुगमा मानताऽध्यक्षमात्रे**
**ज्ञानं नान्यस्य बोद्धुं प्रभवति च भवांस्तेन मिथ्याप्रलापी॥३०॥**

मानमिति॥ यदि प्रत्यक्षमेकमेव मानम्=प्रमाणं तर्हि ते=तव भाषितम् वाक्यं कथं प्रमाणम्?=श्रोतॄणां प्रमाजनकम्। शब्दार्थसंबंधस्य प्रयोजकवृद्धव्यवहारानुमेयत्वात्, अनुमानाऽप्रामाण्ये शक्तिग्रहाधीनशब्दप्रयोगस्य, ततः श्रोतुः पदार्थोपस्थितेश्चाऽसंभवादित्यर्थः। अथवा, उपमानाऽप्रामाण्ये परकीयज्ञाने स्वज्ञानसादृश्यग्रहाधीनशब्दप्रयोज्यताया ज्ञातुमशक्यत्वात्परबु-

बोधयिषया शब्दप्रयोगासंभवादित्यर्थः । सादृश्यज्ञानस्यैव भट्टमत उपमितित्वात् । एवमुपमानस्य शक्तिग्राहकत्वे तदसंभवादपि बोध्यम् । अथवा, नाऽप्रत्यक्षं प्रमाणमस्तीति त्वद्वाक्यं प्रमाणं? न वा? आद्ये आगतं प्रत्यक्षातिरिक्तशब्दप्रामाण्येन, अन्त्ये नाऽस्माद्वाक्यादर्थसिद्धिरित्युभयथाऽपि शब्दप्रामाण्यमव्याहतमित्यर्थः। एवं परकीयप्रश्नाद्यनुपपत्त्या जिज्ञासाद्यर्थापनयनेनापि शब्दप्रयोगाऽनुपपत्तेस्त्वद्वापितं कथं प्रमाणमिति। प्रत्यक्षाऽतिरिक्ते प्रामाण्याभावोऽनुपलब्धिगम्यश्चेत्, अनुपलब्धिप्रामाण्यापत्तिः, तदगम्यश्चेन्मानान्तरासंभवादनिश्चये 'नाऽप्रत्यक्षं प्रमाणमस्ति' इति शब्दप्रयोगाऽनुपपत्तिश्चेति सर्वथाऽपि व्याहतत्वात्त्वद्वचनं कथं प्रमाणमिति च बोध्यम्। नचोपाधिशङ्कया व्याप्तिग्रहाऽनुपपत्तिः, व्याप्तिमनभ्युपगच्छतोपाधेरुद्भावयितुमशक्यत्वात्। तदुद्भावकप्रमाणाभावे तदसम्भवधानेचोपाध्यप्रतिसंधानेऽनुमितेर्निर्बाधत्वात्। एवं व्यभिचारशंकाविरहदशायामपि। संजाता तु व्यभिचारशङ्का तर्केणैव निरसनीयेति पराक्रान्तमत्र तार्किकैरित्युपरम्यते। एवमुपमितावपि फलोन्नेयं भूयःसादृश्यधर्मज्ञानं हेतुरिति न विकल्पावसरः। नन्वनुमानादिभिरर्थसंभावनामात्रं जन्यते, तत्रैव च प्रामाण्याभिमानाद्व्यवहारसिद्धिरिति न मद्वचनं व्याहतमित्याशंकामपनुदन्वेदस्यऽसंभाव्यार्थत्वदोषमुद्धरति—संभाव्यार्थमिति ॥ सदोषम्=भ्रमप्रमादविप्रलिप्साकरणाऽपाटवादिदोषग्रस्तं, तत्= त्वद्भाषितमपि यदि संभाव्यार्थम्= संभावना तूत्कटकोटिकस्संशयः, तद्योग्यार्थप्रतिपादकमिष्टमिति शेषः । तर्हि विदोषः=अपौरुषेयत्वादत्यन्तावहिताध्यापकपरंपराशिक्षाद्यङ्गोपरक्षितत्वाच्च निर्दोषः सर्वप्रमाणमूर्धन्यो वेदः संभाव्यर्थो न किम्? सदोषस्यापि संभाव्यार्थत्वे निर्दोषस्याऽवधार्यार्थतैवोचितेत्यर्थः ॥

अयंभावः—सर्वज्ञानानां स्वार्थे निरपेक्षमेव प्रामाण्यं क्वचित्कारणदोषबाधकज्ञानाभ्यामपोद्यत इत्यवश्यं वाच्यम्। अन्यथा घटज्ञानप्रामाण्यं संवादिज्ञानान्तराधीनं, तस्याप्यन्याधीनमित्यंधपरंपराऽनवस्थापातात्प्रत्यक्षस्याऽप्यप्रामाण्यापत्तेः। एवं च वेदोत्थबोधे कारणदोषाभावाद्बाधकप्रमाणासंभवाच्च तत्प्रामाण्यमव्याहतम्। त्वद्वचनं तु दोषजन्यत्वादनुमानार्थापत्त्यागमादिबहुतरप्रमाणबाधितत्वाच्चाऽप्रमाणमेवेति । किञ्च, अनुमानाद्यप्रामाण्ये कारणासिद्धेः प्रत्यक्षमेव न सिध्येत् दूरे तत्प्रामाण्यमित्यभिप्रेत्याह—नहीति ॥ हि=यस्मात्कारणात् अनुमानादिमात्रगोचरैः अक्षैः=इन्द्रियैर्विना, अध्यक्षम्=प्रत्यक्षं न सिध्यतीत्यर्थः । नचाक्षगोळकादेरेव प्रत्यक्षहेतुत्वम्। तस्य दूरस्थाऽर्थसंनिकर्षासंभवात्,असन्निकृष्टग्राहकत्वेऽतिप्रसङ्गात्,

आलोकादिसहकार्यसंबन्धाच्चेति भावः। किंच, ज्ञानानां प्रामाण्यं प्रत्यक्षमनुमेयं वा? आद्येऽनुमित्यादिप्रामाण्यस्यापि प्रत्यक्षसिद्धत्वात्तदपलापाऽसंभवः। द्वितीयेऽप्यनुमानाप्रामाण्याद्ग्राहकाभावात्प्रत्यक्षेऽपि प्रामाण्यं न सिध्यतीत्युभयथाप्यविशेष इत्यभिप्रेत्याह—नचेति ॥ तव= चार्वाकस्य, अध्यक्षमात्रे=प्रत्यक्ष एवेति सावधारणा मानता=प्रमात्वम्, न सुगमा=ज्ञातुमशक्येत्यर्थः। अथवा, यद्यध्यक्षत्वं प्रामाण्ये प्रयोजकं स्यात्तदा त्वदभिमतं सिध्येत्, न तु तथा, भ्रान्ताध्यक्षदर्शनात्। अतो निर्दोषज्ञानकारणकलाप एव तत्प्रयोजको वाच्यः, स चानुमित्यादावप्यविशिष्ट इत्यभिप्रेत्याह—नचेति ॥ तवाऽध्यक्षमात्रे=कृत्स्नप्रत्यक्षे, मानता न सुगमा=नाऽऽभ्युपगन्तुं शक्या, येनाध्यक्षत्वमेव प्रामाण्यप्रयोजकं स्यादित्यर्थः। किंच, प्रतिपन्नान्पुरुषानपहायाऽप्रतिपन्नविप्रतिपन्नसंदिहानाः प्रेक्षावद्भिः प्रतिपद्यन्ते, नच परेषां प्रतिपत्त्यप्रतिपत्तिविप्रतिपत्तिसंदेहास्तव प्रत्यक्षगोचराः, किन्तु वचनलिङ्गादिगम्याः। पराभिप्रायमविज्ञाय शास्त्रप्रणयनं तून्मत्तप्रलपितप्रायमेवेत्यभिप्रेत्याह—ज्ञानमिति ॥ भवान्नन्यस्य पुरुषान्तरस्य ज्ञानम्, इच्छादेरप्युपलक्षणमेतत्, बोद्धुं न प्रभवति=न समर्थो भवति, कथं तद्बुबोधयिषया शब्दं प्रयुञ्जीत। यदि तु शब्दं न प्रयुञ्जीत, तर्हि मूकता प्रसक्तिः। चकारो भाविन्याऽनिष्टज्ञानाऽसंभवात्प्रवृत्त्यनुपपत्तिश्चेति दोषान्तरसमुच्चयार्थः। तथाचोपहसितमाचार्यवाचस्पतिमिश्रैः— “मानाम भून्नास्तिकस्य जन्मान्तरम्, अस्मिन्नेव तु जन्मन्युपस्थितोऽस्य मूकत्वप्रवृत्तिनिवृत्तिविरहरूपो महान्नरकः” इति ॥ तेन=उक्तदोषकदम्बेन, भवान्=चार्वाकः, मिथ्याप्रलापी=निरर्थकप्रलपनशीलः, अनुपादेयवचन इत्यर्थः ॥

नैष्फल्यादपि त्वद्दर्शनमनुपादेयं, विपरीतफलत्वाच्च सर्वथा हेयमेवेति सूचयन्नाह—

मू०॥ गौरः स्थूलो युवाऽहं पटुरिति च तनावात्मबुद्धिर्जनानां
स्वाभाव्यादेव सिद्धेत्यधिगमयदिदं निष्फलं दर्शनं ते।
वेदद्वेषात्प्रवृत्तं यदि बत न तरां द्वेषमूलं प्रमाणं
दैवान्नष्टस्त्वमेकः किमिति शठ! परान्हन्त हन्तुं प्रवृत्तः॥

गौर इति ॥ जनानाम्=जनिमतां प्राणिनां जन्मप्रभृति गौरोऽहं स्थूलोऽहं, युवाऽहमिति स्थौल्यगौरत्वादि तनुधर्मसामानाधिकरण्येनाऽहंतावमर्शात्तनौ=देहे, आत्मबुद्धिः=आत्माऽभेदज्ञानमनाद्यविद्या प्रयुक्तात्, स्वभाव

एव स्वाभाव्यम्=अन्योऽन्यधर्म धर्मिसंसर्गतादात्म्याध्यासः,तस्मात् सिद्धा उपायसहस्रैरपि दुरपह्नवाऽस्त्येव, इति=अस्माद्धेतोः, इदम्=एतदेव देहात्मत्वम्, अधिगमयत्=बोधयत्, ते दर्शनम्=शास्त्रम्, निष्फलम्=अपूर्वार्थाऽप्रतिपादकत्वात्प्रयोजनशून्यम्। ननु श्रुतिस्मृतीतिहासादिभिर्धनिकवंचनाय लिप्सुपरिकल्पितगाथाभिर्विप्रलब्धान्स्वर्गादिप्रत्याशया व्रतोपवास तपःसंयमादिषु बहुवित्तव्ययादिक्लेशेषु निमग्नान्महाजनानुपलभ्य तेषां तत्क्लेशपरिहाराय वेदादिप्रामाण्यनिरासपूर्वकं चार्वाकदर्शनं प्रवृत्तम्, एतस्माच्च निश्चितनास्तिक्याः परलोकनिर्भयाः सर्वे जनास्स्वच्छन्दं रमन्तामिति। तथा च कथं नैष्फल्यमिति प्रलापं निरस्यति—वेदेति॥ बतेति खेदे। यदि ते दर्शनं वेदद्वेषात्प्रवृत्तं, तर्हि द्वेषमूलं प्रच्छन्नशत्रुवचनमिव प्रमाणं न तरां=न भवत्येव। नैष्फल्यादेव न प्रमाणम्, तत्रापि द्वेषमूलं चेत्सुतरामित्यर्थः। नैष्फल्यद्वेषमूलत्वोपाधिभ्यामेकस्यापि दर्शनस्य भेदप्रकल्पनात्प्रकर्षप्रत्ययः देवदत्तः पूर्वं पटुः, इदानीं तु पटुतर इतिवत्, * "किमेत्तिङव्यय" इत्यामुप्रत्ययः। अयं भावः—स्वर्गनरकाद्यभावस्त्वया कथं निश्चितः? नतावत्प्रत्यक्षेण, तस्य भाविन्यप्रवृत्तेः! अनुमानादीनां च प्रामाण्यानभ्युपगमात्तदसाधकत्वात्। नापि मानाभावेन, श्रुत्यादि मानस्य प्रत्यक्षत्वात्। श्रुतेः कर्तुरस्मरण.तसर्वशिष्टानामनादित्वप्रसिद्धेश्चाऽपौरुषेयत्वात्। स्मृत्यादेश्च तन्मूलकत्वाद्दोषसंभावनाऽयोगात्, भोगलाम्पट्यप्रयुक्तवेदप्रद्वेषमूलत्वाच्चाप्रमाणमेवेति। दुरन्तदुरितपराहतमतेस्तवैकस्य नरकपाताय नास्तिक्याद्यथेष्टाचरणे प्रवृत्तिरस्तु नाम। दुश्शास्त्रप्रणयनेन जगद्विनाशे प्रवृत्तिस्त्वत्यंतमनुचिता भूताविष्टकरे खड्ग इव कथं संपन्नेत्यनुशोचन्नाह—दैवादिति॥ हेशठ=परवंचक, त्वमेको दैवात्=अनन्तदुरितपरिपाकलक्षणात्, तत्प्रयुक्तेश्वरापराधलक्षणाद्वा "एष ह्येवासाधु कर्म कारयति तं, यमधो निनीषति" इति श्रुतेः। नष्टः=दुरन्तनरकजन्ममरणादिदुःखपरंपरार्णव पतितः सन्परानपि हन्तुं दुश्शास्त्रप्रणयनेन तादृशदुःखार्णवं प्रापयितुं किमिति प्रवृत्तः? हतेति खेदे। अहो ते दौर्भाग्यविलसितमिति भावः। तथाच श्रुतौ मृत्युवचनम्—"अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे" इति॥ स्मृतिश्च—

---

* किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे (५-४-११) किम् एदन्तात्तिङोऽव्ययाच्च यो घस्तदन्तादामुस्यान्नतु द्रव्यप्रकर्षे। किंतमाम्, प्राह्णेतमाम्, पचति तमाम्। द्रव्यप्रकर्षेतु उच्चैस्तमस्तरुः।

"देहाभिमानाभ्यासं न सद्गुणापचकोटिभिः।
प्राप्यविज्ञानमप्युच्छिन्दन्ति गोपयतामिनाम् ॥" इति ॥ ३१ ॥

सर्वसाधारणो देहाभिमानस्य दृढताभ्यासपर्यवसानं सर्वानर्थमूलत्वात्तत्प-रित्यागमात्रेण च मोक्षस्य करप्राप्ततामपि विवेचयितुं "अनुदिनं देहं परित्यज्य" इति ग्रन्थेन देहात्मत्वं प्रतिपादयन्नुपहासपूर्वकमनुशास्ति—

मू०॥ रेतोरक्तसमुद्भूतं जडमशनचितं षड्विकारं त्वगस्थि
स्नायुमस्राऽऽन्त्रमज्जासृगसिरमयमतिस्वल्पमाध्यामयाढ्यम् ।
प्राणापाये मृदादिप्रतिममपि च विट्कीटभस्मावशेषं
देहं त्वं मूढ! कस्मादहमिति मनुषे केन वा वंचितोऽसि ॥ ३२ ॥

रेतोरक्तसमुद्भूतमिति ॥ पितुरंशेन रेतसा, मातुरंशेन च रक्तेन बुद्बुदा-दिक्रमेण समुद्भूतम्=उत्पन्नम्, जडम्=अचेतनम्, अशनेन=अन्नपानादिनाऽन्नेन चितम्=उपचयं प्राप्तम्—जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, नश्यतीति यास्कोक्तषड्भावविकारान्वितम्, स्नायवः=शिराः, मस्रम्=मांसम्, आन्त्राणि=अन्नपानमलमूत्रमार्गाणि, मज्जा=अस्थ्यन्तर्गतो रसः, रुधिरम्=रक्तम्, एतन्मयम्=एतत्प्रचुरं, विवेके तावन्मात्रमिति वाऽर्थः। अतिस्वल्पम्=देशतः कालतः वस्तुतश्च परिच्छिन्नम्, आध्यः=मानसदुःखानि, आमयाः=शारीरदुःखानि तैः, आढ्यम्=संपन्नम्, तद्भो-गस्थानमित्यर्थः। प्राणस्य=पंचवृत्तिकमुख्यप्राणस्य अपाये=उत्क्रमणे सति मृत्पिंडकल्पेन शून्यत्वान्मृत्पिंडादिसदृशत्वेनतम्। अपि च कुक्कुरादिभक्षणे विष्ठावशेषम्, उपेक्षिते कृम्याकारपरिणामित्वात्कीटावशेषम्, दाहे भस्मा-वशेषम्। इत्थं कारणतः, स्वरूपतः, उपष्टंभकतोऽवस्थाभेदतः, स्वगतवि-शेषतः, परिणामतः, उपयोगतः, दृष्टान्ततः, परिशेषतश्चाऽत्यन्तासार-त्वाद्विवेकिनाऽनात्मत्वेन निश्चेतुं शक्यमपि देहम्=शरीरम्, हेमूढ=मूर्ख चा-र्वाक कस्मात्कारणादहमिति मनुषे=आत्मत्वेनाभिमन्यसे। केन वा=अहितरूपेण गुरुणा वंचितः अंधगोलाङ्गूलन्यायेन प्रतारितोऽसि, अहो एतत्ते दौर्भाग्यविल-सितमिति भावः ॥ ३२ ॥

एवं देहात्मवादे निरस्ते इन्द्रियात्मवादी प्रत्यवतिष्ठते—"ननु माभूद्देह आत्मा, इन्द्रियाणि तु तथा स्युः, 'अहं पश्यामि, शृणोमि, रसयामि' इति दर्शनश्रवणादिव्यापारवत्स्विन्द्रियेष्वहंतापरामर्शात्। 'अहं सुखी, दुःखी, जानामि' इति तथैव ज्ञानाद्यनुभवाच्च। नच देहवदिन्द्रियाणामपि भौतिकत्वा-

दचेतनत्वानुमानम्। "चक्षुर्होच्चक्राम तेहवाचमूचुस्त्वन्न उद्गायेति"। "वाङ्-मनश्चक्षुः श्रोत्रं ते प्रकाश्याऽभिवदन्ति" इति तत्र तत्र प्राणसंवादे इन्द्रियाणामात्मत्वाऽवगमात्, श्रुतिप्रत्यक्षविरुद्धेऽर्थे ऽनुमानाप्रसरात्। नापि बहूनामैकमत्याद्यसंभवात्प्रवृत्त्याद्यनुपपत्तिः, उपभोगलक्षणैकप्रयोजनवशेनैव सांख्यमते गुणानामिव,एकसार्थान्तर्गतपुरुषाणामिव वैकमत्योपपत्तेः" इति। तदेतद्विकल्प्य निराचष्टे—

**मू०॥ खानामात्मत्ववादे प्रतिनियतगतौ स्वामिनानात्वदोषा**
**देहोन्मन्थप्रसङ्गस्समुदितविषये त्वंधमूका म्रियेरन्।**
**उक्तिर्दृष्टश्रुतानामपि च न घटते नापि संघो निरूप्य**
**स्स्वप्नद्रष्टैव नस्यात्स्वयनमरणयोर्निर्विशेषाद्द्वयं स्यात्॥**

खानामिति॥ प्रत्येकमिन्द्रियाण्यात्मानः? उतेन्द्रियसमुदायः? तत्राऽऽद्ये तावदाह—खानामिति। खानाम्=इन्द्रियाणाम्, आत्मत्ववादे चार्वाकविशेषाभिमते,प्रतिनियतगतौ=प्रत्येकविषये प्रत्येकमिन्द्रियाण्यात्मेति पक्ष इत्यर्थः, स्वामिनानात्वदोषात्—स्वामिनाम् अधिष्टातॄणामात्मनां, नानात्व दोषात्=समप्रधानानामनेकेषामैकमत्यनियमाऽभावेन स्वस्वविषयोपभोगाय युगपद्विरुद्धदेशाकर्षणलक्षणदोषाद्देहस्योन्मथनप्रसङ्ग इत्यर्थः। नचैकप्रयोजनवशादैकमत्यम्, विरुद्धनानाप्रयोजनानामपि कदाचित्प्रसक्तेरवर्जनात्। गुणप्रधानभावे च विनिगमकाभावादुपभोक्तुरन्यस्याऽनभ्युपमेन सांख्यमतवैषम्यात्। नचैकसार्थान्तर्गतपुरुषाणामपि यावज्जीवमैकमत्यनियमः, मेलननियमो वाऽस्ति। प्रयोजनभेदे वैमत्यविश्लेषादिदर्शनादिति भावः। द्वितीयेऽप्याह—समुदितविषयेत्विति। समुदितानि=मिलितानि खानि विषयः=आलंबनं यस्य स तथा इन्द्रियसमुदाय एवाऽऽत्मेति पक्षे त्वित्यर्थः। चक्षुरादिष्वेकैकोपघातेऽपि तद्घटितसमुदायभङ्गेनाऽऽत्मोपघातादंधा मूकाश्च म्रियेरन्=न जीवेयुरित्यर्थः। उक्तपक्षयोः क्रमेण पुनर्दोषद्वयमाह—उक्तिरित्यादिना। अपिचेति दोषान्तरकीर्तनाय। आद्ये चक्षुषा दृष्टानां श्रोत्रेण श्रुतानां उक्तिः=परबोधयितुं शब्दप्रयोगोऽपि न घटते। वक्तुर्वागिन्द्रियस्य द्रष्टृश्रोतृभ्यां भेदात्। नह्यन्यदृष्टं श्रुतमसंवदन्स्तेनाऽन्यश्शक्नोति वक्तुम्। नचेन्द्रियाणामिन्द्रियान्तरेण संवादो वा प्रमितः। द्वितीयेप्याह— नापीति। संघः=समुदायोऽपि समुदायिभ्योऽन्यत्वाऽनन्यत्वादिना न निरूपयितुं शक्य इत्यर्थः। पक्षद्वयसाधारण्येन दोषद्वयमाह—स्वप्नेति। सुषुप्ते-

रप्युपलक्षणमेतत्। स्वप्नसुषुप्त्योरिन्द्रियाणां लीनत्वादवस्थाद्वयं निस्साक्षिकं न भासेतैवेति भावः। तथाच श्रुतिः—"यथा गार्गि मरीचयोऽर्कस्याऽस्तं गच्छतस्सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति, ताः पुनः पुनरुदयतः प्रचरन्त्येवं ह्येतत्सर्वं परे देवे मनस्येकीभवतीति स यथा वयांसि वासोवृक्षं संप्रतिष्ठन्ते एवं ह वै तत्सर्वं परे आत्मनि संप्रतिष्ठते" इति च ॥ अत एवापरोऽपि दोष इत्याह—शयनेति ॥ निद्रायां मरणे चेन्द्रियाणां मनसि विलयसाम्यान्मरणादिव शयनादपि सर्वेषां भयं स्यात्, इन्द्रियात्मवादे निद्रामरणयोर्विशेषाऽभावादित्यर्थः। मरणे प्राणोत्क्रमणसमयदुःखप्रतिसंधानाद्भयं न स्वापमनागसंभावनयेति चेन्न। तादृशदुःखाऽनभिज्ञानामपि पश्वादीनां मरणाद्भयदर्शनात्, तादृशदुःखाभिज्ञानामप्यविनाश्यात्मदर्शिनां तददर्शनात्। देहविनाशप्रतिसंधानाद्भयमिति चेन्न। परदेहनाशप्रतिसंधाने तददर्शनात्। तस्माद्देहादावपि आत्मत्वाभिमानादेव तद्विनाशप्रतिसंधानाद्भयमित्ययद्वयं वाच्यत्वादिन्द्रियात्मवादेऽपि न्यायसाम्याच्छयनाद्भयं दुर्वारमिति भावः। प्राणसंवादार्थवादस्तु प्राणोपास्तिप्ररोचनार्थः, करणाभिमानि देवताविषयत्वेनापि सूपपादः। इन्द्रियधर्मसामानाधिकरण्येनाऽहंताऽवमर्शस्त्वग्र्याग्रादुपपादयिष्यत इति न किञ्चिदप्यभिमतसाधकम् ॥ ३३ ॥

माभूदिन्द्रियाणामात्मत्वम्, प्राणस्यतु स्यात्। तस्य कार्यकारण*संघातविधारकत्वेनऽधिष्ठातृत्वसंभवात्। श्रुतौ "मामोहमापद्यथ, अहमेवैतत्पंचधाऽऽत्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि" इति प्राणवचनात्। "तदेतदमृतं सत्येन छन्नं, प्राणो वा अमृतं नामरूपे सत्यम्" इति बृहदारण्यके कार्यकरणसंघातेऽमृतत्वात् प्राण आत्मेति प्रतिपादितत्वाच्च। इहाप्युत्तरत्रेन्द्रियाणामेकैकोत्क्रमणेन परीक्षानन्तरं "मातेव पुत्रान् रक्षस्व" इति तस्यैव कार्यकरणसंघातरक्षकत्वश्रवणाच्च। नचाऽसति बाधके श्रुतेस्तदधिष्ठातृदेवताविषयत्वकल्पनं युक्तम्। प्राणोत्क्रमणाऽनुत्क्रमणयोर्मरणजीवनव्यवहारेण तस्यैव जीवत्वौचित्याच्च। जीवापाये हि मरणं श्रूयते "जीवाऽपेतं वाव किलेदं म्रियते न जीवो म्रियते" इति ॥ प्राणानां प्रियतमत्वं च सर्वानुभवसिद्धं, प्रियतमस्य चाऽऽत्मत्वं श्रूयते "प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा" इति। तस्मात्प्राण एव आत्मेति केचित्, तान्प्रत्याह—

**प्राणो नाऽऽत्मा जडत्वादशनसिनतया वृत्तिलाभात्सुषुप्ता वेतस्मिन्संचरत्यप्यहमचर इति प्रत्ययादस्मयत्वात्।**

---

* स्थूलसूक्ष्मदेह समुदायस्येत्यर्थः।

स्रष्टा स्वोत्क्रान्तयेऽस्याऽऽमरणमपि धृतेर्जीवशब्दाभिधेय
स्तस्मादन्योऽस्ति रक्षन्स्वनिलयममुना दीप्तिमानेकहंसः॥ ३४ ॥

प्राण इति॥ आदौ पञ्चभिर्हेतुभिः प्राणस्याऽनात्मत्वं प्रसाध्योत्तरार्धे त्रिभिर्हेतुगर्भविशेषणैरतिरिक्तात्मसद्भावः प्रसाध्यते। प्राणः=पञ्चवृत्तिर्मुख्य प्राणः नाऽऽत्मा जडत्वात्=अचिद्रूपत्वात्। तच्चास्य बालाकिप्रश्ने "तमेतैर्नामभिरामन्त्रयांचक्रे बृहन्पांडरवासः सोमराजन्निति स नोत्तस्थौ" इति श्रुत्यैवाचेतनत्वोपपादनात्, भौतिकत्वाच्च। एवमचेतनत्वोपपादनगर्भाणि हेत्वन्तराण्याह— अशनेत्यादिना। अशनेन=अन्नेन रज्जुस्थानीयेन सिततया बद्धतया, षिञ्बंधने कर्मणिक्तः। तथाच श्रुतिः—"प्राणाः स्थूणा, अन्नं दाम" इति। प्राणो बत्सत्वेन परिकल्पितस्य मुख्यप्राणस्य स्थूणा बंधनशंकुः, अन्नं तु दाम, कण्ठरज्जुस्थानीयमिति तदर्थः। किंच, सुषुप्तौ जीवस्य परस्मिन्नप्ययः श्रूयते—"स्वमपीतो भवति" इति। प्राणस्तु तदा नाप्येति तस्य विशेषेण वृत्तिलाभदर्शनात्, कथमन्यथा निद्रालोः सशब्द श्वासवेगोपलब्धिः, अतो नात्मतेत्याह—वृत्तिलाभादिति॥ "प्राणाग्नय एव एत स्मिन्पुरे जाग्रति" इति तदा तस्य विशेषवृत्तिलाभश्रवणाच्चेति भावः। किंच, सर्वदा प्राणे संचरत्यपि 'नाहं चलस्वभावः' इति सर्वजनानुभवादपि तस्य तथात्वमित्याह—एतस्मिन्निति। "मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठत" इत्यादिना प्राणानां चलस्वभावत्वश्रवणात्। "निष्कलं निष्क्रियं शान्तम्" इत्यात्मनो निष्क्रियत्वश्रुतेश्चेति भावः। अम्मयत्वात्=अविकारत्वात् "आपो मयः प्राणः" इति तस्य जलोपष्टम्भ्यत्वप्रतिपादनादित्यर्थः। तथाचोक्तबाधकहेतुभिः प्राणोपास्ति प्रकरणानुरोधाच्च "अहमेवैतद्बाणम्" इति प्राणवचनमुपास्तिविधिशेषभूतमधिष्ठातृदेवता विषयम्, अधिष्ठात्रधिष्ठेययोरभेदोपचारादित्यवश्यमभ्युपेयम्। अत एव बृहदारण्यकवचनमपि कार्यकारणसंघातविधारकत्वेन प्राणस्य श्रैष्ठ्यादुपास्यत्वाच्चाऽऽत्मत्वोपचारादापेक्षिकामृतत्वेन स्तुतिपरं न परमार्थत आत्मत्वपरम्। अन्यथा "स एष इह प्रविष्ट आनखाग्रेभ्यः॥ "प्राणन्नेव प्राणो नाम भवति," "यत्प्राणेन न प्राणिति", "प्राणेषु हृद्यन्तर्ज्योतिः" इत्यादि पूर्वापरवाक्यविरोधाऽऽपत्तेः। "अप्राणोह्यमनाः शुभ्रः" इत्यादिश्रुतिविरोधाच्चेति भावः। यदुक्तं प्राणोत्क्रमणाऽनुत्क्रमणाभ्यां मृतो जीवतीति व्यवहारात्तस्याऽऽत्मतेति तत्परिहरन्नभिमतं साधयति—स्रष्टेति॥ स्वोत्क्रान्तये—स्वस्य=उपाधिवशाज्जीवभावापन्नस्य, उत्क्रान्तये=देहाद्देहान्तरप्रदेशगमनाय, अस्य=उपाधि-

मुख्यप्राणस्य प्रशास्त्रोऽस्तीति संबन्धः। तथाच श्रुतिः—"कस्मिन्नहमुत्क्रा-न्त उत्क्रान्तो भविष्यामि, कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणम-सृजत" इति। एतेनोत्क्रमणादिव्यपदेशः प्राणोत्क्रमणस्य जीवोत्क्रमणनि-मित्तत्वादन्यथासिद्ध इति सूचितम्। अत एव "जीवापेतं वाव किलेदं म्रियते" इति श्रुतिरपि प्राणातिरिक्तजीवविषयेति सूचितमेव। जीवशब्द-श्च "जीव प्राणधारणे[1]" इति धातुनिष्पन्नतया तदर्थपर्यालोचनेऽपि प्राणा-दन्य आत्मा सिद्ध्यतीत्याह—आमरणमिति॥ मरणं मर्यादीकृत्य अस्य= प्राणस्य, धृतेः=धारणाद्धेतोर्जीवशब्देनाभिधातुं योग्य इत्यर्थः। तथाच कर्मस्यैव धारणे कर्तृत्वकर्मत्वविरोधात् धारयिताऽन्यः सिद्ध्यतीति भावः। अपिशब्दः "न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ" इति विस्पष्टजीवप्रतिपादकश्रुतिसंदर्शनार्थः। स्व-प्नेऽप्यन्यानिरूपणप्रस्तावे "प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरि-त्वा। स ईयतेऽमृतो यत्र कामं हिरण्मयः पुरुष एकहंसः" इति श्रुतौ कर्तृकरणव्यपदेशभेदान्निर्णीतस्वप्नप्रपञ्चस्य गमः प्राणे स्वप्नदेहस्व-पालकत्व जीवस्य देहकुलायाभिमानपालनलक्षणतद्धितत्वेन स्वयं स्वेच्छा-विहारसिद्धेश्च स प्राणादन्य इत्याह—स्वप्नेति॥ अमुना=प्राणेन स्वप्नसुषुप्ति-काले स्थानित्यम्=स्थूलस्थानीयं शरीरं रक्षन्=पालयन् [2], "लक्षणहेत्वोः क्रियायाः" इति प्रथमासामानाधिकरण्येऽपि शत्रादेशः। उक्तं हेतुमनूद्य साध्यं निर्दिशति—तस्मादन्य इति॥ तस्मात्=प्राणादन्य इत्यर्थः। तस्य स्वरूपमाह—श्रीमानिति॥ स्वात्मज्योतिरेव श्रीमान्स्वयं ज्योतिरित्य-र्थः। एकलयात्मकमयं रन्ति=संचरतीति वा, एकः=अद्वितीय एव सा-क्षात्कृतस्सन् हन्ति गाढयति समूलं बन्धमिति वा, एककर्मसंयोपाधिकमोदप्र-मोदादिसुखकल्याणां पक्षपुच्छादिभावनिरूपणेन पक्षिविशेषाकारेण व्यपदे-शार्हत्वाद्वा एकहंसः=परमात्मेत्यर्थः। प्राणे परमप्रेमास्पदत्वानुभवस्तु देहे-न्द्रियादाविवाध्यासादुपपादयिष्यते॥ ३४॥

---

1 जीवतीति जीवः, जीवत्यर्थः प्राणधारणम्। प्रत्ययार्थं आश्रयः, तथाच प्राणधा-रणानुकूलव्यापाराश्रयो जीवः। एतेन प्राणव्यतिरिक्तो जीवात्मा जीव इति पदेन सूचितः॥

2 लक्ष्यते चिन्ह्यते येन तत् लक्षणम्—ज्ञापको हेतुः, धात्वर्थविशेषणं चैतत्। लक्षणे हेतौ चार्थे वर्तमानाद्धातोः परस्य लटः शतृशानचावादेशौ भवतः। धात्वर्थलक्षणहेतू क्रियाविष-यौ भवतः। लक्षणे—शयाना भुञ्जते यवनाः। हेतौ=अर्जयन्वसति। एवं प्रथमासमानाधिक-रणे भवतीति सूत्रार्थः।

ननु माभूत्प्राणस्याऽऽत्मता, मनसस्तुस्यात्, तस्याऽस्मिन्संघातेस्वातन्त्र्यात्। तत्समवधानाऽसमवधानयोर्ज्ञानाद्युत्पत्त्यनुत्पत्तिव्यवस्थादर्शनाच्च। "कामस्संकल्पोविचिकित्साश्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वंमनएव" इतिश्रुतिरपि तस्यकामसंकल्पादिधर्मितां गमयन्ती आत्मतांगमयति। कामादिधर्माहि सर्वेषामात्मा प्रसिद्धः। "मन एवाऽस्यात्मा" इति च स्पष्टं सावधारणं च तस्याऽऽत्मत्वं श्रूयते। किञ्च, प्रश्नोपनिषदि मनोहवाव यजमानः" इत्युक्त्वा "स एष यजमानमहरहर्ब्रह्मगमयत्यत्रैषदेवः स्वप्ने महिमानमनुभवति" इति मनस एव ब्रह्मगमनस्वप्नद्रष्टृत्वे श्रूयेते। ते चात्मन एवेति श्रुत्यन्तरेषु प्रसिद्धे। तस्मान्मन एवात्मेति केचित्, तान्निराचष्टे—

मू०॥ उद्भूतेस्साधनत्वादशनमयतया शुद्ध्यशुद्धिप्रतीते
हेतुत्वाद्बंधमुक्त्योस्तदनु तनुभृतेस्तन्मयत्वश्रुतेश्च।
जागृत्स्वप्नप्रशान्तौ करणगणलये तत्प्रशान्तेस्सुषुप्ते
रुत्थानेसुप्तिसौख्यस्मृतिभिरपि मितं मानसंचापि नाऽऽत्मा॥

उद्भूतेरिति॥ उद्भूत्यादिभिर्दर्शितहेतुभिः, मानसं=मनोऽपि नाऽऽत्मेति मितं=प्रमितमितिसंबंधः॥ कृतहानाऽकृताभ्यागमप्रसङ्गापनुत्तये हि सर्वैरास्तिकैरात्माऽनादिरभ्युपगन्तव्यः। मनसस्तु "तन्मनोऽकुरुत, अन्नात्प्राणो मनस्सत्यं लोकाः कर्मसु चामृतं स प्राणमसृजत, प्राणाच्छ्रद्धां खंवायुर्ज्योतिरापः पृथिवीन्द्रियं मनोऽन्नम्, अन्नाद्वीर्यं तपोमन्त्राः कर्म लोकालोकेषु नाम च" इत्यादिश्रुतिषु सृज्येतरपदार्थसाधारण्येन सृष्टिश्रुतेर्नात्मतेत्याह— उद्भूतेरिति॥ उद्भवनमुद्भूतिः, उत्पत्तेरित्यर्थः। चक्षुरादिवन्मनसोऽपि करणत्वान्नात्मतेत्याह—साधनत्वादिति। तच्चास्य "अन्यत्रमना अभूवं नादर्शम्, अन्यत्रमना अभूवं नाश्रौषम्, मनसाह्येव पश्यति मनसा शृणोति" इति श्रुतौ कर्तुःपृथग्भावेन करणविभक्त्या च निर्देशात्। अत एव "कामस्संकल्पो विचिकित्सा" इत्यादिवाक्यशेषः कामादिकार्यलिङ्गैर्मनस्सद्भावमात्रप्रतिपादनपरो नास्याऽऽत्मत्वपरः। "त्रीण्यात्मनेऽकुरुत मनोवाचं प्राणम्" इति सप्तान्नप्रकरणे अन्नात्मनैव मनसस्सृष्टिश्रवणाच्च। अत एव "मन एवास्याऽऽत्मा" इति वचनं मनःप्रधानत्वात्संघातस्य तदनुवृत्तित्वादुपचारमात्रम्। "वाग्जाया प्राणः प्रजा" इति तथाविधजायाप्रजाप्रायपाठात्, कृत्स्नतासंपत्तिहेतूपासनार्थत्वेन मनआदीनां प्रस्तुतत्वाच्चेति भावः। तथा-

छान्दोग्येऽपि "अन्नमशितं त्रेधा विधीयते" इति प्रस्तुत्य "योऽणिष्ठस्तन्मनः, अन्नमयं हि सोम्य मनः" इति च मनसोऽन्नविकारत्वश्रवणाद्देहवन्नात्मतेत्याह—अशनमयतयेति ॥ अद्यत इत्यशनम् । बाहुलकात्कर्मणि ल्युट् । तद्विकारतयेत्यर्थः । अन्नगुणदोषाभ्यां हि मनः प्रसादमालिन्ये ध्यायिनामनुभवसिद्धे । "आहारशुद्धौ सत्वशुद्धिः" इति श्रुतेश्चेति भावः । तथा—

"मनो हि द्विविधं प्रोक्तं शुद्धं चाऽशुद्धमेव च"

इति शुद्धत्वशुद्धिद्वैविध्यश्रवणात् । आत्मनश्च "अनन्वागतं पुण्येन, अनन्वागतं पापेन, अनन्वागतस्तेन भवत्यसंगोऽह्ययं पुरुषः", "अस्नाविरं शुद्धमपापविद्धं" "शुक्रमक्षरं वेद्यते ज्योतिर्मयो हि शुभ्रः" इत्यादिश्रुतिरातेर्नित्यशुद्धैकरूपत्वावगमात् । अत्यन्तवैधर्म्याद्वपि मनसो नात्मतेत्याह—शुद्धत्वशुद्धिप्रतीतेरिति ॥ प्रतीतिः श्रौती, आनुमानिकी च । तथा

"मन एव मनुष्याणां कारणं बंधमोक्षयोः ।
बंधाय विषयाऽऽसक्तं मुक्त्यै निर्विषयं स्मृतम् ॥"

इति श्रुत्या मनसो बंधमोक्षनिमित्तत्वोक्तेस्तत्कृतसंगदोषैर्बद्धस्याऽऽत्मनस्तदन्यतेत्याह—हेतुत्वादिति ॥ बंधस्य=आध्यासिकपरिच्छेदादिलक्षणस्य, मुक्तेः=तन्निवृत्तेश्च, हेतुत्वात्=प्रयोजकत्वादित्यर्थः॥ तथा "तदेव सक्तस्सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य" "मनो ह्यतेनाऽऽयात्यस्मिन् शरीरे प्राणस्तेजसा युक्तः सहात्मना यथासंकल्पितं लोकं नयति ।" "चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत् । यच्चित्तस्तन्मयो भवति गुह्यमेतत्सनातनम्" इत्यादिश्रुतेः,

"यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥"

इत्यादिस्मृतेः, तत्क्रतुन्यायोपपादनाच्च जीवस्य मनोऽनुसारेण देहग्रहणावगमादपि तस्य नात्मतेत्याह—तदन्विति ॥ तन्मनोऽनुसृत्य तनुभृतेः=शरीरधारणादित्यर्थः । भरतादीनां मृगादिजन्मोपाख्यानमप्यस्मिन्नर्थे प्रसिद्धम् । पूर्वं सामान्ये, इह विशेषे, पूर्वं शुद्धस्य जीवभावे, इह तदुत्तरभाविशरीरग्रहणे वा निमित्तत्वमुक्तमिति हेत्वोर्भेदः । तथा "एतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः" "स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयः" इत्यादौ वाक्प्राणाद्यभिमानादात्मनस्तन्मयत्ववन्मनो-

भिमानेन मनोमयत्वश्रवणादपि तस्य नात्मतेत्याह—तन्मयत्वश्रुतेश्चेति ॥ "तदनु" इत्येतदत्राऽपि संबध्यते। मनोऽनुसारेण मनोमयत्वश्रुतेश्चेत्यर्थः। तन्मयत्वं चात्र तत्प्रायत्वम्। वदन्वाक्पश्यन् चक्षुः, शृण्वन् श्रोत्रम्, मन्वानो मनः" इति चान्यत्र तत्तदभिमानात्तद्रूप्यमात्मनः श्रुतम्। यदुक्तं सुषुप्तौ ब्रह्मप्राप्तिश्रवणात्तस्याऽऽत्मतेति तत्परिहरन्हेत्वन्तरमाह—जागृदिति॥ जागृत्स्वप्नभोगप्रदकर्मोपरमेण तयोः प्रशान्तौ मनस्यैकीभूतस्य चक्षुरादिकरणगणस्य सविषयस्य लये सहैवेन्द्रियैः मनसोऽपि प्रशान्तेः कारणे प्राज्ञे संस्कारमात्रावशेषेण विलयात् "तद्यथा सोम्य वयांसि वासोवृक्षं संप्रतिष्ठन्ते, एवं ह वैतत्सर्वं परे आत्मनि संप्रतिष्ठते।" इति सुषुप्तौ सर्वकार्यलयप्रपंचनप्रस्तावे "चक्षुश्च द्रष्टव्यं च" इत्यादिवत् "मनश्च मन्तव्यं च" इति सविषयस्य मनसोऽपि लयश्रवणात्। नच वयोवासवृक्षदृष्टान्तात्तत्रप्रवेशमात्रं संप्रतिष्ठा,न तु विलय इति भ्रमितव्यम्।"सुषुप्तिकाले सकले विलीने", "सलिल एकोद्रष्टाऽद्वैतो भवति, न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तम्" इत्यादिश्रुत्यन्तरैः सर्वकार्यलयप्रतिपादनात्। मनसश्चात्मत्वे सुषुप्तावात्मनाशप्रसङ्गेनाऽऽत्मनित्यत्वप्रतिपादकश्रुतिविरोधः, अभ्युदयनिश्रेयसाद्युपदेशवैयर्थ्यम्, इन्द्रियात्मवादोक्तदोषापत्तिश्च। न च तदेव मे मनः स एवाहमिति प्रत्यभिज्ञाविरोधान्नसुषुप्तौ मनोनाश इति शंक्यम्। त इमे शालयो भुज्यन्ते ये परुद्भुक्ताः, तस्मिन्नेतस्मिन् स्रोतसि मज्जामः इतिवत्सादृश्यमात्रादात्यन्तिकविनाशाऽनभ्युपगमेन,तिरोभूतस्यैवपुनराविर्भावाद्वा प्रत्यभिज्ञोपपत्तेः। किंच, स एवाऽहमिति प्रत्यभिज्ञाऽऽत्माभेदमात्रविषयाऽतो तदेव मे मन इति प्रत्यभिज्ञा तु मनोतिरिक्तात्मानमवगाहत इति न तदवलंबनेनेष्टसिद्धिरिति भावः। नन्वस्त्वात्मन एव तर्हि सुषुप्तौ नाशः पुनर्जागरे उद्भवश्चेत्याशङ्कां परिहरन्हेत्वन्तरमाह—सुषुप्तेरिति ॥ सुषुप्तेस्सकाशात्पुनरुत्थाने जागरे सुप्तिः=सुषुप्तिः, सुखमेव सौख्यं तयोस्स्मृतिरित्यर्थः ॥ यद्यात्मनोऽपि नाशस्स्यात्तर्हि सुषुप्तेस्तत्सुखस्य चाऽनुभवितुरभावात् उत्थितस्य 'सुखमहमस्वाप्सम्' इतिस्वापसुखयोः स्मरणं न स्यादित्यर्थः। इदं च यद्यपि पूर्वहेतुफलम्। तथापि स्वातन्त्र्येणाऽपि व्याप्तिसंभवादुपन्यस्तम्। अपिशब्दो मम मनश्चपलं दुर्निग्रहमिति भेदाऽनुभवस्य तन्निग्रहबोधकश्रुत्यादिप्रमाणस्यच संग्रहार्थः। चकारः पूर्वप्रसाधिताऽनात्मवर्गैर्मनसस्समुच्चयार्थः। द्वितीयस्त्वपिशब्दो दर्शितहेतुभिरेव मनोवदहंकारचित्तयोरप्यनात्मत्वं साधनीयमिति प्रदर्शनार्थः ॥ २५ ॥

ननु मास्तु मनस आत्मत्वं, विज्ञानशब्दवाच्याया बुद्धेस्तु स्यात् । ननु निराकृतं विज्ञानस्याऽऽत्मत्वम् । क्षणिकविज्ञानस्य तन्निराकृतम् । नित्यविज्ञानस्य तु न निराकर्तुं शक्यम् । श्रुत्यनुभवसिद्धत्वात् । "विज्ञानं यज्ञं तनुते" इत्यादिना सर्वयज्ञादिकर्मकर्तृभूतं तत्प्रस्तुत्य "विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान्कामान् समश्नुते" इति तज्ज्ञानस्यैव सर्वपापनिवृत्तिसर्वकामाऽवाप्तिफलश्रवणात् । आत्मज्ञानफलत्वेन च ते प्रसिद्धे । अतएव न मनस्साम्यं तस्य, करणत्वात् । अस्य च "यज्ञं तनुते, कर्माणि तनुते" इति वैदिकलौकिकसर्वकर्मकर्तृत्वश्रवणात् । कर्ता हि सर्वत्रात्मेष्यते "शास्त्रफलं प्रयोक्तरि" इति जैमिनिसूत्रात्, कर्मकाण्डप्रामाण्याऽनुरोधात् "स हि कर्ता" इति श्रुतेश्च । एतच्च "कर्ता शास्त्रार्थवत्त्वात्" इति सूत्रयतो बादरायणस्याऽपि संमतम् । तस्माद्विज्ञानमेवाऽऽत्मेत्येकदेशिनामुपासकमीमांसकादीनां च मतम् । तन्निराचष्टे—

विज्ञानं स्थायि यत्तत्सममिह मनसा किंच नानाऽऽत्मतास्या
त्तस्याऽनेकात्मकत्वात्तदभिमतिवशादात्मबंधश्रुतेश्च ।
सारथ्यं तस्य फलसं यदपि तनुरथे स्वात्मनो भोगमुक्त्यो
स्तस्मादन्योऽस्य साक्षी तदुपहिततनुश्चिन्मयोऽस्त्यन्तरात्मा ॥

विज्ञानमिति । स्थायि=क्षणिकविलक्षणम्, नित्यमित्यर्थः । ईदृशं विज्ञानं पूर्वोक्तेन मनसा समम्=तुल्यम् । तस्याऽपि चित्प्रतिबिम्बग्राहिज्ञानक्रियाशक्तिप्रधानान्तःकरणांशत्वेन पूर्वोक्तात्मत्वबाधे तुल्ययोगक्षेमत्वादित्यर्थः । ननु "बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्" इत्यक्षपादसूत्रात् "बुद्धिर्मनीषा धिषणा" इत्यादिकोशेभ्यश्च ज्ञानमेव बुद्धिः, तदेव चैतन्यं विज्ञानं चेत्यवगम्यते, तस्यचाऽमूर्तस्याकाशवच्छिद्रयाऽऽधारत्वमसंभवि, नित्यज्ञानस्यात्मत्वं सिद्धान्ताविरुद्धं चेति न निराकरणार्हमिति चेत् । मैवम् । "बुद्धेर्गुणेनाऽऽत्मगुणेन चैव" "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च नेङ्गते तत्र परमात्मानमश्नुते ॥ बुद्धिश्च न विचेष्टते तामाहुः परमां गतिम्" इत्यादिश्रुतिभिः प्रागुदाहृतश्रुत्या च गुणक्रियाऽऽश्रयत्वेन प्रसिद्धस्य परिच्छिन्नद्रव्यस्य बुद्धिशब्दवाच्यत्वनिश्चयात् । तस्यैव बह्वृचानामुपनिषदि "यदेतद्धृदयं मनश्चैतत्" इति मनोऽभेदाऽभिधानात् । विवरणे "एकमन्तःकरणं विज्ञानक्रियाशक्तिमन्मनआदिशब्दवाच्यम्" इत्युक्तत्वाच्च ।

तथाच बुद्ध्यादिशब्दा नानार्थाःआत्मशब्दवच्चैतन्ये मुख्याः, अन्यत्र तत्संबं-धान्निरूढा लाक्षणिका वा। सर्वथाऽपि पराभिमतं विज्ञानं गुणक्रियाश्रयत्वात्परिच्छिन्नद्रव्यमेवेति निराकरणार्हमेव। नन्वस्तु परिच्छिन्नत्वमेव जीवस्य, उत्क्रान्त्यादिशास्त्रानुगुणत्वात्। तथाविधस्यापि तस्य "न जीवो म्रियते" इति श्रुत्या नित्यत्वम्। "प्राणैर्मनो मनसश्च विज्ञानम्" इत्याद्युत्पत्त्यादिश्रवणं तु तदुपभोगसाधनदेहाद्युत्पत्त्युपचयाधीनोपभोग्यविषयसंबन्धोत्पत्त्या औपचारिकम्। "एतेभ्यो भूतेभ्यस्समुत्थाय तान्येवाऽनुविनश्यति, न प्रेत्यसंज्ञाऽस्ति" इत्यादौ तवाऽपि तथैवेष्टत्वात्। सर्वगतत्वश्रुतयस्त्वीश्वरविषया भविष्यन्तीत्याशंक्य परिच्छिन्नस्याऽणुत्वमग्रे निराकरणीयमिति मध्यमपरिमाणत्वं परिशिष्यते। तथाच सावयवत्वप्रसङ्गे, अवयवानां प्रत्येकं चेतनत्वमवयविन एववेत्यार्हतचार्वाकमतोक्तदूषणगणग्रास इत्याह—किंचेति। अनेकात्मकत्वात्=अनेकावयवघटितत्वात्, अवयवाऽवयविनोस्तादात्म्यात्, अपञ्चीकृतकार्यत्वात्पञ्चभूतात्मकमन्तःकरणम्, तस्याऽऽत्मत्वे तुल्यन्यायेन स्थूलदेहेन्द्रियादीनामप्यात्मता दुर्वारा, साधकबाधकयुक्तिसाम्यात्। तथाच नानात्मतास्यादित्यर्थः। "न जीवो म्रियते" इति श्रुतिस्तु जीवस्य ब्रह्माभेदाऽभिप्रायेणाऽविनाशित्वपरा। "अविनाशीवा अरेऽयमात्मा अनुच्छित्तिधर्मा, मात्राऽसंसर्गस्त्वस्य भवति" इति श्रुत्यन्तरे तथैव निर्णीतत्वात्। "तत्त्वमसि" इत्यभ्यस्यमानप्रस्तुत महा वाक्योपयोगाऽऽनुगुण्याच्च न विज्ञाननित्यत्वपरा। वस्तुस्वभावविरुद्धाऽप्रस्तुतार्थकत्वापत्त्याऽप्रामाण्यापत्तेः। यत्तूक्तमुत्क्रान्त्यादिशास्त्रानुगुण्यं तत्परिहरन् हेत्वन्तरमाह—तदिति॥ तस्याः बुद्धेः, अभिमतिः=अभिमानः तादात्म्याध्यासलक्षणः, तद्वशात्=तत्प्रयुक्तपारवश्यात्, आत्मनः परिच्छेदलक्षणबंधश्रवणादित्यर्थः। तथाच श्रुतयः—"बुद्धेर्गुणेनाऽऽत्मगुणेन चैव आराग्रमात्रोह्यवरोऽपि दृष्टः।" "ससमानस्सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव" "सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति" "मृत्यो रूपाणि" इति श्रुतौ "ससमानस्सन् हृद्यन्तर्ज्योतिः" इति हृच्छब्देन बुद्धेः प्रस्तुतत्वात् बुद्ध्यासमानस्तादात्म्याध्यासादेकीभूतस्सन्नित्यर्थः। तथाचोत्क्रान्त्यादिकमपरिच्छिन्नस्याप्यध्यासनिमित्तकमेवेतिभावः।

"यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः।
अथ मर्त्योऽमृतो भवत्येतावदनुशासनम्॥"

इत्यादीनां बुद्ध्युपाधिनिवृत्त्याचात्ममोक्षप्रतिपादकश्रुतीनां संग्रहार्थश्च-

कार:। किंच, "आत्मानं रथिनं विद्धि शरीरं रथमेवतु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च। इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान्। आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः। विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः। सोऽध्वनः पारमाप्नोऽति तद्विष्णोः परमं पदम्॥" इति काठकश्रुत्योर्मोगमोक्षोपयोगित्वाद्देहादेरथरूपकल्पने आत्मनो रथित्वं, विज्ञानस्य तु सारथित्वं कल्पितम्। तदपि विज्ञानस्याऽनात्मत्वेमानमित्याह—सारथ्यमिति॥ तस्य=विज्ञानस्य, तनुरथे=शरीररूपे स्यन्दने, सारथ्यं=सारथेर्भावः सारथ्यं क्लृप्तम्=रूपकेण संपादितम्। किंच, "तस्माद्वा एतस्माद्न्योऽन्तर आत्माऽऽनन्दमयः" इति स्पष्टमेवाऽऽत्मनो विज्ञानमयातिरिक्तस्य प्रदर्शनात्, विज्ञानमयस्य कोशत्वप्रसिद्धेः। भृगुवल्लयां विज्ञानाद्प्युत्तरत्र "आनन्दो ब्रह्मेति व्यजानात्" इति दर्शितत्वात् "यो विज्ञाने तिष्ठन्विज्ञानादान्तरः" इति सर्वान्तरस्य पृथङ्निर्देशाच्च विज्ञानस्यापि साक्षी नित्यदृक्स्वरूपः परमात्माऽन्योऽस्तीत्याह—तस्मादिति॥तस्मात्=उक्तहेतोः अस्य=विज्ञानस्य साक्षी=साक्षादव्यवधानेन द्रष्टा तेन=विज्ञानेनोपाधिना,उपहिततनुः=उपहितस्वरूपः, नीरक्षीरवदेकीभावाद्दुर्विवेक इत्यर्थः। चिन्मयः=स्वार्थे मयट्, चित्स्वरूपः। अनेन द्रष्टेः कर्तृत्वाद्द्राश्रयत्वाद्वा न साक्षित्वम्, किन्तु दृग्स्वरूपत्वादिति दर्शितम्। अन्तरात्मा सर्वान्तरत्वेन श्रुतिप्रसिद्ध आत्मा अस्ति, न नास्ति, तस्याऽभावे ग्राहकाभावान्निस्साक्षिकं विज्ञानादिजगत् आलोकासत्वइव रूपमस्ति नास्तीति व्यपदेशानर्हंखपुष्पायमानं स्यादित्यर्थः। तथाच स्मृतिः—

"असत्यस्मिञ्जगन्नाथे ह्यन्धीभूतमिदं भवेत्।
सूर्येणेव विहीनत्वान्निरालोकं जगद्यथा॥" इति॥

अयंभावः—"विज्ञानं यज्ञं तनुते" इति श्रुतिः यज्ञतत्फलोपभोगयोग्यं व्यावहारिकं सर्वान्तराऽऽत्मज्ञानोपायत्वेन प्रस्तुतं कोशविशेषमेवाऽऽह न पारमार्थिकमात्मानम्। अत एव तत्रत्यं सर्वपापक्षय सर्वकामावाप्तिफलकीर्तनमापेक्षिकस्यान्यत्रसिद्धहिरण्यगर्भोपास्तिफलस्याऽनुवादोऽर्थवादो वा, अपापश्लोकश्रवणवाक्यवत्। अन्यथाऽत्रैवोपक्रमोपक्षिप्तसर्वकामावाप्तिफलेनोपसंहारे ज्ञातव्यान्तराऽपरिशेषादभिलषितफलान्तराऽसंभवाच्चोत्तरग्राऽऽनन्दमयकोशनिरूपणं, पुच्छब्रह्मनिरूपणं, तदुपपादनार्थ उत्तरो ग्रन्थश्च

निरर्थकः स्यात् (1) "कर्ताशास्त्रार्थवत्वात्" इत्यादिसूत्राणि तु (2) "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" इति सूत्रोपदर्शितबुद्धिसंबंधाधीनकर्तृत्वादिप्रपञ्चनार्थानि कर्मोपासनाकाण्डोपयोगितया। तावतैव कर्मकाण्डप्रामाण्योपपत्तेः। "शास्त्रफलं प्रयोक्तरि" इत्यादिकमपि बुद्ध्युपहितव्यावहारिकतादृशाऽऽत्मविषयं, न पारमार्थिकाऽऽत्मविषयमिति स्फुटीकृतं भगवद्भिर्भाष्यकृद्भिरिति दिग्विजयः ॥ ३६ ॥

ननु माभूद्विज्ञानमात्मा, ईश्वरांशभूतस्तु ज्ञानादिगुणवान् "एषोऽणुरात्मा चेतसा वेदितव्यः" "वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवस्सविज्ञेयः" "वालाग्रमात्रं हृदयस्यमध्ये" "अणोरणीयान्" "इत्यादिश्रुत्या, गीतासु च "नित्यस्सर्वगतस्थाणुः" इत्यत्र सर्वगतस्थश्चासावणुश्चेति विग्रहाद्भगवद्वचनेन पाञ्चरात्राद्यागमैश्चाऽणुत्वेन प्रमित आत्मा स्यात्। सच स्वांशिनमीश्वरं तत्वतोज्ञात्वा तपस्संयमभजनप्रपत्त्यादिभिः प्रसाद्य तत्प्रसादात्तत्साम्यं तत्सान्निध्यं च प्राप्नोत्येवैवाऽस्य मुक्तिः। सचाणुरेकदेशस्थितोऽपि सर्वशरीरव्यापिज्ञानगुणेन सर्वाङ्गीणशैत्याद्युपलभते। एकदेशस्थितेनाऽपि शैत्यचन्दनविन्दुना सर्वाङ्गीणशैत्योपजननदर्शनेन वस्तुशक्तेरचिन्त्यत्वात्। वायुप्रसारिततामरसाऽऽमोदवच्च ज्ञानगुणस्य धर्म्यतिरिक्तदेशप्रसरोप्यविरुद्ध इति पाञ्चरात्राद्यभिमतं पक्षमपि परीक्ष्य प्रतिक्षिपति—

**अणवात्मा चित्स्वरूपो यदि सकलतनौ शैत्यबोधो न ते स्या**
**न्नावैधर्म्येऽस्यबोधः सकलतनुगतग्राहकोऽन्यो गुणश्च।**
**वैधर्म्येऽणोर्गुणश्चित्कथमखिलतनुं व्याप्नुयादाणवं वा**
**सिद्धं केनाऽऽत्मनस्ते श्रुतिभिरिति न यत्तास्तदानन्त्यनिष्ठाः॥**

---

(१) कर्ता शास्त्रार्थवत्वात्। आत्मैव कर्ता न बुद्धिः कर्तुरपेक्षितोपायबोधकविधिशास्त्रस्यार्थवत्वात्। आत्मनः कर्तृत्वे विधिशास्त्रमर्थवद्भवति। अन्यथा बुद्धिः कर्ता आत्मा फलभोक्तेति कर्तुरपेक्षितोपायबोधकं शास्त्रमनर्थकमेव स्यात्॥

(२) तु शब्दः पूर्वपक्षव्यावृत्त्यर्थः। तस्याः=बुद्धेः, गुणाः=अणुत्वोत्क्रान्तिगत्यागतिसुखदुःखादयः, ते गुणाः सारः प्रधानं यस्य जीवस्य सतथा तस्य भावस्तत्वं, तद्व्यपदेशः=तस्माद्व्यपदेशः अणुत्वादिव्यपदेशः प्राज्ञवत्=प्राज्ञस्य=परमात्मनः सगुणेषूपासनेषु "दहरोऽस्मिन्नन्तराकाशः अणीयान् व्रीहेर्वायाद्वा" इत्यादिषूपाधिवशाद्यथाऽणुत्वादिकं व्यपदिश्यते तद्वदित्यर्थः।

अध्यात्मेति ॥ अध्यात्मा चिद्रूपोऽचिद्रूपो वा? तत्र पक्षद्वयसाधारणदोषसहितमाद्यपक्षे दोषमाह—सकलेत्यादि श्लोकार्द्धेन । ते=तव मते ह्रदादिनिमग्नस्य पुरुषस्य सकलतनौ=सर्वाङ्गे, शैत्यबोधः=शीतस्पर्शाऽनुभवो न स्यात्, अणोस्सर्वाङ्गसंबन्धस्य युगपदसंभवात् । क्रमिकसंयोगानां चाऽयौगपद्येनैकज्ञानजनकत्वासंभवात् । नच शैत्यादिविषयप्रदेशे आत्माऽसंनिधानेऽप्यात्मसंयुक्तदेहेन्द्रियमनस्संबंधादेव शैत्यादिसाक्षात्कारोऽस्त्विति शंक्यम् । शैत्याद्यनुभवजन्यसुखदुःखादेः शीतद्रव्यादिसंयुक्तावयवावच्छेदेनैवानुभवस्य सार्वजनीनस्य तत्रात्मसंनिधानमन्तरेण दुरुपपादत्वात् । अथवा सकलतनौ=सावयवे शरीरे आत्मसंयुक्तत्वेनाऽभिमतप्रदेशावच्छेदेनाऽपीत्यर्थः । अणोर्देहेन, तदवयवैर्वा संयोगस्य वैशेषिकमतनिरासोक्तयुक्त्या दुर्निरूपत्वात् । अभ्युपगमेऽप्यणुनाऽव्यतिरिक्तप्रदेशाऽस्पर्शनादेकत्र मूर्तद्रव्यद्वयाऽसमावेशादात्माऽयुक्तावयवेष्वेव जलादिसंयोगस्य वाच्यतया तच्छैत्यस्य दुर्ग्रहत्वात् । आत्मसंयुक्ताऽणुप्रदेशे जलसंयोगाभ्युपगमेऽपि तत्राऽव्यवहितजलभागसंयोगाद्योगात्परमाणुस्पर्शस्य चातीन्द्रियत्वेन ग्रहणाऽनुपपत्तेः । नच तत्र जलावयवसंयोगेऽवयविसंयोगस्याप्यवर्जनीयतया तच्छैत्यग्रहसंभव इति युक्तम् । अङ्गुल्यग्रेण गङ्गां स्पृशतो महाप्रवाहशैत्यानुभवापत्तिवारणाय संयोगजसंयोगस्य स्वाश्रयस्पर्शग्रहाप्रयोजकत्वस्यावश्यवाच्यत्वात् ॥ यत्तूक्तं सर्वदेहव्यापिज्ञानगुणेन शैत्यादिग्रह इति तत्परिहरन्नाह—नेति । आत्मापि चिद्रूपो ज्ञानगुणश्च स्वयेष्यते । गुणगुणिनोर्वैधर्म्याभावे सकलतनुव्यापिशैत्यादिग्राहकत्वेनाभिमतोऽस्यात्मनो बोधः ज्ञानाख्योगुण अर्थाद्स्मादात्मनोऽन्यो भिन्नो न स्यादित्यनुपद्यते, भेदे कारणाभावादिति भावः । एवं गुणश्च न स्यात्, रूपरसादीनां हि स्ववैधर्म्यशालिद्रव्यगुणत्वं दृष्टं, न हि रूपं रूपान्तरस्य, रसो रसान्तरस्य, घटो वा घटान्तरस्य गुणः । न्यायनयेऽपि सत्तातिरिक्तजातेर्गुणगुण्युभयवृत्तित्वानभ्युपगमादित्यर्थः । नच दीपप्रभयोस्तेजस्त्वसाधारण्येऽपि धर्मधर्मिभाववज्ज्ञानत्वसाधारण्येऽपि गुणगुणिभावोऽस्त्विति शङ्क्यम् । प्रभायां दीपाऽवृत्तिप्रभात्ववज्ज्ञानगुणे आत्माऽवृत्तिभेदकधर्मान्तराऽपरिचयात् । गुणत्वमेव तथाऽस्त्विति चेत् । न । तस्य भेदाऽसिद्धावसिद्धेः । स्व स्वाभावोभयसमानाधिकरण जाति तदभावोभयसामानाधिकरण्यायोगाच्च । विरलं प्रसृमरं तेजः प्रभा, निबिडं च दीपादीति सावयवयोर्द्रव्ययोरेव दण्डपुरुषयोरिव धर्मधर्मिभावेन गुणगुणित्वाऽसंप्रतिपत्तेश्च । द्वितीयपक्षमनूद्य दूषयति—वैधर्म्य इत्यादिना । आत्मगुणस्य ज्ञानस्याऽऽत्मवैधर्म्यमात्मनो जडत्वमन्तरेण न संभवतीत्य-

र्थादात्मनो जडत्वपक्ष इत्यर्थः । अणोः=अणुपरिमाणस्याऽऽत्मनो गुणश्चित्=ज्ञानम् अखिलतनुं=समग्रं देहं कथं व्याप्नुयात् । गुणस्य गुण्यतिरिक्तदेशप्रसराऽयोगात् । नच तामरसाऽऽमोदवदुपपत्तिः । तत्रापि वायूपनीतानां गन्धास्पदपुष्परेणूनां प्रसरानुमानात् । अत एव चिरावस्थितपुष्पे गंधापकर्षः, कर्पूरादौ परिमाणापकर्षश्च दृश्यते । नच कस्तूर्यादावपि तदापत्तिः । भोजकाऽदृष्टेन पुनः पुनस्तादृशावयवपूरणाभ्युपगमात् । गन्धप्रसरवादिनाप्यपसृते गन्धे द्रव्यस्य निर्गन्धत्वापत्तिवारणाय क्षणे क्षणे गन्धान्तरोत्पत्तेरवश्यवाच्यतया गौरवाधिक्याभावात् । अवयवगंधोऽवयविगंधो वा प्रसरतीत्यत्र विनिगमकाभावेन सर्वगंधापगमे गंधान्तरोत्पादकसमवधानपर्यन्तं निर्गन्धत्वापत्तेः । सजातीयगंधान्तरोत्पादाय परमाणुपर्यन्तं विजातीयानन्तपाकादिकल्पनागौरवाच्च । गुणस्य गुणिपरित्यागे गुणत्वभङ्गापत्तेश्च । एतेन शैत्यचन्दनबिन्दुनिदर्शनोपन्यासोऽपि प्रत्युक्तः । तत्रापि चन्दनसंयोगाभिव्यक्तशैत्यजलभागानां सर्वाङ्गे प्रसरसंभवात् । किंच । असंभाव्यमपि सति प्रमाणे बलादभ्युपगम्येत यथा निरालम्बनेऽपि पक्षिणां स्वैरविहरणम् । निरुच्छ्वासेन वा मत्स्यादेर्जीवनं प्रत्यक्षसिद्धम् । नचेह तादृशं प्रमाणमस्तीत्यभिप्रेत्याह—आणवंवेति । आत्मनः, अणोरिदमाणवम्=अणुपरिमाणं ते=तव, केन=प्रमाणेन सिद्धम् । न तावत्प्रत्यक्षेण, द्रष्टुर्दृश्यत्वायोगेन विना आश्रयं, परिमाणमात्रग्रहणासंभवादणोरतीन्द्रियत्वात्पारिमाण्डल्यस्याऽयोग्यत्वाच्च । अतएव नानुमानोपमानाभ्याम् । अतीन्द्रिये आश्रये लिङ्गसादृश्ययोर्दुर्ग्रहत्वात् । नाप्यागमेन, तस्य "अस्थूलमनणु" इत्यादिना प्रत्युत तत्प्रतिषेधकत्वादिति भावः । यत्तु "बालाग्रशतभागस्य" इत्यादिश्रुतिभिस्तत्सिद्धिरित्युक्तम् । तदुदाहृत्य प्रतिषेधति—श्रुतिभिरितिनेति । उपक्रमादिपर्यालोचने तासां नाणुत्वबोधनतात्पर्याऽवसाय इति भावः ।, तर्हि तासां कोऽभिप्रायस्तत्राह—यदिति । यत्=यस्मात्कारणात्, ताः=त्वदुदाहृतश्रुतयस्तदानन्त्यनिष्ठाः=तस्य प्रत्यगात्मनो बुद्ध्युपाधिसम्बन्धप्रयुक्ताऽतिन्यूनपरिमाणतालक्षणपरिच्छेदाऽनुवादेन वास्तवाऽपरिच्छेदलक्षणे आनन्त्ये निष्ठा=परमतात्पर्यं यासांतास्तथोक्ताः ।

अयं भावः—"बालाग्रशतभागस्य" इति श्रुतौ "भागो जीवः स विज्ञेयः सचाऽऽनन्त्याय कल्पते" इति वाक्यशेषे जीवस्य मोक्षे स्वाभाविके आनन्त्यश्रवणादुक्ताऽल्पपरिमाणमौपाधिकमिति स्फुटमवगम्यते । नहि वास्तवस्यापगमः, उत्पन्नस्य नित्यता वा संभवति । अत एव "बालाग्रमात्रम्" इति श्रुतिरप्यौपाधिकपरिमाणानुवादिन्येव । अन्यथा क्वचिद्वालाग्रायुत

तमभागपरिमाणत्वं,क्वचिद्वालाग्रपरिमाणत्वं,क्वचिदाराग्रपरिमाणत्वं,क्वचिदानन्त्यं प्रतिपाद्यत इति विसंवादाच्छ्रुतीनामप्रामाण्यापत्तेः। वस्तुनि विकल्पायोगात्। औपाधिकपरिच्छेदाभ्युपगमे तु "समः प्लुषिणा, समो नागेन, समो मशकेन, सम एभिस्त्रिभिर्लोकैः" इति लिङ्गस्य तत्तद्देहोचिताऽनियतपरिमाणश्रवणात्सर्वं समञ्जसम्। इत्थमेव "अणोरणीयान्" इत्यादिश्रुतेरभिप्रायः। "एषोऽणुरात्मा चेतसा वेदितव्यः" इत्यादावणुशब्दस्तु "अणुः पन्था विततः पुराणः इति वद्दुर्विज्ञेयत्वपरः, "सूक्ष्मात्सूक्ष्मतरं नित्यम्" इति श्रुतौ ब्रह्मणि सूक्ष्मशब्दवत्। दृश्यते हि "यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते" इत्यादौ विभावपि तथाविधसूक्ष्मादिशब्दः। गीतावाक्यस्य पदभङ्गेनोपन्यासस्त्वतिमन्दः, परिच्छिन्नस्य चलनाद्यनिवारणात् "अचलोऽयं सनातनः" इति वाक्यशेषविरुद्धश्च। जीवस्येश्वरांशत्वप्रतिपादकस्मृतयोऽपि न मुख्यांशांशिभावपराः। निरवयवत्वश्रुतिव्याकोपात्, सांशस्याऽनित्यत्वप्रसङ्गाच्च। किन्तु भ्रान्त्याऽत्यन्तभिन्नत्वेन निश्चिते प्रत्यगात्मनि वास्तवब्रह्मैक्ये बुद्ध्यवताराय बिम्बप्रतिबिम्बयोरिव घटाकाशमहाकाशयोरिवौपाधिकांशांशित्वानुवादपरा इति सर्वं सुस्थम्॥ ३७॥

स्थायिविज्ञानात्मवादनिराकरणेन ज्ञानगुणनिराकरणेन च निराकृतप्रायमपि भट्टाभिमतं जडबोधात्मकमात्मतत्त्वं भट्टपादानां कर्मकाण्डार्थनिर्णये अभ्रान्तत्वस्य सर्वसंमतत्वात्तद्वदौपनिषदात्मतत्त्वनिर्णयेऽपि तेषामभ्रान्तत्वमेवेति मन्दमतीनां भवेद्विश्वास इति विशिष्य तन्निराकर्तुमाह—

नैकस्याचिज्जडात्मा कथमथ विषयः सत्स्वयं स्वस्य कौ ता
वंशौ योगस्तथात्मा किमिति च जडता केन वा चेतनस्य।
कर्तृत्वं तस्य कीदृक्करणसमुदयं सैष धत्ते कथं वा
तत्त्वं जीवस्य देवप्रियपशुभिरिदं कर्मठैर्दुर्निरूपम्॥ ३८॥

नैक इति॥ एक एवात्मा चिद्रूपो जडरूपश्चेति विरुद्धोभयस्वभावो न स्यात्। संभावनायां लिङ्। एकस्य तेजस्तिमिरोभयात्मनेव विरुद्धचिज्जडोभयात्मनावस्थितिर्न संभावितेत्यर्थः। अथवा विरुद्धोभयस्वभावस्त्वदभिमत आत्मा एको न स्यात्॥ तथाचैकस्मिन्देहे द्वावात्मानौ स्वीकृतौ स्यातामित्यर्थः॥ नन्वहंप्रत्ययविषय एवाऽऽत्मा सर्वसंमतः। अहंप्रत्ययविषयत्वं च तज्जन्यज्ञातताऽऽश्रयत्वम्॥ न च चिदंशस्य तत्संभवति,स्वात्मनि क्रिया-

विरोधात्, चैतन्यान्तरगोचरत्वेऽपि घटादिवदचित्त्वप्रसङ्गादिति ज्ञानमात्रस्याऽतीन्द्रियत्वाभ्युपगमात्। अतस्तन्निर्वाहार्थमगतया जडांशोऽप्यात्मन्यत्रयमभ्युपेय इत्याशङ्क्याह-कथमिति॥अथ=जडांशाऽभ्युपगमानन्तरमपिसः=चिज्जडांशसंवलितरूप आत्मा स्वस्य=स्वात्मकस्य स्वीयस्य वा चिदंशस्य विषयः कथम्? जाड्यांशमात्रस्य विषयत्वसंभवेऽपि चित्संवलितरूपे विषयतायाश्चिति तद्विषयत्वमन्तरेण दुरुपपादत्वात्, नहि पुरुषाऽविषयके दण्डमात्रविषयके ज्ञाने दण्डसंवलितपुरुषविषयता सूपपादा। नवा अतीन्द्रियसंवलितविषयकं प्रत्यक्षं क्वचित्प्रसिद्धम्। यदि तु तन्निर्वाहाय चिदंशोऽपि विषयत्वमभ्युपगच्छसि तर्हि जडांशकल्पनवैफल्यं, स्वात्मनि क्रियाविरोधतादवस्थ्यम्, अपसिद्धान्तश्च। न ह्यहमिव त्वमात्मनः स्वप्रकाशत्वमभ्युपगच्छसि। येनाहमाकार वृत्तावहङ्कारे स्फुरति तदधिष्ठानचैतन्यस्याप्यनावृतस्य स्वतस्स्फूर्तौ तादात्म्यस्फुरणात्संवलितस्य विषयत्वमुपपादयेरित्यर्थः। अथवा-अभ्युपगतस्यापि जडांशस्य वास्तवचित्तादात्म्याऽभ्युपगमेन चिद्रूपत्वात्तद्विषयत्वेऽपि स्वात्मनि क्रियाविरोधानिर्मोकात्सोऽचिदंशः स्वयं स्वस्य=स्वाभिन्नचिदंशस्य विषयः कथमित्यर्थः॥

नन्वंशयोरंशितादात्म्येऽपि न परस्परं तादात्म्यम्। नहि शाखानां वृक्षे तादात्म्यमस्तीति परस्परमपि तादात्म्यमिति चिदंशयोरत्यन्तभिन्नयोर्विषयविषयिभावो न विरुद्धः। अंशस्य चाहंप्रत्ययविषयत्वे तत्तादात्म्यादंशिनोऽप्यायातमेव। नचाविषयचिदंशतादात्म्यादंशिनस्तदविषयत्वस्याप्यापत्तिः। चिदचिदुभयांशिनो विषयाविषयोभयरूपत्वस्येष्टत्वात्। अत एव "मनसैवानुद्रष्टव्यम्" "एतदप्रमयं ध्रुवम्" इति विरुद्धश्रुतिद्वयस्याप्याञ्जस्यम्। नच विरोधः, अंशांशिनोर्भेदाभेदाभ्युपगमवदहमिति प्रतीतिबलादविरुद्धत्वकल्पनादित्याशङ्कां निराचिकीर्षुरंशांशिसम्बन्धानामनुपपत्तिमभिप्रेत्य पृच्छति—कावित्यादिना। तौ=चिदचिदंशौ,कौ=किमवयवौ, उत समूहिनौ, उत जातिव्यक्ती, उत गुणगुणिनौ,उत क्रियाक्रियाधारौ। नाद्यः, अमूर्तयोरवयवत्वायोगात्। अचिदंशस्य मूर्तत्वाऽभ्युपगमे देहेन्द्रियादिवदनात्मांशत्वापत्तेः। अन्यथा देहेन्द्रियादेरपि स्थूलोऽहमित्याद्यहं प्रत्ययविषयत्वादात्मांशत्वे चार्वाकमतप्रवेशापत्तेः। सावयवस्याऽऽत्मनो विनाशापत्तेश्च॥

न द्वितीयः। समूहिनामेकैकोपाधिसम्बन्धादारोपितैकत्वानां समूहबुद्धिविषयतया तदतिरिक्तसमूहाभावेन समूहिनामात्मत्वे नैरात्म्यापत्तेः।

देहेन्द्रियादिसमूहस्याऽऽत्मत्वापत्तेश्च। तयोरात्मत्वे चैकदेहे आत्मद्वयाभ्युपगमापत्तेः। न तृतीयः। द्वयोरपि स्वयाऽनेकानुगतत्वानभ्युपगमात्। न चतुर्थः। ज्ञानस्य गुणत्वनियमात् क्रियांशस्य घटादिष्वज्ञानगुणयोगात् विषयस्य ज्ञानधर्मत्वे विज्ञानवादिमतप्रवेशाच्च। नान्त्योऽपि। अमूर्ते ज्ञाने क्रियायोगात्। ज्ञानस्य क्रियात्वे कारकत्वप्रसङ्गापत्तेर्वस्तुतन्त्रत्वानापत्तेश्च। अंशयोर्नित्यत्वाऽभ्युपगमविरोधाच्च। एवं योगः=अंशयोस्सम्बन्धश्च कः? इति विपरिणामेनान्वयः। किं संयोगस्तादात्म्यं,विषयविषयिभाव एव वा। आद्ये, अनित्यत्वापत्तेः। द्वितीये चिद्द्वैविध्यापत्तेः। तृतीये घटादिवच्चिदंशस्याऽऽत्मांशत्वानापत्तेः। तयोरंशी आत्मापि कः? अंशाभ्यामन्योऽनन्यो वा? ष्यासन्यवृत्तिः,प्रत्येकपक्षे येत्यादिविकल्पस्य पूर्वोक्तक्रमनिरासोक्तयुक्त्या दिशा निरसनीय इति भावः॥

यत्तु मेघादिदृष्टान्तेनैकस्य विषयाऽविषययोगपद्यत्वमविरुद्धमिति। तदुत्तरत्र दृष्टान्तनिरासेन निराकरिष्यते। अंशांशिभावादेरप्रामाणिकत्वादेव न श्रुत्यंशेऽपि स्वतुल्याऽऽश्रयत्वम्। किन्त्वावरणभङ्गार्थमखण्डाकारमनोवृत्त्यपेक्षणात् "मनसैवानुद्रष्टव्यम्" इत्युक्तिः, स्वप्रकाशचित्स्फूर्तौ वृत्तिप्रतिफलितचिदुपरागलक्षणफलव्याप्त्याऽनपेक्षणात्प्रमेयत्वांशोऽस्तीत्यौपनिषदाप्रदर्शितमेव। किञ्चात्मनो जडांशो नित्यसिद्धः, आगन्तुको? वा। आद्ये मानाभाव इत्याह—किमिति। किं प्रमाणमस्तीति जडता चेतनस्योच्यते श्रुतिस्मृत्यादिभिश्चिदेकरसत्वावगमादित्यर्थः। प्रयोजनं च जाड्यांशास्वीकारस्य नास्ति। अहंप्रत्ययविषयत्वस्याध्यस्ताहंकारतादात्म्येनापि सूपपादत्वादिति सूचनार्थश्चकारः। द्वितीये कारणाऽभावश्चेत्याशयेनाह—केन वेति। केन वा=कारणेन चेतनस्य जडतापत्तिरित्यर्थः। चैतन्यस्याऽपरिणामित्वादसङ्गत्वेन निमित्तान्तरसम्बन्धाऽयोगात्। जडांशान्तरपरिणामत्वे तत्रापि कारणान्तराऽपेक्षयाऽनवस्थानाद्विक्षेपादसंभवाच्चेत्यर्थः॥ नन्विच्छाद्वेषादिकमन्तःकरणधर्मोऽनिष्टप्राप्तिपरिहारार्थेषु लौकिकवैदिककर्मसु प्रवृत्त्युपयोगाच्चिदंशस्य चेच्छाद्यनाश्रयत्वात्तदाश्रयो जडांश आवश्यक इत्याशङ्क्याह-कर्तृत्वमिति। तस्याऽऽत्मनः कीदृशं कर्तृत्वं तद्धेतुरागादिकं च। न तावद्वास्तवं, श्रुतिस्मृतिसहस्रैस्तस्याभावप्रतिपादनात्। व्यावहारिकं त्वध्यासेनापि सूपपादमिति न जाड्यांशसिद्धिरित्यर्थः। करणोपादानेन हि कर्तृता प्रसिद्धा, तदेव तावन्निरवयवस्यासङ्गस्य निष्क्रियस्य न संभवतीत्यभिप्रेत्याह-करणसमुदयमिति। सः="निर्गुणं निष्क्रियम्" इत्यादिश्रुतिप्रसिद्धः,एषः=प्रत्यगात्मा विनाऽध्यासं करणसमुदयम्=इन्द्रियादिकलापं,कथं धत्ते? धारयति येनास्य वास्तवी।

कर्तृता स्यादित्यर्थः। सैषइत्यत्र(1) सोऽचि लोपे चेत्पादपूरणम्" इति सु लोपः॥ तस्माद्वास्तवं कर्तृत्वमभ्युपगच्छद्भिर्बहिर्मुखैः कर्ममीमांसकैरिदमौपनिषदमात्मतत्त्वं बोध्यमानमपि ज्ञातुमेवाशक्यं किं पुनस्स्वतो निरूपयितुमित्यभिप्रेत्योपसंहरति—तत्त्वमिति। जीवस्य=प्राणानां धारयितुः प्रतीच इदमौपनिषदैकवेद्यं तत्त्वं=याथात्म्यं, कर्मठैः=अजस्रमैहिकामुष्मिकसाधनेषु लौकिकवैदिककर्मसु घटमानैरविरक्तैर्बहिर्मुखैरित्यर्थः। कर्मणि घटोऽठच्, देवानांप्रियपशुभिः=इहलोके चन्द्रमण्डले च गवाश्वादिपशुवदुपभोगसाधनत्वात्प्रियैः पशुत्वाऽविच्छेदाय देवदूषितान्तःकरणैरित्यर्थः। तथा च श्रुतिः"आकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति" इति, "यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युरेवमेकैकः पुरुषो देवान्भुनक्त्येकस्मिन्पशावादीयमानेऽप्रियं भवति, किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः" इति। देव दूषिताशयत्वलिङ्गानि बहिर्मुखत्वादीनि॥ तच्चोक्तं वार्तिके—

"प्रमादिनो बहिश्चिताः पिशुनाः कलहोत्सुकाः।
संन्यासिनोऽपि दृश्यन्ते देवसन्दूषिताशयाः"॥ इति ॥

तस्मादीदृशैः कर्ममीमांसकैर्दुर्निरूपम्=निर्णेतुं प्रतिपादयितुं चाशक्यमित्यर्थः ॥ ३८ ॥

"नन्वस्तु तर्हि जड एवाऽऽत्मा,आकाशादिवद्विभुः,सुखादिवैचित्र्याच्च प्रतिशरीरं भिन्नः। तस्य चाणुरूपमनस्संयोगाद्बुद्ध्यादयो गुणा उत्पद्यन्ते। गुणाश्रयत्वाच्चाऽऽसौ द्रव्यत्वजातिमान्। उत्क्रान्तिगत्यादयोऽपि मनस एव, नात्मनः। अदृष्टवशाल्लोकान्तरे शरीरारम्भे तत्र मनःप्रवेशाद्भोगः" इति कणभक्षाऽक्षचरणपक्षं प्रतिक्षेप्तुमाह—

**मू० ॥ जीवानां वैभवं चेत्तनुकृतिकरणाऽदृष्टसाधारणत्वा**
**न्न स्याद्भोगव्यवस्था व्यतिकरमयते येन सर्वैर्मनोऽपि।**
**नानात्म्यं निष्प्रमाणं गदसि यदि तनूपाधिभिस्त्वं व्यवस्थां**
**सिद्धेऽसिद्धेऽपि भेदे यत इह विफलाः कल्पनीया विशेषाः ॥**

(1) सैष इत्यत्र सस् एष धत्ते इति प्रक्रियायां सस्य रुत्वे यत्वे यलोपे लोपशास्त्रस्यासिद्धत्वान्न स्वरसन्धिरित्याशङ्क्याह—"सोऽचिलोपेचेत्पादपूरणम्" स इत्येतस्याचि परतस्सु लोपो भवति लोपेसति चेत्पादः पूर्यते इति सूत्रार्थः। सपादसप्ताध्यायीस्थत्वादस्यनासिद्धत्वम् ॥

जीवानामिति । जीवानां=बहुवचनादनेकेषां, विभूनां भावो वैभवं=सर्वमूर्तद्रव्यसंयोगानुकूलपरममहत्परिमाणाश्रयत्वमभ्युपगतं चेत् एकैकदेहे सर्वजीवानुप्रवेशात्, भोगव्यवस्था=भुज्यत इति भोगः सुखादिः तस्य व्यवस्था, देवदत्तात्मन एवेदं सुखं, न यज्ञदत्तात्मनः इत्येवमादिरूपा, न स्यात् । सर्वेषां भोगसाङ्कर्यप्रसङ्ग इत्यर्थः । तत्कुत इत्यत आह—तन्विति ॥ तनुः=शरीरं, कृतिः=प्रयत्नः, करणानि=चक्षुरादीनि, अदृष्टं=धर्माधर्मादि-रेतेषां साधारण्यात्सर्वेषामेवेदं नान्यस्येत्यत्र नियामकाभावेन सर्वसाधारण्य-स्य दुर्वारत्वादित्यर्थः । ननु तत्तदात्ममनसोर्योगस्तत्तदात्मविशेषगुणहेतु-रिति व्यवस्थासिद्धिरित्याशङ्क्याह—व्यतिकरमिति॥ न मनोयोगव्यवस्थया व्यवस्थासिद्धिः, येन हेतुना मनोऽपि मित्यापनादेकैकस्मिन्देहे सर्वात्म-भिर्व्यतिकरं=संयोगम्, अयते=गच्छति । सर्वेषामेव सर्वमूर्तद्रव्यसंयोगा-श्रयाणां संनिधानात्मनसश्च मूर्तत्वेन सर्वसंयोगाऽवर्जनात्सर्वेषामिदं मन इत्यत्र नियामकाभावादिति भावः ॥ ननु जन्मान्तरीयतत्तददृष्टविशेषोपगृहीतं तत्तन्मन इति वक्तुं शक्यम् । जन्मान्तरेऽप्यदृष्टोत्पत्तेर्मनस्सापेक्षत्वेनाऽऽ-त्माश्रयापत्तेः । तत्र मनोन्तराभ्युपगमेऽनवस्थापत्तेः । देहेन्द्रियादिसापेक्ष-त्वेनाऽन्योन्याश्रयचक्रकाद्यापत्तेः । ततोऽपि जन्मान्तरीयात्कर्मणोऽव्यवस्थो-पपादनव्यवस्थानात्, अन्धपरम्परया ह्यनिश्चयन्यायापत्तेश्च । एतेनाहमिदं कर्म कृत्वाऽस्य फलं प्राप्स्यामीत्यभिसन्ध्यादेरप्यदृष्टादिव्यवस्थापकत्वं नि-रस्तम् । अभिसन्ध्यादेरप्यात्ममनोयोगव्यवस्थामन्तरेण व्यवस्थाऽसिद्धेः । तथा च भगवतो बादरायणस्य सूत्रं, "अदृष्टाऽनियमादभिसन्ध्यादिष्वपि चैवम्" इति ॥ नन्वेकस्मिन्देहेऽनेकात्मनामनुप्रवेशेऽपि तत्तदात्मसमवेतसु-खादौ तत्तदात्मजन्यतावच्छेदकमवान्तरवैजात्यं स्वीकृत्य तादृशविजातीय-भोगे तत्तद्देहव्यक्तिं विशिष्य हेतुत्वं वक्ष्यामि । आत्मान्तरजन्यतावच्छेदकवै-जात्याऽवच्छिन्ने च तद्देहस्याऽहेतुत्वाद्देहान्तरस्यैव च हेतुत्वान्नाऽव्यवस्थे-त्याशङ्क्याह—नानात्वमिति॥ यदि एवं तनूपाधिभिर्देहलक्षणैरवच्छेदकोपा-धिभिर्व्यवस्थां वदसि, तर्हि नानात्वम्=आत्मनानात्वं, निष्प्रमाणं=प्रमाण-शून्यं, तत्साधकत्वेनाऽभिमतस्य सुखादिवैचित्र्यस्याऽन्यत एवोपपादनात् । अभ्युपगतेऽप्यात्मभेदे वैचित्र्याऽनिर्वाहादित्यर्थः । "द्रोणो बृहस्पतेरंशः, युधिष्ठिरो विदुरश्च यमस्य" इति महाभारतादौ प्रसिद्धम् । तत्र द्रोणाद्या-त्मनां मुख्यसांशत्वाऽसंभवाद्देहाद्युपाधिभेदादेवांऽशव्यवहार उपपादनीयः । तत्र चैकात्म्येऽपि देहभेदमात्रादेव भोगसाङ्कर्यप्रत्यभिज्ञादेरभावस्योपास्यो-पासकाऽनुग्राह्याऽनुग्राहकभावादेश्च स्फुटतरं प्रसिद्धत्वात् । तन्न्यायेनेतर-

अपि विनाऽप्यात्मभेदं वैचित्र्योपपत्तेरिति भावः। नचैकात्म्ये पारलौकिकदेहस्य परदेहाविशेषादेतद्देहार्जितादृष्टस्य तत्रभोगाभ्युपगमे परदेहेऽपि तदापत्तिरिति वाच्यम्॥ "तदेव सक्तस्सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य", "कस्मिन्न्वहमुत्क्रान्ते, उत्क्रान्तोभविष्यामि, कस्मिन्वाप्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत" इत्यादिश्रुतिसिद्धलिङ्गोपाध्यवच्छिन्नप्रमातुरेवेह परत्र च कर्तृत्वभोक्तृत्वाद्यभ्युपगमेन तद्भेदादेव परदेहे भोगाऽनापत्तेः। वास्तवैकात्मनः क्वापि भोगानभ्युपगमात्। प्रत्युत तवैव मतेऽदृष्टस्याऽऽत्मसु व्याप्यवृत्तित्वे सर्वदेहेषु सर्वादृष्टसंनिधानात्सर्वेषां भोगापत्तिः। अव्याप्यवृत्तित्वे तु लिङ्गदेहानभ्युपगमेन स्थूलदेहातिरिक्ततदवच्छेदकाऽपरिचयात्तन्नाशेऽदृष्टनाशापत्तेः पारलौकिकदेहासिद्धिः, तदवच्छेदेनादृष्टाभावाच्च तत्र भोगासिद्धिप्रसङ्गश्च दुर्वारः। एतेनोत्क्रान्त्यादयो मनस एवेत्यपि निरस्तम्। तदुत्क्रान्तावपि परलोके भोगाऽसिद्धेः॥ ननु भोगवैचित्र्यादात्मभेदो न सिद्ध्यतु, नित्यद्रव्यभेदकैर्विशेषैस्स सेत्स्यतीत्याशङ्क्याह—सिद्धे इति। एको विशेषस्स्वाश्रयं भिन्द्यादनेको वा। आद्ये आकाशादेरपि नानात्वापत्तिः। द्वितीये स्वाश्रयभेदमन्तरेण तद्भेदकल्पकान्तराभावादात्मभेदसिद्धौ तेष्वनेकविशेषकल्पना अनेकविशेषकल्पनाधीनश्चाऽऽत्मभेद इत्यन्योन्याश्रयादात्मभेदे सिद्धेऽसिद्धेवा विशेषकल्पना निष्फलेत्यर्थः॥ ३९॥

यत्तूक्तं, तस्याणुरूपमनस्संयोगाद्बुद्ध्यादयो गुणा उत्पद्यन्ते, गुणाश्रयत्वाच्चाऽसौ द्रव्यमित्यादि, तन्निराचिकीर्षुराह—

मू०॥ किञ्चात्मन्यनवयवे न संप्रयोग
स्संभाव्यो निरवयवस्य मानसस्य।
न द्रव्यं निरवयवं न शाश्वतं वा
तद्धर्मो नच धिषणा यतो जडा स्यात्॥ ४०॥

किञ्चेति। किञ्चेत्युक्तदोषैरस्य समुच्चयार्थम्। अनवयवे=अवयवशून्ये त्वदभिमतात्मनि निरवयवस्य=तथाविधस्य मानसस्य=मनसः, संप्रयोगः=संयोगो न संभाव्यः=न संभावयितुं शक्यः, येन ज्ञानादयो विशेषगुणा उत्पद्येरन् आरम्भवादिनिरासोक्तदोषग्रासादित्यर्थः। उक्तं चेत्थमेव श्रुतिसारसमुद्धरणे—

मनसा पुरुषः पुरुषेण मनो नभसा मुसलं मुसलेन नभः।
नहि योगवियोगमुपैति कुतोऽवयवित्वनिराकरणादमुतः इति।

आत्मनो द्रव्यत्वे सावयवत्वाऽवर्जनादनित्यत्वप्रसङ्ग इत्यभिप्रेत्याह—न द्रव्यमिति। लिङ्गविपरिणामेन संभाव्यमित्यनुकृष्यते। नतावत्किञ्चिद्द्रव्यं निरवयवं संभवति। परमाणुनिरासात्। आकाशस्याप्यूर्ध्वाधः प्रभृति प्रदेशसत्त्वेन सावयवत्वस्यानुभवसिद्धत्वात्। अन्यथैकस्मिन्विहङ्गे उत्पतिते आकाशस्य तेनावच्छिन्नत्वेन विहङ्गान्तरस्योत्पिपतिषोर्निरवकाशता स्यात्। अनवच्छिन्नप्रदेशे उत्पतिष्यतीति चेत् सिद्धमवच्छिन्नाऽनवच्छिन्नाऽनेकप्रदेशवत आकाशस्य सावयवत्वम्। यदि तु वस्तुस्वभाववैचित्र्यादेकावच्छेदेऽप्यपरस्य समावेश उच्येत, तर्हि प्रस्थोदरे खारीशतस्यापि समावेशस्स्यात्। प्रस्थावयवानां तत्प्रतिबन्धकत्वे सावच्छिन्नेष्वसमावेशनियमे वा कल्प्यमाने,प्रस्थोदरे द्वितीयतण्डुलानामसमावेशप्रसङ्गः। उदयादिप्रदेशावच्छिन्नव्योमप्रदेशातिरिक्तमहादिशोऽनभ्युपगमात्। अविद्यानित्यसम्बन्धस्यैव महाकालत्वाभ्युपगमात्, "योऽणिष्ठस्तन्मनः", "अन्नमयं हि सोम्य मनः" इत्यादिश्रुत्या मनसःअन्नविकारत्वोक्तेश्च न निरवयवद्रव्यमिकिरिति भावः। अत एव द्रव्यं शाश्वतं नित्यमपि न संभाव्यमित्यर्थः। वाशब्दस्समुच्चये। आकाशादेरुत्पत्तेः "आत्मन आकाशस्संभूतः" इत्यादिश्रुतिसिद्धत्वेन नित्यद्रव्याऽसिद्धेः। तथाचाऽऽत्मनो द्रव्यत्वे सावयवत्वा नित्यत्वे दुर्वारे इत्यर्थः। एवं चैतन्यस्याऽऽत्मगुणत्वमप्ययुक्तम्। समवायनिरासेन गुणगुणिनोस्तादात्म्यातिरिक्तसम्बन्धाऽयोगेन तमःप्रकाशवद्विरुद्धस्वभावयोश्चिज्जडयोरध्यासमन्तरेण तादात्म्याऽयोगाद्गुणत्वजातौ मानाभावाचेत्यभिप्रेत्याह—तद्धर्म इति॥ चिद्गुणः=चैतन्यं तस्य द्रव्यस्य धर्मो न भवति। चिज्जडयोस्सम्बन्धाऽनिरूपणादित्यर्थः। तद्गुणोनेति वक्तव्ये तद्धर्मो नेत्युक्तिः पराभिमतद्रव्यत्वगुणत्वसत्त्वादिजातिपरिभाषाया द्रव्यगुणेयत्तापरिगणनस्य च निष्प्रमाणत्वमिति सूचनाय। अस्तु वा गुणत्वजातिः, तथापि तस्याश्चैतन्यवृत्तित्वं दुर्ग्रहम्। जडत्वे तादात्म्याऽयोगाच्चिद्रूपत्वे भेदकाऽभावादिति सूचनार्थश्चकारः। तथाच प्रयोगः=चैतन्यं न जडधर्मः, तद्विरुद्धस्वभावत्वात्। यो यद्विरुद्धस्वभावो नासौ तद्धर्मः। यथा भास्वरत्वं तमसः औष्ण्यं वा जलस्येति। अत्रानुकूलं विपक्षे च बाधकं तर्कमाह—यत इति। यतो यस्मात्कारणाच्चिद्रूपिणः जडधर्मश्चेद्रूपादिवज्जडेव स्यात्। जडधर्माणां क्वचिदपि चित्त्वाऽदर्शनात्। तथाच स्वरूपव्याघात इति भावः॥ ४०॥

किञ्च आत्मनो जडत्वे सुप्तोत्थितस्य, सौषुप्ताऽज्ञानसुखसुप्त्यात्मनां "सुखमहमस्वाप्सं न किञ्चिदवेदिषम्" इति सर्वानुभवसिद्धं प्रतिसन्धानं न स्यात्। तत्र त्वया जन्यज्ञानसामान्याऽभावाऽभ्युपगमात्। एवं जागरादौ धारावाहिकज्ञानाऽविच्छेदप्रतिसन्धानं च न स्यादित्याह—

मू०॥ अज्ञानं स्वमथ सुखं सुषुप्त्यबुद्धं
बुद्धस्त्वं स्मरसि कथं स्वतो जडात्मा।
विज्ञानान्ययमयमित्यनेकसंख्या
न्यद्राक्षं चिरमिति केन वेत्स्यसाक्षी॥ ४१॥

अज्ञानमिति। हेतार्किक! आत्मनो जन्यज्ञानसमवायित्वाऽभ्युपगमेऽपि स्वतः=स्वरूपतो जडः=अचिद्रूप आत्मा यस्य तथोक्तस्त्वं बुद्धः=सुषुप्तेः प्रतिबुद्धः सन्सुषुप्त्यबुद्धं=त्वद्रीत्या सुषुप्तावननुभूतमज्ञानं तथा तदाश्रयं स्वम्=आत्मानम्। अथेति समुच्चये। सुखं=स्वापं चेत्यर्थः। कथं स्मरसि, येन सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्यभिलपसि। अस्मृतस्याऽतीतस्याऽभिलापाऽयोगादननुभूतस्य च स्मरणायोगादित्यर्थः। परमते सुषुप्तिसिद्धिमभ्युपगम्य चेदमुक्तम्। वस्तुतस्तु परेषां सैव न सिद्ध्यति। तथाह्यनुव्यवसीयमानज्ञानानामपि बहुशः परैरभ्युपगतत्वेन यदि सुषुप्तौ ज्ञानं स्यात्तदोपलभ्यं स्यादिति तर्कानुदयात्। तर्कितप्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपयोग्यताविशिष्टाऽनुपलब्धिलक्षणसहकार्यभावेन मनसा ज्ञानसामान्याऽभावग्रहणाऽयोगात्, तद्ग्रहे ज्ञानसामान्याऽभावलक्षणत्वदभिमतसुषुप्ति (ग्रह) व्याघातात्, ज्ञानशून्यताया अग्रहे लिङ्गे तत्सामानाधिकरण्यस्यापि दुर्ग्रहत्वेनाऽनुमानस्याप्यनुदयात्, उपमानलौकिकशब्दयोस्तदुभयमूलकत्वेन तदविषये प्रवृत्त्ययोगाच्छ्रुतेश्च स्वयंज्योतिरात्मपरत्वेन प्रत्युत बाधिकायास्तत्साधकत्वस्य दूरापास्तत्वादिति। यतो जडात्मा। अत एवाऽसाक्षी=साक्षादवस्थात्रयस्य द्रष्टा स्वयमुदासीनः साक्षी "साक्षाद्द्रष्टरि संज्ञायाम्" इति इनिप्रत्ययः। न विद्यते साक्षी यस्य सतथोक्तस्त्वम्। अयमयमिति=घटोऽयं घटोऽयमित्येवमाकाराणि धारावाहिकान्यनेकसंख्यानि विज्ञानानि केन=ज्ञानेन वेत्सि=विषयीकरोषि? येन चिरं=बहुकालममुं घटम् अद्राक्षं=पश्यन्नेवासमित्यभिलपसि? न तावदनुव्यवसायेन, पूर्वपूर्वज्ञानकाले उत्तरोत्तरज्ञानानां तत्पौर्वापर्याऽविच्छेदकालानां चाऽसंनिधानादुत्तरोत्तरकाले पूर्वेषां नाशादेकेनाऽनुव्यवसायेन सर्वाऽवगाहनाऽयोगा-

त्। प्रत्येकमनुव्यवसायकल्पनेऽपि घटमात्रविषयकज्ञानधारायाविच्छेदापत्तेः। एकैकेन तत्तत्पौर्वापर्याविच्छेदकालानामवगाहनाऽसंभवाच्च। सर्वतद्गोचरैकसंस्कारे क्रमभावात्सकलतद्गोचरैकस्मृत्यसंभवापत्तेः। प्रत्येकगोचरसंस्कारैरेकस्मृतिजननोक्तावपि पौर्वापर्याऽविच्छेदयोरस्मृत्ययोगाच्च। नचाऽस्मृतमभिलपितुं शक्यम्। तस्मात्सौषुप्ताऽज्ञानसुखादिसाक्षी धारावाहिकज्ञानसाक्षी च नित्यचिद्रूप आत्मा बलादभ्युपेय इति सर्वतो दिग्विजयः॥ ४१॥

॥ इति प्रतिकूलवादिमतनिरासः॥

—•••—

इत्थं श्रुतियुक्तिकदम्बैस्सर्वोत्कर्षेण चार्वाकादिनस्त्यमनात्मत्वमापाद्य श्रौतं स्वाभिमतं प्रत्यगात्मतत्त्वं सुबोधयिषुर्देहेन्द्रियप्राणमनोबुद्धिप्रत्याख्याने परिशिष्टस्वसंभावनाकातरान्मन्दमतीन् प्रत्यनुपदसूचितसुषुप्त्यादिसाक्षिण इच्छादिद्रष्टुरस्यात्मनस्सर्वानुभवसिद्धस्य परिशेषप्रदर्शनेनाऽऽश्वासयंस्तस्य नित्यशुद्धसच्चिदानन्दात्मकत्वं दर्शयति—

मू० ॥ इच्छादेरुदयविनाशसन्ततीना
मक्षाणामसुमनसां धियश्च तस्मात्।
द्रष्टाऽन्योऽस्त्यविपरिलुप्तदृक्सतत्त्वो
निस्सङ्गो विहरति यः पुरत्रयेऽपि॥ ४२॥

इच्छादेरिति। तस्मात्पराभिमतानामात्मत्वासंभवात्, अन्यः=तद्विलक्षणः आत्मा अस्ति=न नास्ति तस्याऽप्रसिद्धिवारणायाह—इच्छादेरित्यादिना—इच्छा=कामः। आदिशब्देन श्रुतिप्रसिद्धास्संकल्पविचिकित्सादयः क्रोधलोभादयश्च योग्यान्तःकरणधर्मा गृह्यन्ते। तेषामुदयः=जन्म विनाशः=ध्वंसः, सन्ततिः=धारा एषां द्रष्टा='इदानीमिच्छामि, इदानीं नेच्छामि, एतावन्तं कालमिच्छन्नेवासम्' इति स्वरूपचैतन्येन भासयिता। तथाऽक्षाणाम्=इन्द्रियाणाम्, असुमनसाम् असवः=प्राणाः मनः=सङ्कल्पविकल्पकमन्तःकरणं तेषामित्यर्थः। धियः=बुद्धेरध्यवसायात्मिकायाः। चकारस्स्मरणाभिमानात्मकयोश्चित्ताहङ्कारयोस्सङ्ग्रहार्थः। 'पश्यामि, वदामि, जीवामि, संकल्पयामि, अध्यवस्यामि, स्मरामि, अभिमन्ये' इति तत्तद्धर्मैस्सह तेषामपि द्रष्टा=भासक इत्यर्थः॥ नन्वपरोक्षज्ञानस्य विषय विनाशानन्तरमव-

स्थानाऽसंभवाद्धटादिनाशेतदीयचाक्षुषनाशवदिच्छादिनाशेतत्साक्षिणोऽपि नाशस्स्यात्। अन्यथाऽनुभवनाशमन्तरेण संस्कारायोगात्कालान्तरे स्मृत्ययोगाच्चेत्याशङ्क्याह—अविपरिलुप्तदृक्सतत्त्व इति॥ विपरिलोपो विपरिलुप्तं नपुंसके भावेक्तः। विनाश इत्यर्थः। उत्पत्तेरप्युपलक्षणमेतत्। तदुभयशून्या या दृक्चैतन्यं सैव सतत्त्वं=यथार्थस्वरूपं यस्य स तथोक्तः। "तत्त्वसतत्त्वशब्दौ पर्यायावबाधितार्थवचनौ" अयंभावः—घटादिचाक्षुषवृत्तेः कुल्याद्वारा केदारप्रविष्टजलस्य केदारसम्बन्धात्तदाकारतावत् चक्षुर्द्वारा बहिर्निस्सृतान्तःकरणस्य घटादिसम्बन्धनिमित्तकघटाद्याकारपरिणामरूपत्वात्केदारभङ्गे जलस्य तदाकारता विनाशवद्धटादिनाशे विनाशो युक्तो नतु साक्षिणः। तस्य निर्विकारत्वान्निराकारत्वाच्च। विषयविनाशेन विषयनिष्ठाऽऽध्यासिकचित्सम्बन्धरूपविषयत्वाऽपायेऽपि चितोऽनपायात्, तादृशाविषयितानाशाद्विषयितोपहितरूपनाशाद्वा संस्कारस्मृत्योरुपपत्तेः॥ वस्तुतस्तु तद्विषयकानुभवस्तद्विषयकसंस्कारे हेतुर्नत्वनुभवनाशोऽपि, मानाभावात्प्रयोजनाभावाच्चेति नित्येनापि साक्षिणा संस्काराधाने न कश्चिद्दोषः॥ न च साक्षिरूपानुभवस्याऽन्तःकरणधर्मत्वाभावात्तेनान्तःकरणे संस्काराऽऽधानाऽसंभवः। अन्तःकरणे तदनुभवतादात्म्यस्यैव तद्गोचरसंस्कारनियामकत्वेन धर्मत्वस्याऽप्रयोजकत्वात्। 'अहमिच्छाम्यनुभवामि' इति प्रत्ययानुरोधेनेच्छादिप्रतिभासकालिकतत्साक्षिण्यन्तः करणधर्मत्वाऽध्यासकल्पनासंभवाच्चेति। एवमिच्छादेश्शुद्धसाक्षिभास्यत्वसंभवेऽपितद्गोचराऽन्तःकरणवृत्तिमभ्युपगच्छतां केषां चिद्वृद्धानां कोऽभिप्राय इति चेत्। अयमभिप्रायः—संस्कारो नाम न वस्त्वन्तरम्। किन्त्वनुभवात्मकवृत्तेरेव तिरोभूतायास्सूक्ष्मावस्था। सा च कालान्तरे उद्बोधकसमवधानात्पूर्ववदाविर्भवन्ती विषयाऽसंनिधानात्स्मृतिरित्युच्यते। संनिकृष्टे च विषये तात्कालिकयोग्यधर्मान्तरदेशकालादिगोचरवृत्तिसंवलनेनाविर्भवन्ती प्रत्यभिज्ञेत्युच्यते। तथा च साक्षिणस्तिरोभावाऽसंभवात् संस्काराय वृत्तिरावश्यकीति॥ इत्थमेव सुप्तोत्थितस्य सौषुप्तसुखादिस्मृत्युपपादनाय सुखादिगोचराऽविद्यावृत्तित्रयमङ्गीचक्रुः। यथाहुः,

" अन्तर्मुखो य आनन्द मयो ब्रह्मसुखं तदा।
भुङ्क्ते चिद्बिम्बरक्ताभिरज्ञानोत्पन्नवृत्तिभिः" इति॥

स्वामिनस्तु—वृत्तित्रयकल्पने प्रयोजनाभावात् 'सुखमहमस्वाप्सं न किञ्चिदवेदिषम्' इति विशिष्टस्मृत्यभिलापाच्च, त्रितयविशिष्टात्मविषया, सुखविशिष्टस्वापाज्ञानोभयविशिष्टात्मविषया वैकैवाऽविद्यावृत्तिर्युक्तेत्यखण्डार्थ-

वादे निपुणतरमुपपादयां चक्रुः। तेषां मतेऽपि साक्षिण एव वृत्त्युपधानेन सुखादिद्रष्टृत्वाद्युपाध्यपगमेऽपि भासकस्वरूपानपायादिच्छादिद्रष्टृत्वविपरिलुप्तदृक्सततरेति व्याख्येयम्। नच साक्षिणोऽपि नाशोऽस्त्विति शङ्क्यम्। तन्नाशस्य ससाक्षिकत्वे साक्ष्यन्तरकल्पने तस्यापि तादृक्त्वस्यादनवस्थानादाद्यस्यैवावस्थानात्॥ निस्साक्षिकत्वे तु साधकाभावादेवसाक्षिविनाशासिद्धेः। प्रत्युत "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते अविनाशित्वात् अविनाशी वा अरेऽयमात्मा" इत्यादयः परश्शतं श्रुतयस्तस्य नित्यतां गमयन्तीति भावः॥ किञ्च विनाशकसामग्रीसम्बन्धे विनाशप्रसक्तिस्स्यात्। स एव तावदसङ्गे साक्षिणि दुर्घट इत्यभिप्रेत्याह—निस्सङ्ग इति॥ स्वसमसत्ताकवस्त्वन्तरसम्बन्धिभिन्न इत्यर्थः॥ नन्ववस्थात्रयसम्बन्धस्य सर्वानुभवसिद्धत्वात्कथमस्याऽसङ्गत्वमिति शङ्कां परिजिहीर्षुर्यथा स्वप्नसुषुप्तिसाक्षिणो जागरे तयोरपायेऽपि नापायः, एवं जागृदिच्छाद्यपायेऽपि न तत्साक्ष्यपाय इति सूचयन्नवस्थात्रयविहारेणैवाऽसङ्गत्वं समर्थयते—विहरतीति। यः प्रत्यगात्मा वैहारिक पुरत्रय सदृशेऽवस्थात्रये महाराज इव विहरति=क्रीडति पर्यायेण पश्यन्विहरन्निव लक्ष्यत इत्यर्थः। विहरणफलस्याऽऽत्माऽसंस्पर्श द्योतनायाऽकर्तृगामि फलस्य द्योतकं * परस्मैपदम्। तथा च श्रुतिः "पुरत्रये क्रीडति यस्तु जीवस्ततस्तु जातं सकलं विचित्रम्" इति।

अयं भावः,—यद्यात्मन्यवस्थात्रयं यौगपद्येनाऽनुवर्तेत दहन पचन प्रकाशन शक्तय इव वह्नौ, यद्वा एकावस्थानुभूताः कतिपया वा धर्मा अवस्थान्तरेऽनुभूयेरन्, यथा बाल्याद्यवस्थाऽनुभूताः रूप गोत्र जाति प्रभृतयश्शरीरे यौवनेऽप्यनुभूयन्ते, तदा भवेदात्मा तत्सङ्गी। न त्वेवं। स्वप्नदृश्यमात्रस्य जागरे बाधाज्जागृद्दृश्यमात्रस्य च स्वप्ने तिरोधानात्तदुभय दृश्यस्य सुषुप्तौ विलयात्सुषुप्तेश्च तयोरप्रतिभासात्। द्रष्टैव हि केवलोऽवस्थात्रयेऽनुवर्तमानः प्रत्यभिज्ञयैकोऽनुभूयते। तदियमनुवर्तमानैकवस्तुनिपर्यायेणप्रतिभासमानस्याऽनेकस्यैकैककालेऽपरस्याऽत्यान्ताऽननुवृत्ति

* "स्वरित ञितः कर्त्रभिप्राये क्रियाफले" स्वरितश्च ञ् च स्वरित ञौ, तावितौ यस्य धातो स्स स्वरितञित्, तस्मात्स्वरितञितः। द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येक मभिसम्बध्यत इति न्यायेन 'इत्' इत्येतस्य प्रत्येकाऽभिसम्बन्धः॥ तथाचायमर्थः—स्वरितेतो ञितश्च धातो रात्मनेपदं स्या त्कर्तृगामिनि क्रियाफले। यथा स्वर्गकामो यजेते"ति। यदि स्वर्गफलं क्रियायाः कर्तृगामि तदाऽऽत्मनेपदं, यदियजमानगामि तदा परस्मैपदं, तथाच विहरतीति परस्मैपदेन परमात्मनोऽसङ्गत्वं बोध्यत इति तत्त्वम्॥

मन्दान्धकारे नदी वप्राऽवलंबि जरल्लतायां क्रमारोपित वक्रकाष्ठतरुमूल भूप्रदर भुजगादीनामिवाऽवस्थात्रयस्य मिथ्यात्वमवगमयतीत्यध्यस्तैरधिष्ठानाऽसंस्पर्शादसङ्गत्व सिद्धिरिति। "स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः" इति श्रुतिरप्यसङ्गत्वादननुवृत्तिं दर्शयन्त्यमुमेवार्थं द्रढयति। "असङ्गो न हि सज्जत" इति च श्रुत्यन्तरम्। तथाचावस्थात्रयाऽधिष्ठानत्वा द्बाधकान्तराऽ परिशेषाच्चाऽऽत्मनस्सत्यत्वं सिद्धम् ॥ ४२ ॥

नन्वस्तु तर्हि नित्यज्ञानवानेव सः, एवं च "द्रष्टुर्दृष्टेः" इति त्वदुदाहृत श्रुतिः "द्रष्टा श्रोता मन्ता" इत्यादि श्रुतिषु च ज्ञानाश्रयत्व बोधक तृजाद्यन्त शब्दाश्च निरुपचरितार्था भविष्यन्ती त्यपरमनुकूल मित्याशङ्क्याऽऽत्मन स्स्वयंज्योति स्संविद्रूपत्वं विशदयितुं ज्योति र्ब्राह्मणार्थं सङ्गृह्य दर्शयति—

मू०॥ संशान्ते रवि शशि वह्नि वाक्प्रकाशे
निर्वाणे करणगणे निरस्तसङ्गः।
स्वज्योतिः प्रकटित वासनामयार्थ
श्चिद्धातु श्श्रुतिभिरुदीरितोऽन्तरात्मा ॥ ४३ ॥

संशान्ते इति। रविः सूर्यः, शशी=चन्द्रः, वह्निः=अग्निः, वाक्=शब्दः, एषां प्रकाशे सम्यक् शान्ते सति स्वप्नावस्थायामित्यर्थः। बृहदारण्यके, जनकस्य काम प्रश्नवरणेन वशीकृतं याज्ञवल्क्यं प्रत्याऽऽदावेव "याज्ञवल्क्य! किंज्योतिरेवायं पुरुषः" इति सर्वव्यवहार निर्वाहक ज्योतिर्विषयक प्रश्नमुपन्यस्य प्रवृत्ते संवादे याज्ञवल्क्येन प्रश्नपरम्परानुसारेणादित्यादिषूपन्यस्तेष्वन्ते "अस्तमित आदित्ये याज्ञवल्क्य", "चन्द्रमस्यस्तमिते" "शान्तेऽग्नौ" "शान्तायां वाचि किं ज्योतिरेवायं पुरुषइति" प्रश्ने "आत्मैवास्य ज्योति र्भवत्यात्मनैवाऽयं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येति" इति प्रत्यगात्मन एव सर्वाऽवभासक स्वयंज्योतिष्ट्वं व्यवस्थापितम्। श्रुतौ पल्ययते=वनादि प्रतिगच्छति। विपल्येति=परावृत्त्याऽऽयातीत्यर्थः। आद्ये "उपसर्गस्याऽयतौ" इति, द्वितीये तु छान्दसत्वाल्लत्वम्। अस्याश्च श्रुतेरयमभिप्रायः—जागरे हि सूर्यचन्द्राग्नयः पूर्वपूर्वास्तमयेऽप्युत्तरोत्तरकाले सर्वप्राणिना मर्थप्रकाशाधीन व्यवहारहेतवः प्रसिद्धाः। तथा गाढान्धकारे दीपालोकाभावेऽपि संभाषण करतालादि शब्दैः पुरुष

विशेष दिगादि परिचये गमनादि व्यवहार दर्शना द्वागपि तत्र ज्योतिरिति जागृद्व्यवहारस्य ज्योतिरन्तर सङ्कीर्णत्वादात्मन स्स्वयं ज्योतिष्ट्वं विद्यमानमपि न विविच्य दर्शयितुं शक्यमिति बाह्य सर्वज्योतिरुपरमोपलक्षिते स्वप्ने तस्य विविच्य प्रदर्शनं, स्वाप्नव्यवहारस्यार्थप्रकाशाधीनत्वेनाऽऽत्मनस्स्वयंज्योतिष्ट्वाभावेऽसिद्धेरिति। तत्र सूर्याद्यालोकोपरमावस्थाप्रदर्शनं न्यायसाम्यादिन्द्रियात्मक ज्योतिषामप्युपरमस्योपलक्षणमित्यभिप्रेत्याह— निर्वाणे इति। करणगणे=इन्द्रियसमूहे निर्वाणे=उपशान्ते सतीत्यर्थः। "निर्वाणो वाते" इतिनिष्ठानत्वम्। एतेन कौशिक मार्जारादीनां रात्रौ ज्योतिर्निरपेक्षव्यवहारदर्शनान्न व्यवहारमात्रे ज्योतिरपेक्षानियम इति निरस्तम्॥ तद्व्यवहारस्यापि विलक्षणेन्द्रियज्योतिस्सापेक्षत्वात्॥ नन्वस्तु स्वाप्नार्थप्रकाशकमात्मज्योतिः, तस्य तु प्रकाशो ज्योतिरन्तरसापेक्षस्स्यात्। व्यवसायप्रकाशस्याऽनुव्यवसायसापेक्षत्ववदित्याशङ्क्याह—स्वज्योतिरिति॥ स्वयमेव ज्योतिस्स्वज्योतिः। स्वप्रकाशो ज्योतिरन्तरानपेक्ष इत्यर्थः। एवंहि सत्यनुव्यवसायकल्पनापि निष्फला, निष्प्रमाणा च। साक्षिणैव बुद्धिवृत्तीनां व्यवसायानां भानसंभवात्। अन्यथाऽनवस्थानात्॥ ननु स्वप्नो नाम जागरानुभूतार्थानां निद्रादोषप्रयुक्तत्वाकस्मृतिरेव। तस्याश्च तदानीन्तनविषयानपेक्षत्वाच्च तत्प्रकाशकज्योतिरपेक्षेत्याशङ्क्याह—प्रकटितेति। प्रकटिताः=जागरितवत्स्फुटं प्रकाशिताः वासनामयाः=जागृद्वासनावासितमनःपरिणामरूपा अर्थाः=अनिर्वचनीयविषयाः येन सः तथोक्तः। जागृतीव स्वप्नेऽपि "घटादिकमनुभवामि" इतिप्रत्ययादिदन्त्वावभासस्य तत्तांशप्रमोषकल्पनेऽप्यनिर्वाहादननुभूतचरभाविजन्मभोग्यवस्तूनामपि कदाचित्स्वप्ने दर्शनादसंभावितदर्शनाच्च न स्मृतिरूपस्स्वप्न इत्यनिर्वचनीयविषयसिद्धौ तद्भासक आत्मा आवश्यक इति भावः॥ ननु व्यावहारिकमनःपरिणामस्य स्वाप्नप्रपञ्चस्य कथं प्रातिभासिकत्वं? व्यावहारिकमृदादिपरिणामघटादेस्तथात्वाऽदर्शनादिति चेन्न। मनसोऽपि प्रातिभासिकत्वाभ्युपगमात्। प्रतिभासलक्षणं-प्रमाणाविषयत्वे सत्यपरोक्षविषयत्वं हि प्रातिभासिकत्वम्। तच्च साक्षिमात्रवेद्ये मनस्यव्याहतम्। एवमविद्याया अपि प्रातिभासिकत्वमेव॥ नच तस्या व्यावहारिकप्रपञ्चोपादानत्वानुपपत्तिः। उपादानोपादेययोस्समसत्ताकत्वनियमस्यौत्सर्गिकत्वेनाऽसार्वत्रिकत्वात्। एवंच मनसो व्यावहारिकत्वेऽप्यक्षतिः॥ यत्तूक्तं, अस्तु नित्यज्ञानवानेव स इति। तत्राह—चिद्धातुरिति। चिन्मात्रस्वरूप इत्यर्थः। "आत्मैवास्य ज्योतिर्भवति" इति सावधारणश्रुतिविरोधाच्चिदतिरिक्तध-

स्यैशकल्पने प्रमाणप्रयोजनयोरभावाच्चेति भावः ॥ एतेन तृजादिप्रत्ययानां निरुपचरितार्थत्वप्रत्याशापि निरस्ता। नकेवलं ज्योतिर्ब्राह्मणानुरोधादेव स्वयंज्योतिष्ट्वं किन्तु "स एतेन प्राज्ञेनाऽऽत्मना" "सत्यं ज्ञानमनन्तं ब्रह्म" "तेभ्यो विलक्षणस्साक्षी चिन्मात्रोऽहं सदाशिवः" इत्याद्यनेकश्रुत्यनुसाराद्प्येवमेवेति स्थूणानिखननन्यायेनद्रढीकुर्वन्नाह—श्रुतिभिरिति। अन्तरात्मा=प्रत्यगात्मा उदीरितः=तात्पर्येण प्रतिपादितः। "क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत" "ज्योतिषामपि तज्ज्योतिः" इत्यादिस्मृतयोऽप्यत्राऽनुसन्धेयाः ॥ ४३ ॥

एवं जागरेऽपि बाह्यार्थप्रकाशकपरम्परावधित्वेन स्वप्रकाशनित्यचैतन्यैकरस आत्मा विविच्य प्रदर्शयितुं शक्य इत्यभिप्रेत्याह—

मू० ॥ बाह्यार्थान्करणगणेन तं च बुद्ध्या
बुद्धिं यः प्रथयति सन्ततं स्वभासा।
आत्माऽसाऽवनधिगतः पराग्भिरेभि-
र्विज्ञेयस्तनुभवनाऽऽन्तरप्रदीपः ॥ ४४ ॥

बाह्यार्थानिति। यः=परमात्मा, बहिर्भवा बाह्याः "बहिषष्टिलोपो यञ् च" इति यञ्। अर्थाः=रूपादयस्तान्, करणगणेन=इन्द्रियकलापेन प्रथयति=प्रख्यापयति प्रकाशयतीत्यर्थः। तं च=बहिरिन्द्रियकलापं बुद्ध्या=अन्तःकरणेन प्रथयति, बुद्धिसंवलितसाक्षिण्येव 'काणोऽहं बधिरोऽहं पश्यामि शृणोमि' इति काणत्वादिविशिष्टेन्द्रियतादात्म्याध्यासेन तेषां तत्संवलितसाक्षिभास्यत्वे बुद्धेर्द्वारत्वात्करणत्वं, तथा बुद्धिम्=अन्तःकरणं च स्वभासा=स्वरूपचैतन्येनैव तप्तायःपिण्डस्थवह्निरयःपिण्डमिव साक्षात्प्रथयति। अयंभावः—यथा नीलपीताद्यनेकप्रकारभिन्नस्य रूपस्य मधुराम्लाद्यनेकप्रकारभिन्नरसादेश्चैकरूपमेव चक्षुरादिभासकं, यथा च चक्षुरादिकरणानामप्ये करूपमेवान्तःकरणं भासकं, तथा तस्यापि मनसः कामसङ्कल्पाद्यनेकवृत्तिभेदाद्भिन्नस्यैकरूप एव साक्षी भासक उचितः। विभिन्नरूपभास्यगोचरैकरूपभासकपरम्परावधेस्तस्य नित्यैकरूपस्वप्रकाशत्वपर्यवसानादिति। यथाहुः—"रूपं दृश्यं, लोचनं दृग्दृश्यं, द्रष्टृ मानसं, दृश्याधीवृत्तयः साक्षी दृगेव नतु दृश्यते" इति। इदं च स्थूलदृशामविमृश्य विवेके तु चक्षुरादीनां द्वारतामात्रेणाऽर्थप्रकाशकत्वोपचारः। वस्तुतस्साक्ष्येव तत्तद्द्वारा सर्वप्रकाशक इति सूचनाय तेषां तृतीयया निर्देशः॥ ननु बाह्या

शेषस्य बुद्धिद्वारा साक्षिसम्बन्धः, बुद्धेस्तु साक्षादेव स इति कथं ज्ञायते? तत्राह—सन्ततमिति। सर्वदेत्यर्थः। अयंभावः—बाह्यार्थस्य संनिधाने चक्षुरादिसंनिकर्षे चाऽन्तःकरणस्यावधानाऽनवधानाभ्यां कादाचित्क एव प्रतिभासः। "अन्यत्र मना अभूवं नादर्शमन्यत्र मना अभूवं नाश्रौषम्" इति श्रुतेः। तथाऽनुभवाच्च। अन्तःकरणस्य तु सर्वदा जागृत्स्वप्नयोरहमहमिति स्फुरणात्, तद्धर्मकामसङ्कल्पादीनामुत्पत्तिसमकालमेव स्फुरणाच्च साक्षादेव साक्षिसम्बन्धो निश्चीयत इति। असङ्गलक्षणः साक्षी आत्मा विज्ञेय इति सम्बन्धः। ननु यदि साक्ष्यस्ति तर्हि सर्वैरेव बाह्यार्थवद्विविच्य कुतो न गृह्यते। न च ग्राहकाभावः। साक्षात्तत्सम्बन्धस्यान्तःकरणस्य चक्षुरादीनां च सत्त्वादित्यत आह—अनधिगत इति॥ पराग्भिरिति। परं स्वाधिष्ठानरूपं प्रत्येवाञ्चद्भिः प्रवर्तमानैरिति वा, परावर्तितमविद्याशक्त्या तात्त्विकस्वरूपाच्च जगद्रूपमापादितमेव वस्तु अञ्चद्भिः=अभिव्यञ्जयद्भिरिति वा बहिर्मुखस्वभावैरज्ञानिभिर्बाह्यवस्तुमात्रगोचरैरित्यर्थः। एभिः=बाह्याभ्यन्तरकरणैः, अनधिगत=कदाप्यविषयीकृतः। तथा च श्रुतिः,—"पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ्पश्यति नान्तरात्मन्" इति॥ ननु यदि मनसोऽप्यविषयस्तर्हि कथं शास्त्रेण बोध्यते, मनसोऽगोचरं प्रमाणाऽसङ्गादित्याशङ्क्याह—तन्विति। तनुः=शरीरं तदेव भोगतत्साधनाऽऽयतनत्वात् संहतत्वाच्च भवनं=गृहं तस्य अन्तरः=अन्तस्थः प्रदीप इव प्रकाशकत्वात्प्रकाशकान्तरनिरपेक्षत्वाच्च प्रदीपः। तथा च यथा अप्रकाशस्वभावगृहघटादेस्स्वसंनिधानमात्रेण प्रकाशनसमर्थस्य दीपस्य स्वप्रकाशे दीपान्तरापेक्षा नास्ति, एवं स्वसंनिधानादेव जडदेहेन्द्रियादिप्रकाशनसमर्थस्य साक्षिणोऽपि न ग्राहकापेक्षास्तीत्यर्थः। यथाहुः,—

"प्रमाता च प्रमाणं च प्रमेयो निश्चितिस्तथा।
यत्सांनिध्यात्प्रसिद्ध्यन्ति तत्सिद्धौ किमपेक्ष्यते"॥ इति।

शास्त्रेणतु भासमानस्यापि बुद्ध्यादिसंवलनाद्विवेक्तुमशक्यस्य विवेकमात्रं क्रियते कोऽस्मिन् ब्राह्मणसङ्घे देवदत्त इत्यविवेके यो मध्येऽस्ति स इति वाक्यवदिति भावः॥ ४४॥

इत्थं प्रतीचश्चिद्रूपत्वं सिद्धम्। तस्याऽऽनन्दरूपत्वं च व्यवस्थापयितुमाह—

मू०॥ प्रेयान्यस्सदन धनाऽऽत्मज प्रियादे-
र्यत्प्रेम्णा प्रियमिति मन्यते पराचः।

पारार्थ्याऽवधिरवधीरितैतरार्थ्यो
विज्ञेयस्स खलु सुखाऽवधिरन्तरात्मा ॥ ४९ ॥

प्रेयानय इति ॥ सदनं=गृहं, धनं=वित्तं, आत्मजाः=अपत्यानि, प्रिया=भार्या, एषु चानुकूलेषूत्तरोत्तरं प्रीत्याधिक्यं प्रसिद्धम्। येनाऽऽपद्युत्तरोत्तररक्षणाय पूर्वं पूर्वं जहाति। स्मरन्ति च—

"आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि" इति ॥

आदिशब्देन बाह्या मित्रभृत्यक्षेत्रादयः, आन्तरा देहेन्द्रियादयश्च गृह्यन्ते। एते हि लोके प्रियाः। आत्मा त्वेभ्योऽपि निरतिशयप्रीतिविषयत्वात्प्रेयान्। सदनादीनां बहुत्वेऽपि प्रत्येकमात्मना सह प्रीत्यतिशयपरीक्षणाभिप्रायाद्वा, एकीकृताऽन्यपदार्थाऽन्तर्भावाद्वा,* द्विवचनोपपदत्वादीयसुन्। प्रियस्थिरेत्यादिना पूर्वस्यप्रादेशे गुणः। देहेन्द्रियादावप्युत्तरोत्तरं प्रेमातिशयोऽनुमीयते। येन जीवनार्थिनस्सर्पदष्टाङ्गुलिं, राजदण्ड्याश्चक्षुरादीन्, परलोकहितार्थिनो युद्धादौ प्राणांश्च त्यजन्ति। उत्कृष्टसुखार्थिनां चाऽपकृष्टे जिहासा दृश्यते। आत्मनस्तु न कस्यापि महत्यपि कृच्छ्रे जिहासोत्पद्यते। प्रत्युत सर्वेषां "सर्वदैवाहं स्यां मा कदाचिन्माभूवम्" इति स्पृहैव दृश्यत इति तस्य निरतिशयाऽऽनन्दरूपत्वमिति भावः॥

ननु प्रीतिविषयत्वं न सुखत्वव्याप्यं, पुत्रादिष्वनैकान्त्यात्। निरतिशयप्रीतिविषयत्वमपि न क्वचित्प्रसिद्धम्। सुखमात्रस्य सातिशयत्वादात्मनश्च सुखत्वाऽसंप्रत्ययादित्याशङ्क्याह—यत्प्रेम्णेति। यस्मिन्=प्रत्यगात्मनि प्रेम्णा=निरुपाधिकप्रीत्यैव हेतुभूतया, पराचः=अनात्मभूतान्मनःप्राणेन्द्रियदेहभार्यापुत्रादीन्प्रत्येकं प्रियं=प्रीतिविषयीभूतं ममेति मन्यते, न तु वास्तवं प्रियत्वं तेष्वित्यर्थः। अयं भावः—न मनःप्राणादयः स्वतःप्रियाः, द्विषन्मनःप्राणादिषु प्रीत्यदर्शनात्। किन्तु स्वीयत्वेनैव। तथा च स्वात्मसम्बन्धौपाधिकमेव तेषां प्रियत्वम्। विवेके स्वात्मन एव पर्यवस्यति, जलादौ प्रतीयमानो गन्धः पृथिव्यामिव। तथाच श्रुतिः—"न वा अरे सर्वस्य कामाय

---

* "द्विवचनविभज्योपपदे तरबीयसुनौ" द्वयोरेकस्यातिशये विभक्तव्ये चोपपदे सुप्तिङन्तादेतौ स्तः। पूर्वयोरपवादः। अयमनयोरतिशयेन लघुर्लघुतरो लघीयान्। "प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः" प्रियादीनां क्रमात्प्रादयस्स्युरिष्ठादिषु। प्रेष्ठः। स्थेष्ठः। स्फेष्ठः।

सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति" इति। एवं च निरुपाधिप्रीतिविषयत्वमेव हेतुः, तस्य च न व्यभिचार इति भावः॥ ननु वैषयिकसुखेऽप्येवं निरुपाधिकप्रेमास्पदत्वम्, आत्मनि प्रीतिरपि भावितत्सम्बन्धप्रत्याशयैवेति किं न स्यात्। तत्राह—पारार्थ्याऽवधिरिति ॥ अयंभावः— यदर्थं यदिष्यते तस्य तदपेक्षयाऽऽधिक्यं, यथा धनाद्यपेक्षया पुत्रादेः, उपकारकप्रीतिरखिला चोपकार्यप्रीत्यौपाधिकी, सर्वं च साधनसाध्यं सुखसाधनार्थमेवेष्यत इति तस्यैव पारार्थ्यपरम्परापरमावधित्वं निरुपाधिकप्रीतिविषयत्वं, निरतिशयसुखरूपत्वं च, न सुखलवैरित्यर्थः॥ यत्तु भाविसुखलवार्थमेवाऽऽत्मप्रीतिरित्युक्तम्, तत्राह—अवधीरितपारार्थ्यं इति। अवधीरितं= निरस्तम्, पारार्थ्यम्=अन्यशेषत्वं येन स तथोक्तः। यद्यात्मा स्वाऽतिरिक्तसुखार्थस्स्यात्तर्हि सुखं मे स्यादिति न स्पृहयेत्। किन्तु सुखायाहं स्यामिति शत्रुसुखार्थमपि यतेत। तत्रापि स्वस्य शेषत्वसम्भवात्, नत्वेवं। तस्मादात्मार्थमेव सुखमिष्टमिति भावः॥ ननु स्वयमेव निरतिशयाऽऽनन्दरूपश्चेत्किमिति सुखलवान्स्पृहयति, तृप्तस्य बुभुक्षाऽदर्शनात्तत्राह—विक्षेप- इति ॥ लिप्सतीति हेतौ। अपरिच्छिन्नाऽऽनन्दरूपस्याप्यज्ञानाऽऽवृतत्वाद्दुःख-देहेन्द्रियादितादात्म्याध्यासाच्च युक्ता सुखलवस्पृहा। तृप्तस्यापि सुप्तस्य स्वप्ने बुभुक्षादर्शनात्। यतोऽस्य तथाविधस्वरूपाऽवाप्तिः प्रबोधाधीनेत्यर्थः। तथाच श्रुतिः—"स एनमविदितो न भुनक्ति" "यो वेद निहितं गुहायां सोऽश्नुते सर्वान्कामान्" इति। किं तर्हि सुखलवानां घटादीव पारार्थ्यादसुखत्वमेव, नेत्याह—सुखाम्बुधिरिति। सुखलवशीकरमहार्णवायित इत्यर्थः। तथाच सुखलवा अप्यात्मैव किन्त्वभिव्यञ्जकवृत्तितारतम्याऽध्यासात्तद्वीर्यवैशद्यतारतम्यभेदपारार्थ्यैस्तेषु तारतम्यभेदपारार्थ्यैर्विभावनमिति भावः॥ "एतस्यैवाऽऽनन्दस्याऽन्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः। नन्वस्यां श्रुतौ पारमेश्वरानन्दः प्रकृतो नास्मदात्माऽऽनन्दरूप इत्याशङ्क्याह—अन्तरात्मेति। सर्वान्तरः परमात्मैव निरतिशयानन्दरूपस्तत्र प्रतिपिपादयिषितो न तटस्थेश्वरः। "एषास्य परमा सम्पदेषाऽऽस्य परमागतिः। एषोऽस्य परम आनन्दः" इति सुषुप्तौ स्वस्वरूपसम्पन्नस्य प्रतीच एव प्रस्तुतत्वात्, अन्यसुखस्याऽन्यैरुपजीवनाऽसंभवाच्चेत्यर्थः ४५॥

इत्थं त्वंपदार्थः प्रत्यगात्मा देहेन्द्रियादिविवेकेनाऽसङ्गोऽपरिच्छिन्नसच्चिदानन्दरूपो निर्णीतः॥ ननु यद्यसङ्ग एवाऽऽत्मा तर्हि सर्वानुभवसिद्धाः कर्तृत्वभोक्तृत्वसुखदुःखादयः कस्य?। न तावद्देहस्य, तस्याचेतन-

त्वात्, मृतदेहेऽपि तत्प्रसङ्गात्। नापि प्राणस्य, सुषुप्तपुरुषदेहे प्राणस्य लब्धवृत्तित्वेऽपि तददर्शनात्। नापीन्द्रियाणाम्। एकैकव्यभिचारे स्वप्नेच तद्दर्शनात्। नाप्यन्तःकरणस्य। करणस्य कर्तृत्वासंभवात्। सर्वेषामचेतनत्वाच्च। नचान्तःकरणस्य चित्प्रतिबिम्बग्राहित्वाच्चिदवच्छेदकत्वाद्वा चित्संवलितरूपेण कर्तृत्वादिः, स्वतस्तु करणत्वमेवेति रूपभेदादविरोध इति युक्तम्। विवक्षितविवेके चित्येव कर्तृत्वादिपर्यवसानाऽऽपत्तेः। असङ्गस्याऽमूर्तस्य रूपादिहीनस्य च चिदात्मनोऽवच्छेदप्रतिबिम्बयोरयोगाच्चेत्याद्याशङ्कापनुत्तये आत्मनः कर्तृत्वभोक्तृत्वोपजीवकविधिनिषेधशास्त्रप्रामाण्यनिर्वाहाय चाऽध्यासमुपपादयिष्यन्नाह—

**मू०॥ शुद्धोऽसावहमिदमित्युपाधिधर्मा-**
**नध्यासादभिमनुते परस्परेण।**
**वृद्ध्यादीनिव सलिलप्रभेदधर्मा-**
**न्ब्रध्नेऽम्बुप्रतिफलिते मृषैव मोहात्॥ ४६॥**

शुद्ध इति। सत्यमुक्तलक्षणे आत्मनि वस्तुतः कर्तृत्वादि नोपपद्यते। नापि देहादौ। तथापि स्वतश्शुद्धः=निर्दोष एव, असौ=आत्मा, अन्तःकरणाद्युपाधेस्स्वस्य च परस्परेण=अन्योन्यतादात्म्येनान्योन्यधर्मविनिमयेन च, अध्यासात्=आरोपात्, उपाधिधर्मान्=उपाधयश्च धर्माश्च उपाधिधर्मास्तान् अहङ्कारप्राणेन्द्रियदेहान्, तद्धर्मकामसंकल्पबलदर्शनश्रवणमनुष्यत्ववयोऽवस्थाकर्तृत्वभोक्तृत्वादींश्चेत्यर्थः। अभिमनुते=यथाक्रममात्मत्वेनात्मधर्मत्वेन चाभिमन्यते।तथाऽऽत्मधर्मांश्चेतनत्व-प्रेमास्पदत्व-स्थायित्व-निर्दोषत्वादीनहङ्काराद्युपाधिधर्मत्वेनाऽभिमन्यत इत्यपि बोध्यम्॥ अहमिदमितीत्यध्यासाभिलापः। वस्तुत उपाध्यसंपृक्तस्याऽप्याध्यासिके तत्तादात्म्ये धर्मविनिमये च, "यथाह्ययं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा" इति श्रुतिसिद्धं दृष्टान्तमाह—वृद्ध्यादीनिवेति। सलिलानां=जलानां, प्रभिद्यन्त इति प्रभेदाः=घटशरावोदञ्चनकूपवाप्यादौ ऋजुवक्रत्वादिशालिनो विशेषाः, तेषां धर्मान्=वृद्धिह्रासचलनतरङ्गविच्छेदऋजुवक्रत्वनिम्नदेशस्थत्वादीन्धर्मांस्तदम्बुप्रतिफलिते = प्रतिबिम्बिते ब्रध्ने=सूर्ये तत्तादात्म्यमध्यस्य यथाभिमन्यते तद्वदित्यर्थः। तथा च भगवतो बादरायणस्य सूत्राणि, (१) "आभास एव च"। (२) "अत

(१) यथानेकजलप्रतिबिम्बितानां सूर्याभासानां मध्ये एकस्मिन्सूर्याभासे कंपमाने सूर्याभासान्तरं न कम्पते, एवमीश्वराभास एवायं जीव इति नैकस्मिञ्जीवे धर्मादिसम्बन्धिनि

एवचोपमा सूर्यकादिवत्"॥ (२) वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्ज-स्यादेवमिति"॥ अत्यन्तन्यादेव कर्तृत्वादेर्विचाराऽसहत्वाद्विवेके क्रियमाणे न कस्यायमेतदित्यध्यवसितुं शक्यमित्यभिप्रेत्याह—मृषैवेति॥ मिथ्यैवेत्यर्थः। वास्तवत्वे हि कर्तृत्वादेः कस्यायं धर्म इति विचार्य निर्धारणं युक्तं। न-मिथ्यात्वे। शुक्तिरजतस्य वन्ध्यापुत्रस्य न कस्येदं रजतं कस्यायं पुत्र इति विचारणनिर्धारणयोस्तत्फलस्य चादर्शनादित्यर्थः। उक्ताऽध्यासे कारणमाह-मोहादिति। मोहयति चैतन्यमावृत्याऽन्यथा ग्राहयतीति मोहोऽज्ञानं, तस्मा-द्धेतोरित्यर्थः॥ ४६ ॥

दर्शिताऽज्ञाने सर्वानुभवंप्रमाणयंस्तस्य च स्वावृतचैतन्यभास्यत्वं सदृष्टान्तमुपपादयन्नावरणविक्षेपोभयशक्तिमत्त्वमनिर्वचनीयत्वं च दर्शयति—

मू० ॥ अज्ञोऽस्मीत्यनुभवनादनादिरबोध-
श्चिच्छिद्धितिं विषयस्तमो यथेन्दुम् ।
प्रच्छाद्य स्फुरति चितं चितैव भूयो
विक्षिप्य भ्रमयति हन्त दुर्निरूपः ॥ ४७ ॥

अज्ञ इति। अहमज्ञो मामहं तत्त्वतो न जानामीति प्राग्दर्शितादनुभव-नात्=अनुभवात्। अनादिः=अनवस्थादोषेण कारणासंभवादजन्यः, अबो-धः=बोधविरुद्धः पूर्वोक्तो मोहस्सिद्धः। स च मामहं न जानामीत्यात्मनो विषयत्वबोधकद्वितीयान्तपदेनाऽऽश्रयत्वबोधकाऽऽस्यातसमानाऽधिकरणप्र

---

जीवान्तरस्य धर्मादिसम्बन्ध इत्यर्थः। (२) यतः परप्रतिबिम्बयोरुभयोः निर्विशेषोऽयमात्मा, अतएवौपाधिकं सविशेषत्वमादाय जलसूर्यकादिवदित्युपमा गृह्यते। "यथाऽयं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैकोऽनुगच्छन्। उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा" इति ॥ "एक एव तु भूतात्मा भूते भूते व्यवस्थितः। एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इति, ज्योतिःस्वभावो विवस्वानेकोऽपि तत्तत्स्था भिन्ना आपोऽनुगच्छन्बहुधा क्रियते। एवमयमात्मा देवस्स्वप्रकाशोऽजः कूटस्थः नित्य एकोऽपि भिन्नेषु क्षेत्रेष्वनुगच्छन्नुपाधिना भेदरूपः क्रियत इति योजना ॥ तथाचैतद्दृष्टान्तबलादपि ब्रह्मणो निर्विशेषत्वमिति सूत्रकृत्तात्पर्यम् ॥

(३) वृद्धिह्रासमिति ॥ यथा सूर्यप्रतिबिम्बस्य जलेऽन्तर्भूतस्य जलगतवृद्धिह्रासचलनादि-भाक्त्वं न वास्तवम्।, एवमविकृतस्य परमात्मनो देहाद्युपाध्यन्तर्भावाद्देहगतवृद्धिह्रासादिभाक्त्वं न स्वाभाविकमित्येतावतांशेन तयोर्न दृष्टान्तदार्ष्टान्तिकयोरसामञ्जस्याद्भवति सूर्यादि दृष्टान्तः। न हि सर्वात्मना साम्यं दृष्टान्तदार्ष्टान्तिकयोः।

थमान्तपदेन चोल्लेखाच्चैतन्यविषयश्चैतन्याश्रयश्चेत्याह—चिन्निष्ठश्चिति विषय इति ॥ शुद्धचैतन्याश्रयस्तन्मात्रविषयश्चेत्यर्थः। इदं च मूलाऽज्ञानाऽभिप्रायेण । अवस्थाऽज्ञानानां तु शुक्त्याद्युपहित चिदाश्रय विषयत्वं बोध्यम् ॥ यद्यपि "मामहम्" इत्यहङ्कारस्याप्युल्लेखात्तदुपहितएवेदानीमज्ञानमनुभूयते, तथाप्यज्ञानाऽध्यासस्य अहङ्काराऽध्यासहेतुत्वात्सुषुप्तोत्थितस्य नाऽऽत्मानमवेदिषमिति स्मरणाऽनुरोधाच्च तस्य शुद्ध चैतन्यमात्राऽऽश्रय विषयत्वम्। जागरस्वप्नयोः परं तत्राहङ्कारस्यापि संनिधाना त्तदुपहितेऽज्ञान भानमिति बोध्यम् ॥ नचाऽऽवरण स्वभावस्याऽज्ञानस्य प्रतिभास विरोधिन स्सविषयत्वानुपपत्तिः । घटं जानामीतिवन्न जानामीत्यज्ञानोल्लेखेऽपि घटस्य विषयत्वाऽनुभवाज्ज्ञानाऽज्ञानयोस्समानविषयत्वमन्तरेण निवर्त्य निवर्तक भावव्यवस्थाऽनुपपत्तेश्च तस्य सविषयत्व सिद्धेः ॥ नन्वात्मा यद्यबोधावृतस्तर्हि न भासेत पटाद्यावृतघटादेर्भानाऽदर्शनात् । चैतन्यतिरोधानेऽज्ञानमपि भासकाभावान्न सिद्ध्येदिति धर्मिग्राहकमानविरुद्धमावरणकल्पनमित्याशङ्कामपनुनुत्सुरावृतस्यापि प्रकाशकत्वं सदृष्टान्तमुपपादयन्नावरणशक्तिं दर्शयति—तम इति । यथातमः=राहुःइन्दुं=प्रच्छाद्य तेनैव प्रकाशकेन स्वयं स्फुरति,तथाऽज्ञानमपि चितं प्रच्छाद्य तयैव चिता स्वयमपि स्फुरतीत्यर्थः। तथाच यथा राहुरिन्दुं सर्वनभोमण्डलविसृत्वरप्रकाशनयनानन्दजनकधवलतरपरिपूर्णमण्डलाकारांशे प्रच्छाद्य खदिराङ्गारच्छायतामापादयन्स्वच्छन्नेनैवेन्दुना प्रकाश्यते, तथा अज्ञानमप्यात्मचैतन्यमपरिच्छेद्यनिरतिशयानन्दांशयोः, 'नास्ति न भाति' इति व्यवहारापादकं तिरोभावमापाद्य स्वतिरोहितेनैवाऽऽत्मचैतन्येन स्फुरति । अतो नावृतघटादिवदत्यन्तमभानप्रसक्तिः। घटादेर्बाह्याऽऽलोकेन्द्रियसंनिकर्षसापेक्षत्वेनाऽप्रकाशस्वभावत्वेनाऽनावृतांशान्तराभावेन च वैधर्म्यात्। किन्त्वावरकधर्मसंवलनाद्रूपान्तरेण स्फुरति न स्वाभाविकरूपेणेति भावः ॥ इत्थं च वास्तवरूपे 'नास्ति नभाति' इति व्यवहाराऽन्यथानुपपत्त्याऽऽवरणशक्तिस्सिद्धा, कार्यान्तरेणापि तां स्फुटीकुर्वन्विक्षेपशक्तिं दर्शयति—भूय इति। प्रथममावृत्य पश्चाद्विक्षिप्य, आवरणस्य विक्षेपहेतुत्वादित्यर्थः। अतएव सुषुप्तावावरणमात्रमनुभूयते । जागरादौ विक्षेपोपीति कार्यपौर्वापर्यम्, भ्रमयति=अद्वितीयमेवाऽऽत्मतत्त्वं जगदाकारेणाऽन्यथा ग्राहयतीत्यर्थः । विक्षिप्येत्यनेनैव भ्रान्तेरपि सङ्ग्रहे पुनरुक्तिर्ग्राह्यग्राहकभेदेन सामान्यतो विक्षेपद्वैविध्यमिति प्रदर्शनाय। "प्रच्छाद्यस्फुरति", "विक्षिप्यभ्रमयति" इत्युभयत्रापि 'मुखं व्यादाय स्वपिति' इतिय-

चानृतं च सत्यमभवत्"। "वाचारम्भणं विकारो नामधेयम्" इत्यादिश्रुतीनाम्, "अपागादग्नेरग्नित्वम्" इत्यादिश्रौतदृष्टान्तोपन्यासस्य च कार्यमात्रमिथ्यात्वतात्पर्यकत्वादित्याशङ्काः परिहरिष्यन्मायायास्स्वपरनिर्वाहकत्वं सदृष्टान्तमुपपादयति—

सू०॥ चिद्भाने चितिरिव या भिदेव भेदे
निर्वाहे निजपरयोस्स्वतस्समर्था।
संभाव्येतर घटनापटीयसी सा
संमोहं जनयति विभ्रमेण माया ॥ ४८ ॥

चिद्भान इति॥ यथा चितिः=अनावृतमात्मचैतन्यं स्वसम्बन्धादन्यस्यापि भासनसमर्थं स्वभाने चैतन्यान्तरानिरपेक्षं। यथा वा भिदा=भेदः। सामान्यत एकवचनं। घटपटयोः परस्परप्रतियोगिकौ भेदावित्यर्थः। तौ यथा स्वाश्रययोर्विभिन्नबुद्धिव्यवहारहेतू, स्वात्मनोऽपि भेदबुद्धिव्यवहारे भेदान्तरं नापेक्षेते, अभावप्रतियोगिकस्य, अभावाऽधिकरणकस्यचाऽभावस्य न्यायनयेऽप्यधिकरणमात्रस्वरूपत्वात्। अन्यथाऽनवस्थानात्। एवं या अविद्या सापि निजस्य स्वस्य परस्य स्वकार्यजातस्य च मिथ्यात्वादिनिर्वाहे स्वत एव समर्था, न निमित्तान्तरसापेक्षेत्यर्थः। अयंभावः—मिथ्यात्वप्रयोजकमाविद्यकत्वं हि अविद्याकालमात्रस्थितिकत्वम्, अविद्याधीनस्थितिकत्वं वा अविद्यातत्कार्यसाधारणम्। अभेदेऽपि योगक्षेमसाधारणस्य तदधीनस्थितिकत्वस्याऽव्याघातात्॥ तथा चोक्तं वार्तिके—

"अविद्यास्तीत्यविद्यायामेवास्तित्वं प्रकल्प्यते।
ब्रह्मदृष्ट्यात्व विद्येयं न कथञ्चन युज्यते" इति॥

दोषसंस्कारादिकारणापेक्षापि कार्याध्यासेष्वेव, नाऽनादौ। नच दोषजन्यत्वमेवाध्यस्तत्वं, दोषत्वस्याऽननुगतत्वात्। अध्यासनिमित्तत्वमेव तदिति, अन्योन्याश्रयापत्तेश्च। किन्तु प्रतिपन्नोपाधौ निषिध्यमानत्वमनिर्वचनीयत्वं वा। तच्चाऽविद्या साधारणमेव। एवंचाऽविद्याविषयीकृतब्रह्मविवर्तमात्रं जगदिति मतेऽपि नोक्तदोषः॥ नच कार्यमात्रस्य बाधो नाऽज्ञानस्येत्युक्तं युक्तं। ज्ञानाऽज्ञानयोरेव परस्परविरुद्धत्वात्, तद्बाधे कार्यबाधस्यैवाऽसंभवात्। नचापसरणमात्रेण कार्योपमर्द इति न्याय्यम्। बाधस्य त्रैकालिकविषयत्वानुपपत्तेः। नहि जलापसरणेन तरङ्गोपमर्दो बाधः। ब्रह्मज्ञानक्षणे सर्वकार्यबाधेऽपसरणीयदशाऽन्तराप्रसिद्धेश्च। तस्मात् तद.

ज्ञानेन मम तदज्ञानं नष्टमित्यनुभवात्, "ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः" इति स्मृत्यनुरोधाच्च तस्यापि बाधकत्वमावश्यकम्। ननु तर्हि उक्तस्मृत्यनुरोधादाच्छादन एव कल्प्यतां, न बाध इति वाच्यम्। स्वप्रकाशे तिरोधानलक्षण नाशकस्य निष्कारणेऽज्ञानेऽसंभवात्‌तस्यैवार्थतः वाऽऽवरक-कत्वात्। बाधश्चाऽविद्यातत्कार्याणामधिष्ठानमात्रता एव एवेति 'नेदं कदाचिदपि रजतम्' इति कार्यमुखेन तस्य त्रैकालिकत्वमुद्दिश्यत एव। तथाच वार्तिकम्—

"न चाऽविद्यास्वमुच्छित्तिर्ज्ञानोत्पत्त्यतिरेकतः।
संसारे नाशोऽविद्याया नाशाय व्यतिरिच्यते" ॥ इति ॥

'नेदं कदाचिदपि नाऽज्ञानमिदम्' इत्याकारण पुरस्कारेण तदनुद्दिश्यत्नु विशेषिताय कालत्रितये तत्त्वनिरूपणाऽभिमानात्। अत एव नैयायिकादीनां ज्ञानप्रागभाव एवाऽज्ञानमिति भ्रान्तिरप्युपपन्ना। शुक्तिज्ञानध्वंसाऽज्ञान निवृत्तिरिति पूर्वव्यवहारोऽप्यतिरिक्तध्वंसकल्पना निरासपर एव। प्रपञ्चविलयं चानन्दपरिणाम्। छान्दोग्येऽपि "सदेव सोम्येदम्" इत्यादिना सजातीयादिभेदशून्यत्वेनोपक्रान्तवस्तुप्रतिपादनाय प्रक्रान्ततेजोऽबन्नानां तुल्यन्यायानुपपत्तिकल्प्यायां मायाशक्तौ तोपक्रमोपसंहारयोरेकवाक्यत्वमनन्यथासिद्धं कल्पयितुं शक्यम्। परिणामवादप्रसङ्गात्। अतः कार्यनाशे वाचारम्भणश्रुतिः "घटो वा प्राग्दर्शनात्" इति व्यावर्तनोपलक्षणमनात्मवर्गमात्रस्येति॥ ननु परिच्छिन्नाऽविद्या अपरिच्छिन्नं ब्रह्म कथमावृणुयात्। नच परिच्छिन्नप्रदेशाऽऽश्रितया तयाऽल्पेनाप्यक्षिपटलेनाऽतिविधाने व्यवहितविस्तृतादित्यादितिरोधानवत्प्रतितिरोधानमिति वाच्यम्। "य आत्मानमन्तरो यमयति एष त आत्मा सर्वान्तरः" इत्यादिश्रुत्याऽऽन्तरस्य ब्रह्मणो जीवादिप्रकर्षाऽभावावगतेः। व्यवहितसूर्यादेर्जलादौ प्रतिबिम्बदर्शनेन ब्रह्मप्रतिबिम्बो जीव इति सिद्धान्तानुपपत्तेश्च। किञ्च स्वप्रकाशचिदेकरसे परमात्मनि सवितरि तम इव नाऽविद्यैव संभावयितुं शक्या, दूरे तत्कृतमावरणम्। किञ्चाऽविकृतस्यैव ब्रह्मणो नामरूपव्याकरणाय संकल्पपूर्वको जीवभावेन प्रवेशश्श्रूयते। तथाऽसङ्गोदासीननिष्क्रियनिरवयवाऽपरिच्छिन्नानन्दरूपस्य ब्रह्मणस्सर्वज्ञस्य स्वतन्त्रस्य पूर्णकामस्येश्वरस्य वा निरतिशयदुःखनिदानजीवभावविपर्यस्तत्वम्, अन्नमयादिकोशप्रवेशान्मूढता, तत्प्रयुक्तसंसारश्च संभावयितुं शक्यते। किञ्च ब्रह्मणस्सर्वात्मना जीवभावे ईश्वराभावपरिशेषादुपदेष्टुरभावान्मोक्षानुपपत्तिः। एकदेशेन जीवभावे सावयवत्वादनित्यत्वापत्तिः, एवं जगद्भावेऽपि दोषो वाच्य इत्यादिदोषसहस्रमेकोक्त्या परिहरन्ना-

याया अतर्क्याऽनन्तशक्तित्वं दर्शयति—संभाव्येति। उत्कटकोटिकस्संशयः संभावना, तद्विषयस्संभाव्यस्तस्य, तदितरस्य=असंभाव्यस्य च घटनायाम्=उपपत्तौ, पटीयसी=अतिसमर्था। अतर्क्याऽनन्तशक्तिमत्वादघटितघटनापटीयसीत्यर्थः। सा=माया, विभ्रमेण=विलासेन विक्षेपशक्तिवैचित्र्येण संमोहं=जीवभावादिमहाभ्रमपरम्परां, जनयति=आविष्करोति। तथा च नाऽज्ञानस्यास्ति दुष्करमिति भावः। यथाहुः,—

"खमपि खादति खण्डितमीक्षते, निजशिरोनयनेन करार्पितम्।
(१) किमपि दुर्लभमस्य न विद्यते, यदि विमूढमतिर्भवति स्वयम्"॥ इति॥

प्रेक्षावतां कृतार्थानामपि राजादीनां निद्राकुतूहलादिवशाच्छयनविनोदादौ प्रवृत्तिदर्शनात् तत्र च स्वप्नेन्द्रजालादावसंभावितसहस्रस्यापि दर्शनात्प्रतिबोधे स्वरूपाप्रच्युतिप्रतिसंधानाच्च न कश्चिद्दोष इति भावः॥ वस्तुतस्तु प्रवेशश्रुतेरन्यथाऽभिप्रायो वक्ष्यते॥ ४८॥

किंचाऽसंभावितत्वे सति प्रतीयमानत्वमध्यस्तत्वेऽनुकूलमेव न प्रतिकूलमिति सूचयन्प्रसिद्धाद्ध्यासलक्षणमविद्यादौ प्रदर्श्य ज्ञानाद्ध्यासाऽर्थाद्ध्यासाद्वितद्भेदान्सर्वानुभवसिद्धान्दर्शयति—

**मू०॥ अद्ध्यासोऽनधिगतवस्तुनि ह्यतस्मि-**
**स्तद्बुद्धिस्स्फुटमनुभूयते प्रतीचि।**
**अज्ञोऽहं गळितबलो नरो दरिद्रो**
**जीवेयुर्मम तनयाः कथं बतेति॥ ४९॥**

अद्ध्यास इति॥ अतस्मिन्=तत्पुरुष बहुव्रीहिभ्यां तद्भिन्ने व्याप्यवृत्तितदत्यन्ताऽभाववति च धर्मिणि, तद्बुद्धिः=तत्तादात्म्य तत्संसर्गगोचरा अविद्यावृत्तिः, अद्ध्यासः=अद्ध्यसनमद्ध्यासः ज्ञानाद्ध्यास इत्यर्थः। अथवा बुध्यत इति बुद्धिः। कर्मणिक्तिन्। साचाऽसौ बुद्धिश्चेति कर्मधारये तद्भिन्ने तदत्यन्ताऽभाववति च प्रतीयमानः सोऽर्थोऽद्ध्यस्यत इत्यध्यासः अर्थाऽध्यास इत्यर्थः। यथा रजतभिन्ने रजतत्वाऽत्यन्ताभाववति च शुक्तिशकले रजततादात्म्यस्य, रजतत्व संसर्गस्य च बुद्धिः=इदं रजतमित्याकारा अविद्यावृत्ति स्तद्विषयश्च रजतांशे तादात्म्याध्यासो रजतत्वांशे संसर्गाऽध्यास इति भावः। नच ज्ञानाऽध्यासे मानाभावः, इदमंशस्यैवाऽध्यस्तरजतादेरप्यन्तः करणवृत्त्यैव ग्रहसंभवादिति वाच्यम्। बाह्य-

(१) "किमपि तस्य न दुर्घटमीक्षते" इति पाठान्तरम्॥

गोचराऽपरोक्षान्तःकरणवृत्तौ पूर्वसिद्धविषयस्य हेतुत्वेन तस्याः प्रातिभासिकविषयगोचरत्वात्। प्रमाणसहकारमन्तरेण बाह्यान्तःकरणवृत्त्यनुदयाद्रजतादेस्तद्विषयत्वे प्रामाणिकत्वेन बाधत्वानुपपत्तेश्च॥ नच स्वाप्नमिवाऽऽभ्यन्तरमेव रजतं बहिर्वदवभासत इति प्रलापो युक्तः। बाह्यशुक्तितत्त्वज्ञानबाध्यत्वाऽनुपपत्तेः। पुरोवर्तिनि बाह्ये प्रवृत्त्यनापत्तेश्च। बाह्यतादात्म्यानुभवविरोधाच्च। अतोऽविद्यावृत्तेरावश्यकत्वाद्रजतेदंपदार्थयोरिव तदाकारान्तःकरणाऽविद्यावृत्त्योरपि तादात्म्यस्य रजतत्वेदंत्वयोरिव तदाकारयोरपि परस्पराऽवच्छिन्नत्वस्य च सर्वानुभवसिद्धत्वादविद्यान्तःकरणवृत्त्योस्तद्धर्माणां च परस्पराध्यासोऽपि दुरपह्नवः। तत्र शुक्त्यवच्छिन्नचिन्निष्ठा अविद्या रजताद्याकारेण, इदमाकारवृत्त्यवच्छिन्नचिन्निष्ठात्वविद्या रजतादिज्ञानाकारेण परिणमत इत्युभयत्राप्यविद्यैवोपादानमिति सूचयितुमाह—अनधिगतवस्तुनीति ॥ अनधिगते=अध्यासविरोध्यंशाऽऽवरकोक्ताविद्याद्वयविषयीकृते सामान्यतोभासमाने वस्तुनीत्यर्थः। उक्तलक्षणाध्यासः प्रत्यगात्मन्यपि सर्वानुभवसिद्ध इत्याह—स्फुटमिति। प्रतीचि=अहङ्कारोपलक्षिते साक्षिणि, तस्याप्यध्यासविरोध्यपरिच्छिन्नानन्दांशे आवृतत्वात्स्फुरणांशेऽनावृतत्वाच्च शुक्त्यादिसाम्यादिति भावः॥ अनुभवप्रपञ्चनमुखेनाऽविद्यादेः पूर्वपूर्वोपहिते क्रमेणोत्तरोत्तराध्यास इत्युत्तरोत्तराध्यासे पूर्वपूर्वस्य हेतुत्वमिति दर्शयंस्तस्याप्यध्यासस्याहं ममेति द्वैविध्यं दर्शयति—अज्ञोऽहमित्यादिना॥ "अज्ञः" इति अविद्यातद्धर्माध्यासः। "अहम्" इति अन्तःकरणतद्धर्माध्यासः। ज्ञानेन्द्रियतद्धर्माध्यासस्याप्युपलक्षणमेतत्। गलितबलः=दुर्बलः इति प्राणधर्मेण बलेन व्यपदेशात्प्राणाध्यासः। कर्मेन्द्रियाध्यासस्याप्युपलक्षणम्। "नरः" इति स्थूलदेहाध्यासः। "दरिद्रः" इति बाह्यधनादिवैकल्यप्रयुक्ताऽपकृष्टरूपाध्यास इत्यविद्यादेस्तादात्म्याध्यासः, तद्धर्माणां च संसर्गाध्यासः। तत्प्रयुक्तश्च बाह्यपुत्रादौ ममेत्यध्यासः, तत्प्रयुक्तश्च तदीयजीवनादावात्मीयत्वाध्यासः, तत्प्रयुक्तश्चात्मनि चिन्ताशोकाद्यध्यास इति सूचनाय कथं वर्तेत्युक्तम्। प्राणाद्यध्यासस्यबलवान्द्विजो धनवानित्यादिरूपेणाऽप्युल्लेखसंभवे वैकल्याद्यपकृष्टरूपेणोल्लेखः अध्यासस्य दुःखपर्यवसायित्वबोधनेन वैराग्यार्थः। इति शब्दः आद्यर्थकः, अध्यासाऽऽनन्त्यप्रदर्शनार्थः॥ ४९ ॥

नन्वस्त्वात्मन्यविद्याध्यासः, अनात्मस्याऽऽत्मतद्धर्माणां तादात्म्यसंसर्गाध्यासे किं मानमित्याशङ्क्य, जडाऽनित्याऽशुचिदुःखरूपे देहादौ तद्वैपरीत्याऽनुभव एव मानमिति सूचयन्नध्यासस्याऽनर्थपर्यवसायित्वं सदृष्टान्तं पुनःकण्ठोक्त्याप्याह—

मू० ॥ शुद्धो हृष्टस्स्थिरोऽहं बुध इति च तनावात्मधर्मान्युवाहं
स्थूलो गौरोऽभिरूपः पटुरिति च निजे देहधर्मान्मिमीते ।
अन्योऽन्याऽध्यस्त सत्यानृत वलितवपुर्लोहपिण्डप्रविष्टो
वह्निः कूटाऽभिघातानिव विविधभवाऽनर्थजातं प्रपन्नः ॥

शुद्ध इति । शुद्धः=निर्दोषः, । हृष्टः=सुखी, स्थिरः=चिरस्थायी, बुधः=चेतनः, चकारो देहेन्द्रियादिरेव सत्यस्सारभूतः, सङ्घातरूप एवाहं भोक्तेत्यादिसङ्ग्रहार्थः । इत्युक्तप्रकारेण तनौ=सूक्ष्मे परिच्छिन्ने देहादावित्यर्थः । शुद्धत्वादीनात्मधर्मान्मिमीते=अभिमन्यते । येन स्वदेहे मलमूत्रस्वेददौर्गन्ध्यादिनाऽत्यन्ताऽशुचित्वादि पश्यन्नपि न पश्यतीत्यर्थः । यद्यपि शुद्धत्वाद्य आत्मस्वरूपमेव न धर्माः, तथाप्यशुद्धिदुःखजाड्यादिधर्म्यविद्यादिव्यावर्तकत्वात्तदपेक्ष्य धर्मा इत्युच्यन्ते ॥ तथाचोक्तं पद्मपादाचार्यैः,— "आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात्पृथगिवाऽवभासन्ते" इति । तथाऽहं युवा=मध्यमवयाः, स्थूलः=उपचितावयवः, गौरः=सुरूपः, अत एवाभिरूपः=दर्शनीयः, पटुः=शीघ्रकारीति च । एवमादिप्रकारेण निजे=अस्थौल्यादिधर्मके स्वाभाविके स्वात्मनि। देहधर्मान्मिमीते=अध्यस्यति । पुनर्देहधर्माध्यासप्रदर्शनं दृष्टान्तार्थं, प्रपञ्चार्थं च। उपलक्षणं चैतत् इन्द्रियादिधर्माध्यासस्यापि । तत्रापि पश्यामि, शृणोमि, करोमि, सङ्कल्पयामि, बलवानित्याद्यभिलापदर्शनात् । "प्राणन्नेव प्राणो नाम भवति वदन्वाक्पश्यंश्चक्षुः" इतिश्रुतिरप्येतद्दर्शयति । अयं च धर्मसंसर्गाध्यासो धर्मितादात्म्याध्याऽसपूर्वकः, न स्फटिके जपाकुसुमलौहित्याऽध्यासवत्केवल इत्येतत्प्रदर्शनायाह—अन्योन्येति । परस्परतादात्म्येन परस्परस्मिन्नध्यस्ते ये सत्यानृते ताभ्यां वलितं=मिश्रीभूतं, वपुः=स्वरूपं यस्य स जीव इत्यर्थः। अनृतसंवलितरूपस्यैव भोक्तृत्वमविचारसिद्धम्, विचारे तु सत्यानृतयोस्संवलनस्यैवाऽवास्तवत्वान्न कस्यापीति व्यवहितशङ्कापरिहारंसूचयन्दृष्टान्तमाह-लोहपिण्डेति। यथा लोहपिण्डप्रविष्टो वह्निर्लोहाद्विवेकेनाऽगृह्यमाणः कूटाभिघातान्सहमान इव भ्रान्त्या लक्ष्यते,तद्वदात्मन्यध्यस्ताऽनृतसंवलनेन विविधभवानर्थजातम्=विविधं संसारानर्थसमूहं प्रपन्नः=प्राप्त इवेत्यर्थः । तथाच श्रुतिः—"सोऽनृताऽभिसंधोऽनृतेनाऽऽत्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथहन्यते" इति । विवेकिनस्सत्याभिसंधस्य तु न दुःखभोक्तृतेति भावः ॥ ५० ॥

नन्वगृह्यमाणभेदयोर्भास्वरत्वादिसाधारणधर्मवतोः शुक्तिरजतयोः परस्पराऽध्यासो युक्तः, नन्वत्यन्तविरुद्धस्वभावयोश्चिदचितोर्विषयविषयिभावेन स्फुटंप्रतीतभेदयोस्तेजस्तिमिरयोरिव। तथा नीरूपे कस्यचिदध्यासः प्रसिद्धः। तथा च प्रागुक्तो "युवाहं स्थूलः" इत्यादिप्रत्ययः "अग्निर्माणवकः" इत्यादि वाक्यजन्यप्रतीतिवद्गौण एवेति, नाऽयासमूलं दुःखमिति कस्य चिदाशङ्कामपाकुर्वन्नाह—

इष्टः प्रत्यक्पराचोर्विषयिविषययोर्भास्तमोवद्विरोधे-
ऽप्यध्यासोऽहंममेति स्फुटमिति सुधियां नास्त्यसंभावनाऽत्र।
स्वप्नादौ सत्यभावाद्गगनमलिनिमाऽध्यासदृष्टेर्बुधानां
पश्वादीनां च साम्याद्व्यवहृतिरखिलाऽध्यासमूलेति सिद्धम्॥

इष्ट इति॥ प्रत्यक्पराचोः=आत्माऽनात्मनोः=विषयिविषययोः=प्रकाशकप्रकाश्ययोः भास्तमोवत्=तेजस्तिमिरयोरिव स्वाभाविके विरोधे सत्यपि 'अहं मम' इति दर्शितो द्विविधोऽध्यासो युक्त एव। यतो इष्टः=सर्वानुभवसिद्धो नाऽपह्नोतुं शक्य इत्यर्थः। अयं भावः—सत्यं भेदग्रहे नाध्यासो युक्तः। भेद एव तावद्दुर्ग्रहः। अहमित्यहङ्कार तादात्म्याध्यासस्य भेदग्रहविरोधिनस्सर्वव्यवहारमूलस्य ततोऽपि पूर्वस्य सत्त्वात् तं विना केवलाऽऽत्मप्रकाशस्य व्यवहारदशायामप्रसिद्धेः। न ह्यपरिच्छिन्नं देहादिविविक्तमात्मानमनुभवति कश्चित्संसारी॥ नच परिच्छिन्नमेवाऽऽत्मतत्त्वं, नाऽध्यस्तमिति युक्तम्। वास्तवरूपान्तरस्य तात्पर्यवच्छ्रुतिसिद्धत्वात्। अहङ्कारभेदाग्रहे च न तद्भेदग्रह गुणयोगादिज्ञानाधीन गौणता 'अहमिच्छामिगच्छामि' इत्यादिव्यवहारस्योपपत्तिमती। न ह्यहं शब्दस्य लोके मुख्योऽन्योऽर्थः प्रसिद्धोऽस्ति। येनाहं शब्दो वा गौणीं वृत्तिमासादयेत्॥ यदुक्तं—साधारण धर्माभावान्नाऽध्यास इति, तत्राह—स्वप्नादाविति। आदिपदात्स्फटिकलौहित्य मरुमरीचिका केशोण्डकाद्यध्यास परिग्रहः। स्वप्नदेह गजादेर्जागरे बाधानुभवादध्यस्तत्वं तावदवश्यं वाच्यम्। न चाधिष्ठानमन्तरेणाध्यासस्संभवति। नच तत्राऽऽत्मातिरिक्तमधिष्ठानं संभवति। नच स्थूलदेह एव स्वाप्नाऽध्यासाधिष्ठानमस्तु, जागरे तत्प्रतिसंधानादेव स्वप्नबाधानुभवादिति वाच्यम्। स्वप्ने चक्षुरादीनां लीनतया मनसो बहिरस्वातन्त्र्यादभिमानत्यागाच्च स्थूलदेहस्याऽसंनिकृष्टतया तस्मिन्नारोपायोगात्। जाग्रदभिमानि व्यावहारिकजीवे निद्राख्याऽविद्यावस्थातिरोहिते स्वाप्नप्रपञ्चाऽऽरोपात्तद्द्रष्टजीवप्रतिसंधानादेव स्वप्नबाधस्यावश्यवाच्यत्वात्स्थूलदेहप्रतिसंधानस्य

तन्नान्तरीयकत्वेन स्वप्नबाधाऽप्रयोजकत्वात्। अतो गत्यन्तराभावात्साधारणधर्मशून्येऽप्यध्यासो बलात्स्वीकार्यः। एवं स्फटिके लौहित्याध्यासः तत्प्रयुक्तपद्मरागतादात्म्याद्यध्यासश्च न साधारणधर्मापेक्ष इति व्यभिचारान्न सर्वत्र तदपेक्षेति भावः॥ एवं रूपवत्येवाऽध्यास इत्यपि न नियम इति दर्शयति—गगनेति। रूपशून्येऽपि गगने मलिनिम्नो नैल्यस्य अध्यासदृष्टेः= अध्यासदर्शनादित्यर्थः। तथा चाऽऽगन्तुकाध्यासे निमित्तमात्रस्याऽपेक्षा, न रूपादेरिति तच्छून्येऽप्यात्मन्यविद्याकामकर्मवासनादिनिमित्तसत्त्वादुक्ताऽध्याससिद्धिरित्यर्थः॥

किञ्च, देहादावात्मतादात्म्याऽनध्यासे व्यवहारमात्रविलोपस्स्यात्। चेतनाऽनधिष्ठितस्याऽचेतनस्य प्रवृत्त्ययोगादसङ्गोदासीनेन चाध्यासमन्तरेणाऽधिष्ठातुमशक्यत्वात् ॥ नन्वागमोपदेशशून्यानां पृथग्जनानामस्त्वेवम्। विदुषां तु प्रतिपन्नाऽऽत्मतत्त्वानामध्यासबाधात्कथं व्यवहारोऽध्यासाधीनः? तत्राह—बुधानामिति॥ बुधानां=विदुषां पशु शकुन्यादीनां च इष्टाऽनिष्टवस्तुदर्शने प्रवृत्तिनिवृत्तिव्यवहारे साम्यादित्यर्थः। तथाच विदन्तु नामाऽऽगमोपपत्त्यादिनाऽऽत्मतत्त्वं, तथापि दर्शितव्यवहारस्याऽध्यासंविना दुरुपपादत्वात्प्रारब्धप्रतिबद्धाऽविद्यालेशप्रयुक्तः तात्कालिकाऽध्यासस्तेषामपि स्वीक्रियत इति भावः। न केवलं लौकिकव्यवहार एवाऽध्यासमूलकः। किन्तु शास्त्रीयो यज्ञादि श्रवणादि व्यवहारोऽपि तथैवेत्यभिप्रेत्याह—व्यवहृतिरिति॥ व्यवहृतिः=प्रमाण प्रमेयादि व्यवहारः। अखिला=लौकिकी वैदिकी चेत्यर्थः। तथाच लौकिक प्रमाणानि शास्त्राणि चाऽविद्वद्विषयाण्येवेति भावः॥ प्रपञ्चितं चैतद्भगवद्भिर्भाष्यकृद्भिरन्यैश्च महद्भिरिति नात्र विप्रतिपत्तिरित्यभिप्रेत्योपसंहरति—इति सिद्धमिति॥ ५१॥

वैराग्यदार्ढ्याय शास्त्रप्रवृत्त्यौदासीन्यविच्छित्तयेचाऽध्यासप्रयुक्तमनर्थं प्रपञ्चयति—धर्मादित्यादिसार्धश्लोकद्वयेन—

**मू०॥ धर्माद्देवत्वमेति व्रजति पुनरधः पातकैस्स्थावरादी-**
**न्देहान्प्राप्य प्रणश्यन्क्वचिदपि लभते मानुषत्वं च ताभ्याम्।**
**कर्मज्ञानोभयेन व्रजति विधिपदं मुच्यते कोऽपि तस्मिन्**
**रागी प्रत्येति भूयो जनिमिति विषमं बंभ्रमीतीह लोकः॥**

धर्मादिति॥ धर्मात्=श्रुतिस्मृतिसदाचारप्रमाणककर्मजन्याऽपूर्वात्। कर्मतारतम्यानुरूपं देवत्वं=देवताशरीरं धूमादिमार्गेण चन्द्रमण्डलं प्राप्य

पति=प्राप्नोति। धूमादिमार्गः,=चन्द्रमण्डलप्राप्तिः, तत्र भोगः, ततः पुनरा वृत्तिश्च कर्मिणां श्रूयते—"अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासां-स्तान्नैते संवत्सरमभिप्राप्नुवन्ति। मासेभ्यः पितृलोकं पितृलोकादाकाश-माकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति। तस्मिन्या-वत्संपातमुषित्वाऽथैतमेवाऽध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवति। अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते" इति श्रुतौ धूमादिशब्दास्तदभिमानिदेवतापराः। षड्दक्षिणेति मासानादित्य इति शेषः। अन्नमुपभोग्यं, भक्षयन्ति सेवादिनोपभुञ्जते, देवो-पभोग्यानां च कर्मिणां राजभृत्यानामिव स्वतोऽपि भोगोऽस्त्येव। यथेतं= कथितागमनम्। दुष्कर्मिणां गतिमाह—व्रजतीति। पुनः=शास्त्रविहिताऽ-ननुष्ठाने प्रतिषिद्धाऽऽचरणे वा। तत्प्रयुक्तैः पातकैः=पतनहेतुभिः पापैः, अधः=अधोभुवनं, तत्र हि नरका रौरवादयः पुराणादौ प्रसिद्धाः। तेषु व्रजति=याम्यैः पुरुषैर्नीयमानो गच्छति, तादृशदेहसम्पन्नस्तत्र दुःखमुपभु-ङ्क्ते इत्यर्थः। ततस्तत्र चिरं दुःखभोगानन्तरं शिष्टैः पापैः स्थावरादी-न्=तृणगुल्म लता-वृक्ष-मशक-दंश-कीट सरीसृपादीन् दुःखबहुलान्देहान्प्रा-प्य, बहुवचनमेकैकयोनीनामप्यनन्तवारप्राप्तिबोधनाय, प्रणश्यन्=पुनः पुन-र्मरणदुःखमनुभवन्, ताभ्यां=धर्माधर्माभ्याम् अनेककोटिजन्मसञ्चिताभ्यां दैवात्साम्यमापन्नाभ्यां मनुष्यदेहारम्भककर्मण उद्बोधान्मानुषत्वं=कचिदपि देशे काले वा लभते। चकारो मनुष्यदेहस्याऽतिदौर्लभ्यद्योतनार्थः अप्यर्थे। तत्राऽपि कर्मभूमौ शास्त्राऽऽचार्यादिसम्पन्नकाले तत्राऽपि त्रैवर्णिकेषु तत्राऽपि ब्राह्मणेषु शीलवृत्ताऽध्ययनसम्पन्नेषु तथाविधं जन्म दुर्लभतमम्, किमु वक्तव्यम् अध्यात्मविद्याधिकृतमिति सूचनाय कचिदपीत्युक्तम् ॥

तथा च श्रुतिः—"इह चेदवेदीदथ सत्यमस्ति। न चेदिहाऽवेदीन्म-हती विनष्टिः" इति॥ इत्थं केवलकर्मफलं प्रपञ्च्य उपासनसमुच्चितसत्कर्म फलमपि नश्वरत्वाद्धेयमेवेति दर्शयन्नाह—कर्मज्ञानोभयेनेति॥ ज्ञानमत्रोपा-सनं "विद्यां चाऽविद्यां च यस्तद्वेदोभयं सह" इति श्रुतेः। परस्परसमुच्चि-ताभ्यां कर्मोपासनाभ्यामित्यर्थः। विधेः=विराजो हिरण्यगर्भस्य वा, पदं= स्थानमुपासनतारतम्याऽनुसाराद्व्रजत्यर्चिरादिमार्गेण गच्छति। सूर्यरश्म्यनु सारी अर्चिरादिमार्गेण कार्यब्रह्मणोऽवाप्तिरप्युपासकानां श्रुत्यैवोक्ता— "तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्त्य-

चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षुड्ङुदङ्ङेति मासांस्तान्मासेभ्यस्संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः। स एतान्ब्रह्म गमयत्येष देवयानः पन्थाः" इति॥ तत्र गतानामपि—

"ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परंपदम्॥
आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन"॥

इति स्मृतिद्वयानुसाराद्वीतरागाणां तत्रैव ज्ञानप्राप्त्या मोक्षः, रागिणस्तु परावृत्तिरिति दर्शयति— मुच्यते इति॥ तस्मिन्—विधिपदे कोऽपि=वीतरागो ब्रह्मणा सह मुच्यते=मोक्षं प्राप्नोति। ब्रह्मलोकेऽपि वीतरागाणामल्पत्वद्योतनाय कोऽपीति। तत्र रागी=भोगलम्पटस्तु भूयः=पुनरपि जनिं=प्रत्येति परावृत्त्यप्राप्नोति। यदि ब्रह्मलोके गतानामपि वैराग्यपूर्वकज्ञानावाप्त्यैव मुक्तिस्तर्हि इहैव विरक्तिस्सम्पाद्या। किं ब्रह्मलोकप्रत्याशया। तत्र भोगसामग्रीबाहुल्येन दिव्यकार्यकरणसम्पन्नतया भोगसामर्थ्याविघातादिना च वैराग्यस्य दुष्करत्वाद्विति भावः॥ उक्तमुपसंहरति—इतीति। इति=दर्शितप्रकारेण विषमं=दुःखबहुलं यथा स्यात्तथा इह=संसारे लोकः=जीवसङ्घः बंभ्रमीति=अनादिकालादारभ्य भ्रमन्नेवाऽऽवर्तते, तेन न क्षणमपि विश्राम्यत्यहो कष्टेयं दशेति भावः॥ भ्रमेर्यङ्लुकि "नुगतोऽनुनासिकान्तस्य" इति अभ्यासस्य नुक्॥ ५२॥

ननु न संसारे दुःखमेवाऽनुभूयते किन्तूच्चावचं सुखमपि। स्वर्गे तु महाभोगश्रवणात्सुखमेव चिरम्। तथाचाऽऽयव्ययसाम्याल्लाभाधिक्याद्वा वणिजामिव नोपरतिर्युक्तेत्याशङ्कां परिजिहीर्षुः विषसंपृक्तमोदकाऽऽस्वादसुखवद्बहुतरदुःखाऽनुबन्धित्वादल्पविषयसुखं हेयमेवेत्यभिप्रेत्य दुःखबाहुल्यं प्रपञ्चयति—

**भू०॥ दुःखं स्वर्गात्प्रपाते बहुविधनरके गर्भवासेऽति दुःखं**
**निस्स्वातन्त्र्याऽशनाया ग्रह गद रुदितैश्शैशवे दुःखमेव।**
**तारुण्येऽमर्षलोभ व्यसन परिभवोद्वेग दारिद्र्य दुःखं**
**वार्धक्ये शोकमोहेन्द्रियविलयगदैर्दुःखमन्तेऽतिदुःखम्॥**

दुःखमिति॥ यन्मन्यसे स्वर्गे बहुतरं सुखमिति, शृणु तत्र दुःखं। राग द्वेषाऽसूयाऽभिमानादि प्रयुक्तं मानसं दुःखं तावद्दुष्परिहरम्।

उत्कृष्ट सुकृतकारिभिरल्पसुकृतानां तिरस्कारादेरवर्जनात् । शारीरमपि देवानामसुरादिभिः पीड्यमानानां महर्षिभिश्शप्तानां यज्ञभागोच्छेद पीडितानां च तत्र तत्र श्रूयते । भयमपि तेषां "सोऽबिभेत्" "भीषाऽस्माद्वातः पवते" "मृत्योर्बिभ्यतो देवा मर्त्यनाऽपिदधुर्नरान्" इत्यादिश्रुतेः, पुराणान्तराधिकारस्य स्वाभाविकादर्शनात्, प्रजास्मितुरीश्वरादुपसर्ग विरोध संभावनात्, भावि पतन पुण्यक्षयादि प्रतिसन्धानात्, तदाधिक्याधिकेर्ष्यश्च प्रसिद्धं। सखि बन्धु कलत्र भृत्यादीनां क्षीणपुण्यानामादौ पतने वियोग जन्यमपि दुःखं, गौतमाऽपराध प्रयुक्तमिन्द्र चन्द्रादीनामपि रोग वैकल्यादि दुःखं प्रसिद्धं, निवृत्तत्वमन्येषाम् । उच्चावच सुकृत भोग वैचित्र्यकालभेदेन सेव्य सेवक भाव वैपरीत्यं, शत्रुसद्भावः, शत्रुवैरन्यैर्वा स्वोपभुक्त भार्याभूषण विमानाद्यपहारः, कृतपापानां स्वबन्धुजनानां निरन्तर नरकयातना दर्शनमित्यादि दुःखसहस्राणि कामादि दोषसहस्र कलुषित चेतसां स्वर्गिणां दुष्परिहराणि ॥ यथाह भगवान्व्यासः—

* "इन्द्र लोके महद्दुःखं प्राजापत्ये तथैव च ।
विष्णु लोके च रौद्रे च दुःखमेव विचारतः॥" इति ॥

तिष्ठतु तावदिदं। स्वर्गात्पतनावसरे तेषां निरतिशयमेव दुःखं येनाऽश्मयं स्वर्गिशरीरं द्रवीभूतं जलभावमापद्यत इत्याह—दुःखमिति ॥ स्वर्गात्=ऊर्ध्वलोकात्, प्रपाते=अवरोहणे प्रसक्ते दर्शितलक्षणदुःखं,ततस्त्वानुशयानामेवाऽवरोह श्रवणात् कपूयाऽनुशयाऽवशेषे बहुविधनरके=रौरव कुम्भीपाकादौ चिरकाल भोग्यं दुःखं । रमणीयाऽनुशय मात्राऽवशेषेऽपि संपिण्डित करण ग्रामाणामेव मार्गपर्व सम्बन्धादन्तरा दुःखाऽभावेऽपि वायु धूमाऽभ्र वृष्टि जल क्रमेण व्रीहि यवादि भावमापद्य रेतस्सिग्देह सम्बन्धाऽनन्तरं योषिति गर्भाकार परिणामे करणानां वृत्तिलाभाद्गर्भवासे नरकादप्यतिशयितं दुःखं। तच्च प्रसिद्धं गर्भोपनिषदि, पुराणेषु च। ततो जन्मकाले प्रसूतिवायुविपीडनान्मरणोपमं दुःखमनुभूय मूर्छितस्य जन्मोत्तरकालमपि न दुःखविश्रान्तिरित्याह—निस्स्वातन्त्र्येत्यादिना। शिशोर्भावः शैशवं तत्रापि स्वातन्त्र्यस्याऽभावो निस्स्वातन्त्र्यमस्वाधीनचेष्टत्वान्मशकमत्कुणदंशादिनिवारणाऽक्षमता । अशितुमिच्छा अशनाया=क्षुत् । ग्रहाः=बालग्रहाः । गदाः=रोगाः, दन्तजन्मादिषु प्रसिद्धाः । रुदितं=रोदनं, शिशूनां धैर्यहेतुविवेकाऽभावात्पुनः पुना रोदनेनापि दुःखबाहुल्यं

* अयञ्श्लोको व्यासाचार्येण कुत्रोक्त इति बहुधा विमृश्यमानोऽपि न ज्ञातुं शक्यते ।

प्रसिद्धम्। एतैः प्रकारैर्दुःखमेव, न सुखलेशोऽप्यस्तीति भावः॥ यद्यप्यस्वातन्त्र्यादीन्युत्तरावस्थास्वपि सन्त्येव, तथापि बाल्ये तदतिशय इत्युपन्यस्तानि। एवमुत्तरत्रापि। यत्र तारुण्ये सुखसंभावनापि स्यात्तस्मिन्नपि दुःखानि दर्शयति—तारुण्य इति॥ तरुणो मध्यमवयाः, तस्यभावस्तारुण्यं तत्राऽप्यमर्षः=क्रोधः येन दिवानिशं दन्दह्यमान इव भवति। गुरुद्विजवधाऽऽदिमहापापान्यपि करोति। लोभः=वित्तस्नेहोत्कर्षः, येन दिवानिशमर्जनाय बहुदुःखाऽऽयाससाध्येष्वपि कर्मसु प्रवर्तते, रक्षणाय च यतते, व्ययाच्चाऽङ्गच्छेदादिव बिभेति, वित्तस्य नाशे च विदीर्णहृदयो म्रियत इव। सुवर्णस्तेयादिपातकेष्वपि प्रवर्तते। व्यसनं=रागादिप्राबल्यप्रयुक्ता स्त्रीद्यूताद्यासक्तिः। यया हि कुल–शील–मान–लज्जा–वित्त–नाशाद्यप्यगणयन् गुरुतल्पगमनादिष्वपि सज्जते। परिभवः=शत्रु–स्वजनादि–कृत–तिरस्कारः। उद्वेगः=राज–चोराऽग्न्याद्युपप्लवव्यग्रता, इत्यादयो धनिनां दुःखहेतवः। दरिद्राणां तु दारिद्र्यमपि, यन्मरणाद्वरमित्याचक्षते। एतैर्निरन्तरं दुःखम्। चरमे वयसि तु दुःखस्य पराकाष्ठेति दर्शयति—वार्धक्ये इति। कुत्सितो वृद्धो वृद्धकः, तस्य भावो वार्धक्यं, तत्र शोकः=इष्टपुत्रदारादिवियोगादन्तर्दाहः, मोहः=विस्मरणशीलता। इन्द्रियविलयः–इन्द्रियाणां=चक्षुरादीनां विलयः=विकारपूर्वको नाशः। दन्तादिनाशस्याप्युपलक्षणमेतत्। गदाः=दीर्घरोगाः। दिक्प्रदर्शनं चैतत्। दुःखस्थानानामानन्त्यात्। एतैर्दुःखम्। अन्ते=मरणे त्वतिशयितं दुःखमतिदुःखम्। सर्वाङ्गीणस्य हृदये उपसंहारकाले सहस्रवृश्चिकदंशजन्यदुःखोपमं दुःखमिति पुराणेषु प्रसिद्धम्। सर्वोत्कृष्टे मनुष्यदेहेऽप्येतादृशं दुःखम्, किं वक्तव्यं स्थावरादिजन्मस्विति भावः॥५३॥

मरणाऽनन्तरमपि पुनः पूर्ववदुच्चावचदुःखपरम्परा तदवस्थैव, तद्धेतोः कामकर्मवासनाश्रयाऽज्ञानस्याऽविच्छेदादिति दर्शयंस्तद्विच्छेदायाऽनुकम्पया श्रुतिशास्त्राऽऽचार्यप्रवृत्तिं दर्शयति—

**मू०॥ इत्थं यः कर्मबद्धो भ्रमति परवशः प्राणभृज्जन्मसङ्घैः**
**दुःखस्याऽन्तं न वेत्ति स्मरति न च जनिव्रातमज्ञानयोगात्।**
**तं सर्वाऽनर्थमूलप्रशमनविधिना स्वात्मराज्येऽभिषेक्तुं**
**तात्पर्येण प्रवृत्ताः श्रुतिशिखरगिरस्सूत्रभाष्यादयश्च॥५४॥**

इत्थमिति॥ यः=परमात्मा, अज्ञानयोगात्=कामकर्म वासनाबीजसंभृताऽविद्यातादात्म्याध्यासान्निमित्तात्, प्राणभृत्=जीवस्सन्, कर्मबद्धः=कर्मभिः=वासनादिसंवलनात्त्रिवृद्रज्जुस्थानीयैः, बद्धः=परिच्छेद-पारव-

द्यावापादितः, अत एव परेषाम्=अनात्मभूतदेहेन्द्रियादीनां वशः=अधीनस्सन् इष्टं=दर्शनप्रकारेणाऽनादिकालादारभ्य, भ्रमति=भ्रमीयन्त्रवदूर्ध्वाधोलोकेषु मुहुः परिवर्तनेनाऽवतिष्ठते। दुःखस्यन्त=उक्तलक्षणस्य, अन्तं=अवधिं, न वेत्ति=न जानाति। जनियातं=प्रागनुभूतजन्मपरम्परां च, न स्मरति=मुग्ध एव चौरैर्भूषणापहाराय यथा स्वदेशान्तरमभिनद्धाक्ष आनीतस्तथैवाऽरण्ये विसृष्टः कान्दिशीकः पुरुष इव रोदितीत्यर्थः। यथा तं पुरुषं केनिद्दयालवोऽध्वगाः बन्धनात्प्रमुच्य विसृज्याऽरण्ये तद्ग्राममार्गं प्रदर्शयितुं प्रवृत्ताः, तथैव श्रुति-शास्त्राऽऽचार्य-प्रभृतिः, तद्दर्शितदिशैव वक्ष्यमाणविचारलक्षणया प्रत्यगभिन्न-सच्चिदानन्दाऽऽत्म ब्रह्मसाक्षात्कारात् आत्यन्तिकाऽनर्थ-निवृत्त्युपलक्षित-निरतिशयाऽऽनन्दलक्षण—परमपुरुषार्थाऽवाप्तिरित्याह—तमिति। तं=तथाभूतं जीवं, सर्वाऽनर्थमूलप्रशमनविधिना=जीवभावादीनां सर्वेषामनर्थानां मूलस्य=निदानस्य अज्ञानस्य ज्ञानेन प्रशमनविधिना=कार्यैस्सहोच्छेदसम्पादनेन स्वात्मराज्ये—स्वः=नित्यचिद्घन-सच्चिदानन्द-स्वरूपमात्रलक्षण-याथात्म्येनाऽवशिष्टो य आत्मा प्रत्यगात्मा, तद्रूपे राज्ये सर्वाऽऽधिपत्ये, मुख्यानां तदन्तर्भावाद्राजभावे, अभिषेक्तुं=प्रतिष्ठापयितुं तात्पर्येण=अनन्यपर्यवसानलक्षणेन षड्विधलिङ्गावगमिनैकैदम्पर्येण, श्रुतिशिखरगिरः=वेदान्तवाक्यानि सूत्राणि=वैयासिकानि, भाष्याणि=भगवत्पादप्रणीतानि शारीरकमीमांसादीनि। आदिपदात्प्रस्थानानि प्रकरणानि स्वस्वाचार्योपदेशाश्च प्रवृत्ता इत्यर्थः। सूत्रादीनां च लक्षणान्याहुः—

> "स्वल्पाऽक्षरमसन्दिग्धं सारवद्विश्वतो मुखम्।
> अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः॥
> सूत्रार्थो वर्ण्यते यत्र वाक्यैस्सूत्रानुकारिभिः।
> स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥
> शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम्।
> आहुः प्रकरणं नाम ग्रन्थभेदमविस्तरम्॥" इति ॥

तथा च सूत्रकारादयाचार्योपदर्शितदिशैव स्वस्वरूपलाभलक्षणमोक्षावाप्तिरित्यर्थः। तथा च श्रुतिः—"यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत्स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्रध्मायीताऽभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टस्तस्य यथाऽभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गंधारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन्पण्डितो मेधावी गन्धारानेवोपसम्पद्येत, एव मेवेहाऽऽचार्यवान्पुरुषो वेद" इति।

श्रुतौ—गन्धाराः=देशविशेषाः। अतिजने=विजने, विसृजेत् चोरादिरिति शेषः। प्राङ्वोदङ्वाऽधराङ्वा=पूर्वोत्तराऽधोदिक्षु प्रध्मायीत=आक्रोशं कुर्यात्। विसृष्ट इत्यन्तमाक्रोशप्रदर्शनं, तस्य यथेति कश्चिद्दयालुरध्वग इति शेषः। अभिनहनं=बन्धनं, पण्डितः=वाक्यार्थाऽवधारणकुशलः, मेधावी=ऊहापोहकुशल इति शिष्यप्रज्ञाऽऽवश्यकत्वं दर्शयति। अत्र गन्धारप्रतिपत्ति-दार्ष्टान्तिकत्वेनाऽऽत्मवेदनं निर्दिशन्ती श्रुतिः विस्मृतकण्ठचामीकरन्यायेना-ऽऽत्मनो ज्ञानमेव लाभो नाऽन्यादृश इति स्पष्टतरं दर्शयतीति ज्ञानलाभ एवाऽऽत्मसाम्राज्यलाभ इति सिद्धं ॥

विधूय विमतध्वान्तमान्तरं परिशेषिते ।
प्रतीचि जगदध्यासादध्यारोपोऽत्र दर्शितः॥



इति श्रीमत्परमहंस परिव्राजकाऽऽचार्य श्रीमद्रामचन्द्र सरस्वती
पूज्यपाद शिष्येण, श्रीसर्वज्ञसरस्वती पूज्यपाद प्रशिष्येण
गङ्गाधरसरस्वत्याख्यभिक्षुणा विरचितायाम्
आत्मसाम्राज्यसिद्धिव्याख्यायां
कैवल्यकल्पद्रुमाख्यायाम्
अध्यारोपप्रकरणाख्यं
पूर्वार्धं सम्पूर्णम् ॥

शुभमस्तु

॥ नमश्शिवाय ॥



# अथ अपवाद प्रकरणम् ॥

ओं श्रीगणेशाय नमः॥ नमश्शिवाय ॥



वरमभयमुदारं पुस्तकं चाऽक्षहारं
मणि वलय मनोज्ञैः पाणिपद्मैर्दधाना ।
सित वसन ललामा कुन्द मुक्ताऽभिरामा
वसतु शशिनिभाऽऽस्या वाचि वाग्देवता नः॥ १ ॥

चूडाऽवतंसीकृत चन्द्रखण्डं गौरी कराह्लादित चारु शुण्डम् ।
भक्तौघ विघ्न प्रशम प्रचण्डं भजे निजं चेतसि वक्रतुण्डम् ॥ २ ॥

पङ्कोत्थं न विरश्चि, षट्पद गणैरागर्दितं चाऽद्रिभभि
श्चञ्चत्कण्टक नाल मश्नाति विधौ मौनवती त्वन्वहम् ।
अम्भोजं हसतो श्वेन्दु विजयि प्रोद्यत्प्रसादानां श्रिया
श्रीमद्देशिक वर्य चारु चरणाम्भोजे भजे नित्यदा॥ ३ ॥

पूर्व परिच्छेदे सर्वथादि विप्रतिपत्तिनिरास पुरस्सरं तत्पदार्थस्य मायाशबल ब्रह्मणः सर्व प्रपञ्चाऽभिन्न निमित्तोपादान कारणत्व व्यवस्थापनेन, त्वंपदार्थस्य प्रत्यगात्मनश्च देहेन्द्रिया द्यतिरेकेण, तथा प्रसाधितस्याऽविद्या द्यध्यास प्रयुक्त कर्तृत्व भोक्तृत्वाद्यनर्थप्रपञ्चनेन च शुद्धे ब्रह्मणि वियदादि लक्षणस्याऽवस्थात्रय लक्षणस्य च प्रपञ्चस्याऽध्यारोपो दर्शितः । अथेदानीं तदपवादेन पदार्थौ परिशोध्य वाक्यार्थं निरूपयितु मिदमारभ्यते॥

ननु यद्यपोद्यमेव जगत् ब्रह्मणि, तर्हि किमर्थमध्यारोप्यते? "प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्" इति न्यायेन विनैवाऽध्यारोपं अलौकिकमपि ब्रह्म स्वर्गाऽपूर्वादिकमिव साक्षादेव कुतो न बोध्यते। सत्यमेवं स्यात्, यदि ब्रह्म स्वर्गाऽपूर्वादिकमिव तटस्थं स्यात्। न तु तथा । सर्वाधिष्ठानत्वात्सर्वान्तरं हि ब्रह्म रज्जुरिव स्वाध्यारोपित सर्पादेः। न च तदारोपित मनपोद्य वास्तवेन रूपेण निदर्शयितुं शक्यम्। न हि सर्पादिकमप्रत्याख्याय रज्जुतत्त्वं निदर्शयितुं शक्यम्। न च श्रुति युक्ति कदम्बैरत्यन्तर प्रतिषेध पुरस्सरं ब्रह्मण्येवाऽध्यारोपमनिश्चाय्य प्रत्यक्षादिप्रबलबहुतरप्रमाण प्रत्युपस्थापितं जगदपवदितुं शक्यमिति निष्प्रपञ्च ब्रह्म प्रतिपत्तावुपाया-

न्तराऽसंभवात्तदुपायत्वेन ब्रह्मण्यध्यारोपं प्रपञ्च्य प्रथमं युक्तिभिरपविवदिषु रेकदेश्यभिमतं सविशेष ब्रह्मण एव लक्ष्यत्वं, जगज्जन्मादिकारणत्वस्य तन्मात्रलक्षणत्वमित्येतच्च निराचिकीर्पुर्दर्शिताऽभिन्न निमित्तोपादान कारण त्वस्य तटस्थ लक्षणत्वं, प्रत्यगभिन्न सच्चिदानन्दाऽद्वय स्वरूप निर्विशेष ब्रह्मणश्च लक्ष्यत्वं श्रुति तात्पर्योद्घाटनेन प्रदर्शयितुं प्रतिजानीते—हेतुत्वमिति॥ अथवा ननु श्रुति सूत्रादि दर्शित दिशाऽपि कथं निर्विशेष ब्रह्माऽवगतिः? ब्रह्मणो लक्षणाद्यभावेन तैरपि बोधयितुमशक्यत्वात्। न च जगत्कारणत्वं तल्लक्षणम्, अतद्धर्मत्वात्। न हि शृङ्गं शशस्य लक्षणं, कृतकत्वं वा नित्यस्य। न च नित्यत्वादिकमेव तल्लक्षणं, तस्याऽनुपलब्ध्यचरत्वात्। प्रसिद्धं हि लक्षणं भवति। नाऽत्यन्ताऽप्रसिद्धम्। एवं च शब्दोऽप्यत्र न क्रमते। अत्यन्ताऽप्रसिद्धस्य निर्विशेषस्य च, पद वाक्य गोचरत्वाऽदर्शनात्। अतो न ब्रह्म विचारयितुं शक्यमित्याशङ्कामपनयन् अतद्धर्मस्यापि तल्लक्षकत्वा लक्षणत्वं सदृष्टान्तं प्रदर्श्याऽत्यन्ताऽप्रसिद्धिं च वारयं लक्ष्य स्वरूपं प्रतिजानीते—

**मू०॥ हेतुत्वं लक्षणं यद्गदितमिदमुपादान कर्तृत्व रूपं**
**ताटस्थ्यादास्पदं स्वं गमयति परमं ब्रह्म शाखेव चन्द्रम्।**
**एवं लक्ष्यं च सच्चित्सुखवपु रखिल द्वैतहीनं सुसूक्ष्मं**
**सत्य ज्ञानादि मन्त्रोदित मखिल मनो वागतीतं गुहास्थम्॥**

हेतुत्वमिति॥ पूर्वं "यस्मादुत्पत्तिगुप्ती" इति श्लोके यत्=जगज्जन्मादिहेतुत्वं ब्रह्मणो जिज्ञास्यत्वेन प्रस्तुतस्य लक्षणं गदितं=व्यक्तमभिहितं, तदिदं कुलालादेर्घटादिकं प्रतीव न निमित्तकारणत्वमात्रम्, नापि मृदादेरिवोपादानत्वमात्रम्। कालाऽदृष्टादौ साङ्ख्याऽभिमतप्रकृतौ चाऽतिव्याप्तेः। किन्तु जीवत्पुरुषस्य स्वकेशलोमादिकं प्रतीव उपादानकर्तृत्वरूपम्=उपादानं च तत्कर्तृचेति कर्मधारयोत्तरभावप्रत्ययेन सामानाधिकरण्येनैकपद प्रवृत्तिनिमित्त विशिष्टाऽपरपदप्रवृत्तिनिमित्ताऽभिधानात् उपादानकारणत्वविशिष्टकर्तृत्वरूपमित्यर्थः। इदमेवाऽभिन्ननिमित्तोपादानत्वमित्युच्यते। उपादानत्वंच-स्वतादात्म्याऽऽपन्नकार्यजनकत्वम्। कर्तृत्वं च-कार्योत्पादनाऽनुकूल ज्ञानशक्तिसम्पन्नत्वं। नतु कृतिमत्त्वम्। नित्यकृत्यनभ्युपगमेनेच्छादेः कृतिसाध्यत्वाऽयोगेन चेश्वरे तदकर्तृत्वप्रसङ्गात्। तदिदमुपादानकर्तृत्वरूपं लक्षणं न "सत्यं ज्ञानमनन्तं ब्रह्म" इति वत्स्वरूपलक्षणम्। न वा "लम्बकर्णो देवदत्तः" इति वत्स्वविशिष्टस्य। किन्तु स्वबाधाऽवधेरधिष्ठानस्ये-

स्याह—आस्पदमिति ॥ स्वं=स्वीयमास्पदं कल्पनाधिष्ठानं, परमं=अबाध्यत्वात्सर्वोत्कृष्टं शुद्धं ब्रह्म, गमयति=लक्षयतीत्यर्थः। तत्र हेतुमाह—ताटस्थ्यादिति ॥ तटे तिष्ठतीति तटस्थस्तद्भावस्ताटस्थ्यं तस्मादिव ताटस्थ्यात्। यथा पिपासितपुरुषेण क नदीति पृष्टः कश्चिद्दूरे निम्नदेशस्थां नदीं साक्षात्प्रदर्शयितुमशक्नुवन्नदीतटस्थं वृक्षं दर्शयति "यत्रायंवटःपिप्पलो या" इति, तन्मूलमुपसृप्तोऽयं नदीं द्रक्ष्यतीति, तत्र यथा नद्यसम्बद्धोऽपि वृक्षो नदीताटस्थ्यात्तद्प्रतिपत्त्युपाय इति नद्याः लक्षकत्वाल्लक्षणं, तद्वज्जगत्कारणत्वमपि ब्रह्मलक्षणमित्यर्थः ॥

ननु वृक्षस्साक्षात्सम्बन्धाऽभावेऽपि तद्घटितपरम्परासम्बन्धसत्त्वात्सामीप्याच्च नदीं लक्षयतु। न त्वसङ्गे ब्रह्मणि वस्तुतः कारणत्वस्य परम्परासम्बन्धः, सामीप्यं वा अस्तीति वैषम्यमित्याशङ्क्य वास्तवसम्बन्धाऽभावेऽपि कल्पितसम्बन्धादपि लक्षकत्वोपपत्तिरित्यभिप्रेत्य तथाविधस्यापि लक्षणत्वे दृष्टान्तमाह—शाखेति ॥ यथाऽतिदूरस्थत्वाच्चन्द्रेणाऽत्यन्ताऽसम्बद्धापि तत्सम्बन्धित्वेनोपदर्शक पुरुषबुद्धिपरिकल्पिता शाखा द्रष्टुरपि तादृशबुद्धिजननद्वारा चन्द्रसाक्षात्कारहेतुतयाचन्द्रं लक्षयतीत्युच्यते, तद्वदित्यर्थः ॥

ननु जगत्कारणत्वलक्षणेन स्वविशिष्टं सगुणं ब्रह्मैव लक्ष्यताम्, सर्वे वेदान्ताश्च सविशेषैकपरास्सन्तु, अन्यथा गिरिकूटप्रासादाग्रादिभिरपि चन्द्रलक्षणात्, शाखयैवचन्द्रो लक्षणीय इत्यनियमवत्सर्वस्य त्वन्मते ब्रह्मण्यध्यस्तत्वाद्येन केनचित्पदार्थेन स्वाधिष्ठान ब्रह्मलक्षणसंभवात् जगत्कारणत्वेनैव सर्वश्रुतिषु ब्रह्मलक्षणनियमो न स्यादिति शङ्कायाः परिहारं च सूचयन्निर्विशेषमेव तल्लक्ष्यं श्रुतितात्पर्यसिद्धमिति दर्शयति—एवमिति ॥ यथेदं लक्षणं कल्पितसम्बन्धेनैव लक्षकम्, एवमेतस्य लक्ष्यमपीत्यर्थः। कुतः? यतस्तदखिलद्वैतहीनं—द्वौ=इतो द्वीतः तद्भावः, द्वयोर्भावो द्विता सैव वा द्वैतं=सजातीयादिभेदो द्वित्वपृथक्त्वादिच। अखिलेन तेन हीनं=कालत्रयेऽप्यसम्बद्धमित्यर्थः। "शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" "एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम्" इत्यादिश्रुतिभिः निर्विशेषस्यैव मुक्तये ज्ञेयत्वोक्तेः लक्षणस्य च तद्बोधोपायत्वेनाऽवतारादितिभावः। "तमेतं वेदाऽनुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" "श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यादिना आत्मज्ञानाय बहुतरप्रयत्न उपदिश्यते। स च परमसूक्ष्मत्वाद्दुर्विज्ञेयस्य निर्विशेषस्यैव लक्ष्यत्वे उपपद्यते। सविशेषस्य प्राणादेरिवोपदेशमात्रेण

सुग्रहत्वादित्यभिप्रेत्याह—सुसूक्ष्ममिति ॥ स्थूलेषु पृथिव्यादिपञ्चभूतेषूत्तरोत्तरं जलादीनि सूक्ष्माणि, तेभ्योऽप्यपञ्चीकृतभूतानि तद्वत्, ततोऽप्यव्यक्तं, ततोऽपि तदधिष्ठानं ब्रह्म । तत्रपृथिवीजलयोस्स्थूलयोरपि क्षीरोदकादाऽवन्योन्यसंवलने जलादि पृथक्त्वेन दुर्ग्रहं, किं पुनः परमसूक्ष्मं ब्रह्मेति भावः ॥ तथाच श्रुतिः—

"यत्परं ब्रह्म सर्वात्मा विश्वस्याऽऽयतनं महत् ।
सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत्"॥ इति

"नित्यं विभुं सर्वगतं सुसूक्ष्मं तद्भूतयोनिं परिपश्यन्ति धीराः" इति च ।

तथाचेदृशं यत्सच्चित्सुखवपुः=सच्चिदानन्दस्वरूपं ब्रह्म तदेव लक्ष्यमित्यर्थः । उपक्रमादिपर्यालोचनेऽपि प्रकृत लक्षणस्य निर्विशेषोक्तरूप ब्रह्मलक्षकत्वं स्फुटं प्रतीयत इति दर्शयति—सत्यज्ञानादिमन्त्रोदितमिति । "यतो वा इमानि भूतानिजायन्ते" "तस्माद्वा एतस्मादात्मन आकाशस्संभूतः" इत्यादि लक्षणवाक्यं हि तैत्तिरीयाणामुपनिषदि श्रूयते । तत्र हि "सत्यं ज्ञानमनन्तं ब्रह्म" इति कण्ठोक्त्यैव सच्चिद्द्वयं सर्वकामाऽवाप्तिलिङ्गेन च परमानन्दरूपं ब्रह्मोपक्रान्तमिति भावः॥ अखिलमनोवागतीतं="यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति वाङ्मनसगोचरसर्वधर्मशून्यपरमानन्दरूपं तदेवोपसंहृतमित्यर्थः। गुहास्थम्=अपरिच्छिन्नं स्वप्रकाशमपि ब्रह्म, स्वान्तः प्रवेशे रूपान्तराऽऽपादनेन गूहति=संवृणोतीति गुहा=कोशपरम्परा, तस्यां प्रत्यग्रूपेण स्थितम् । आनन्दमयकोशरूपाऽव्यक्तस्याप्यधिष्ठानत्वेन "ब्रह्मपुच्छं प्रतिष्ठा" इति मध्ये परामृष्टमित्यर्थः। तदेव चोत्तरत्राऽभ्यस्तं सोपपत्तिकं स्तुतं चेति तस्याश्श्रुतेः निर्विशेष एव तात्पर्यं नान्यत्रेति तस्यैव लक्ष्यत्वमुचितं, न सविशेषस्येति भावः। सर्वश्रुतिषु जगत्कारणत्वस्यैवलक्षणत्वेन कीर्तनं तु सत्यत्वाऽऽनन्त्ययोरुपपादनायेति वक्ष्यामः ॥ १ ॥

तत्र लक्ष्यस्याऽद्वितीयत्वोपपादनाय जगतो मिथ्यात्वं प्रतिपिपादयिषुः प्रथमं कारणस्वरूपपर्यालोचनेन तत्प्रतिपादयति—

**कूटस्थं ब्रह्म विश्वं जनयति न विना मायया साच मिथ्या**
**तस्मिञ्छब्दप्रसिद्धेः परसमधिगमात्तन्निवृत्तिश्रुतेश्च ।**
**सैवाऽविद्या मृषार्था अपि समधिगताः कार्यदक्षाः प्रपञ्चः**
**तस्मान्मायूरपिञ्छच्छविरिव गहनो ब्रह्मसंविद्विवर्तः ॥**

कूटस्थमिति॥ कूटमिव स्थितं कूटस्थं, कूटम्=अयोभिघातोऽधिकरणम्। तद्यथा स्वस्मिन्ननेकशतलोहादिविकारोदयेऽधिष्ठानभावेन निमित्तभूतमपि स्वयं निर्विकारत्वात्स्वरूपादप्रच्युतं, तथैव निर्विकारमित्यर्थः। तथाविधमपि ब्रह्म विश्वं=कृत्स्नं जग जनयतीति श्रुत्यादिप्रमाणैरवगम्यते। तथा च श्रुतं निर्विकारोपादानकत्वमेव जगतो मिथ्यात्वे पर्यवसन्नमिति भावः॥ एवं परिणाम्युपादानमायास्वरूपपर्यालोचनेऽपि तदेव पर्यवस्यतीत्यभिप्रेत्याह—न विना माययेति। निर्विकाररज्जुशुक्त्यादेः सविकाराऽज्ञानगोचरत्वेनैव सर्परजताद्युपादानत्वदर्शनात्। ब्रह्मणोऽपि तथात्वात् "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुत्यापि जगदाकारपरिणाम्यविद्यागोचरत्वेनैव ब्रह्मणो जगत्कारणत्वोपपादनादित्यर्थः। तथाचोक्तसर्परजतादिवदेव मिथ्यात्वसिद्धिरिति भावः॥ नन्वस्तु जगतो मायापरिणामत्वं, तथापि न मिथ्यात्वसिद्धिः, मायायाः "स्वाभाविकी ज्ञान बलक्रिया च" "देवाऽऽत्मशक्तिं स्वगुणैर्निगूढाम्" इत्यादिश्रुतिषु ब्रह्मात्मत्वस्वभावत्वयोःश्रवणेन परमार्थसत्यत्वात्, तत्परिणामस्यापि तत्समसत्ताकत्वाऽनपायादित्याशङ्क्य नस्याः मिथ्यात्वमुपपादयितुं प्रतिजानीते—साचेति। सा=मायापि, मिथ्या=स्वाधिकरणवृत्त्यिव्याप्यवृत्त्यभावप्रतियोगिनीत्यर्थः। अयं भावः—न त्वदुदाहृतश्रुतेस्त्वदुत्प्रेक्षितोऽर्थः। तस्याः निर्गुणचिदेकरसब्रह्मस्वभावत्वे "स्वगुणैर्निगूढां, ज्ञानबलक्रियाच" इति त्वदुदाहृतयापदशेषविरोधात्। "न तस्य कार्यं करणं च विद्यते" "साक्षी चेता केवलो निर्गुणश्च" इति पूर्वोत्तरसन्दर्भविरोधात्। स्वगुणैर्निगूढामिति गुणानां स्वपदविशेषणस्वारस्येन ब्रह्मसम्बन्धव्यावर्तनाश्च। तस्मात् "देवात्मशक्तिम्" इत्यस्य देव एवात्मा तात्त्विकं रूपं यस्याः, कल्पितस्याऽधिष्ठानव्यतिरेकेण तात्त्विकरूपाऽभावादिति वा, अन्योन्याऽध्यासाद्देवस्य सर्गादिव्यवहारनिर्वाहकत्वाच्च उपचाराद्देवस्य स्वरूपभूतामिति वाऽर्थः। एवं "स्वाभाविकी" इत्येतदप्यनन्याधीनत्वपरमिति न कश्चिद्दोषः। मायाशब्दस्य वाच्येऽरूढत्वादपि तस्याः मिथ्यात्वमित्यभिप्रेत्याह—तस्मिन्निति॥ तस्मिन्=मिथ्याभूतेऽर्थे मायाशब्दस्य बहुशः प्रयोगप्रसिद्धेरित्यर्थः। ऐन्द्रजालिकोपदर्शितहस्त्यश्वादौ हि "मायेयम्" इति सर्वजनव्यवहारः, सूत्रकृतोऽपि "माया मात्रं तु कार्त्स्न्येनाऽनभिव्यक्तस्वरूपत्वात्" इति स्वाप्नस्थादौ मायाशब्दप्रयोगः,

" माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद।
सर्वभूतगुणैर्युक्तं नैवं मां मन्तुमर्हसि॥"

इति भगवतोऽप्यवास्तवत्वेन प्रतिपिपादयिषिते विश्वरूपे मायाशब्द-प्रयोग इत्यादिप्रसिद्धेरिति भावः ॥ एतेन "मन्त्रौषधादिरैन्द्रजालिकस्य माया" इति कस्यचिदुक्तिर्निरस्ता,तत्र तथाप्रसिद्ध्यभावात्। भ्रान्तिज्ञानमेव मायेति चेत्। न। "मायां तु प्रकृतिं विद्यात्" इति प्रकृतित्वश्रवणविरोधात्। ईश्वरस्याऽभ्रान्तत्वेन मायिनं तु महेश्वरमित्यस्याऽनुपपत्तेश्च। तस्मात् "नासदासीन्नोसदासीत्तदानीं तम आसीत्तमसा गूढमग्रे यदा तमस्तन्न दिवा नरात्रिर्न सन्नचाऽसन् शिव एव केवलः"

"दैवीह्येषा गुणमयी मम माया दुरत्यया।
"माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥"

इत्यादि श्रुतिस्मृतिरूप धर्मिग्राहकमानैरनिर्वचनीयत्व-ज्ञानावरणत्व-भ्रान्तिहेतुत्वादिना मायाशब्दविषयत्वेन च मिथ्याभूतैव सा सिध्यतीति भावः ॥ तत्त्वज्ञानमात्रेण निवृत्तिश्रवणादपि तस्या मिथ्यात्वमित्याह—परेति॥ परस्य=ब्रह्मणः प्रत्यगभेदेन सम्यगधिगमात्, तस्याः=मायाया निवृत्तिश्रुतेः= "तस्याऽभिध्यानाद्योजनात्तत्त्वभावाद्भूयश्चाऽन्ते विश्वमायानिवृत्तिः" इति कार्यैस्सह निवृत्तिश्रवणादित्यर्थः।

"मामेव ये प्रपद्यन्ते मायामेतां तरन्तिते।"

इत्यादिस्मृतिसङ्ग्रहार्थश्चकारः। ननु विद्याऽविद्ययोर्विरोधाद्विद्यया जीवाऽऽश्रिताऽविद्या निवृत्तिरुचिता। तत्कथमीश्वराऽऽश्रितमायाशक्तेर्निवृत्तिरित्याशङ्क्याह—सैवेति ॥ सा=मायैवाऽविद्या नान्येत्यर्थः। तत्त्वावभासविरोधित्वे सति विपरीताऽवभासहेतुत्वरूपलक्षणैक्यादितिभावः ॥ नच स्वाश्रयव्यामोहहेतुरविद्या, तमव्यामोहयंत्यन्यव्यामोहहेतुर्मायेति लक्षणभेदाद्भेदोऽस्त्विति वाच्यम्। अव्यामोहस्य तत्त्वज्ञानप्रयुक्तत्वात्। अङ्गुल्यवष्टम्भादिना बुद्धिपूर्वकचन्द्रद्वित्वादिप्रतिभासे, दर्पणे मुखादिप्रतिभासे चाऽविद्याया अपि स्वाश्रयाऽव्यामोहदर्शनात्। अत एव कर्तुस्स्वातन्त्र्यपारतन्त्र्याभ्यामपि न भेदप्रत्याशा। एतेनेश्वरस्याऽविद्याश्रयत्वे भ्रान्तत्वाऽऽपत्तिरपि निरस्ता। विरोधिज्ञानाऽनास्कन्दितविपर्ययस्यैव भ्रान्तत्वाऽऽपादकत्वात्। अन्यथा भ्रान्तभ्रान्तिज्ञसङ्करापत्तेः। तस्मात् "तरत्यविद्यां विततान्" इति प्रागुदाहृतस्मृतौ अविद्यां मायामिति सामानाधिकरण्यात्, ज्ञाननिवर्त्यत्वाच्च, न मायाऽविद्ययोर्भेदः। व्यवहारभेदस्तु स्वाश्रयव्यामोहाद्युपाधिभेदादुपपादनीय इति विवरणाचार्याः। आचार्यवाचस्पतिमिश्रास्तु—प्रतिजीवमविद्याभेदमङ्गीकृत्य व्यष्टिरूपेणाऽऽश्रयतासम्बन्धेन जीवेषु

साऽपिनेत्युच्यते, समष्टिरूपेण विषयतया तु ब्रह्मणि सा मायेत्याहुः । शुद्धचैतन्यमात्राऽऽश्रयविषया नेति सङ्क्षेपशारीरकाचार्याः । यथाहुः—

"आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला ।
पूर्वसिद्धतमसो हि पश्चिमो नाऽऽश्रयो भवति नाऽपि गोचरः॥" इति॥

एवं च तूलाऽविद्याया अपि घटाद्यधिष्ठानचैतन्यमेव विषयः, न तु घटादि । जडस्य तस्य स्वतस्स्फुरणप्रसक्त्यभावेन तत्राऽऽवरणकृत्याभावादिति बोध्यम् ॥ ननु न मिथ्याभूतस्याऽर्थक्रियासामर्थ्यं, न हि शुक्तिरजतेन कङ्कणं कर्तुं शक्यं, न वा मृगतृष्णाम्भसि स्नातुं शक्यमित्याशङ्क्याह—मृषार्थाअपीति ॥ मृषार्थाः=मिथ्याभूतपदार्था अपि, देवाऽसुरमायानिर्मितहस्त्यश्वादयो यावद्बाधं युद्धादिकार्येषु दक्षाः=समर्थाः श्रुतीतिहासपुराणाऽऽख्यायिकासु समधिगताः, स्वाप्नपदार्थो च स्नानपानादि तदानीं सर्वानुभवसिद्धम् । शुक्तिरजतादेरपि पुरुषप्रवर्तकत्वादर्थक्रियाकारिता काचिदस्त्येव, समीपोपसर्पणे विशेषदर्शनात्तत्त्वसाक्षात्कारस्याऽवर्जनीयतयाबाध्यमानत्वात्तु तस्य न कङ्कणादिक्षमतेति भावः॥ एवंच तंतुद्वयवन्मायासमुचितं वा, मायाशक्तिकं वा, परिणममानमायाधिष्ठानं वा ब्रह्म जगदुपादानमस्तु, सर्वथापि मायेव दुर्निरूपस्वभावत्वाज्जगन्मिथ्यैवेत्याह—तस्मादिति॥ तस्मात्=उक्तहेतोः । प्रपञ्चः= ब्रह्मैव संवित्=शुद्धचैतन्यैकरसं परमार्थवस्तु तस्य विवर्तः=अन्यथा प्रतिभासः,तत्त्वादप्रच्युतस्य अन्यथाप्रतिभासो हि विवर्तः यथा सर्परजताद्यात्मना रज्जुशुक्त्यादेः । विवर्त इतिभावे कर्मणि च घञ् । तेन ज्ञानाऽध्यासविषयाऽध्यासयोस्सङ्ग्रहः । पूर्वाऽवस्थातः प्रच्युतस्याऽवस्थान्तरप्राप्तिस्तु परिणामः । यथा मृत्कनकादेः पिण्डावस्थातः प्रच्युतस्य घटरुचकाद्यवस्थाप्राप्तिः ॥ यत्तु केचित्कारणविषमसत्ताकं कार्यं विवर्तः, तत्समसत्ताकस्तु परिणाम इत्याहुः, तत्कार्यात्मकविवर्तस्यैव लक्षणम् । अविद्यायनाद्यध्यासाऽव्यापनात् । एतेन सृष्टिश्रुतिप्रामाण्याद्ब्रह्मजगदाकारेण परिणमत इति कस्यचित्पक्षः प्रत्युक्तः । सृष्टिश्रुतीनां विवर्तोपादानपरत्वेनाऽप्युपपत्तेः । किञ्च ब्रह्मणस्स्वरूपादप्रच्युतस्य जगद्भावाऽऽपत्त्युक्तौ विवर्तवाद एव शब्दान्तरेणोक्तःस्यात् । तत्प्रच्युतस्य तथोक्तौ जगद्व्यतिरेकेण ब्रह्माऽभावप्रसङ्गाज्ज्ञानेन प्रपञ्चबाधे सर्वशून्यताऽऽपत्तेश्च॥ दुर्निरूपस्वभावत्वे दृष्टान्तमाह—मायूरेति॥ मयूरस्यावयवो मायूरम् "अवयवे चप्राण्योषधिवृक्षेभ्यः" इत्यनुवर्तमाने "प्राणिरजतादिभ्योऽञ्" इत्यञ् । तस्यपिञ्छस्य=बर्हस्य, छविः=कान्तिः। यथा प्रकाशसां

मुख्यवैमुख्याद्युपाधिभेदाद्धरितेव, कपिशेव, नीलेव, रक्तेव, पाटलेव, धूसरेव, प्रतीयमाना वर्णविशेषात्मना दुरधिगमा, तथा प्रपञ्चोऽपि कारणतः, उत्पत्तिस्थिति लयतः, जातिगुणक्रियादितः, अवयवतः, उपयचाद्यवस्थातः, विशेष्यविशेषण विशिष्टोपहितोपलक्षितकेवलादिरूपतः, सम्बन्धतः, प्रतिभासतश्च भेदाऽभेदसत्वाऽसत्त्वादिना वादिसहस्रैरपि निर्धारयितुमशक्यत्वाद्गहनः= दुर्विचिन्त्यः, ततो मिथ्यैवेत्यर्थः ॥ २ ॥

इत्थं कारणस्वरूपपर्यालोचनेन मिथ्यात्वं प्रदर्श्य "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति श्रुत्यन्तरोपदर्शितदिशा वाचारम्भण श्रुत्यनुगुणतर्कैश्च कार्यस्वरूपपर्यालोचनया तन्मिथ्यात्वमुपदर्शयितुमाह—

**मू० ॥ यस्माद्विश्वं सदुत्थं सदुपभृतमथो लीयते तत्र तस्मा-**
**त्सन्मात्रं नान्यदस्मान्मृदइव घटिकोदंचनादिर्विकारः ।**
**सद्भेदे स्यादसत्वं सदथ यदि तदा नास्ति भेदः कथञ्चि-**
**द्भेदाऽभेदौ विरुद्धौ न हि भवति भिदाऽभिन्नवस्तुप्रतिष्ठा ॥**

यस्मादिति ॥ यस्मात्=हेतोः, विश्वं=कृत्स्नं जगत्, सदुत्थम्—सतः=परमार्थसत्यैकस्वभावाद्ब्रह्मणः प्रकृतिभूतात्, उत्थं=आविर्भूतं सृष्टौ, स्थितिकालेच सदुपभृतम् तेनैव सता उपभृतं=तादात्म्यलक्षणपरमसामीप्येन धृतं पालितं च। अथो=अनन्तरं प्रलयकालेऽपि, तत्र=तस्मिन्नेव सद्रूपे ब्रह्मणि लीयते तस्मात्=कालत्रयेऽपि सद्व्यतिरेकात् सन्मात्रम्= सदेव सन्मात्रं। किं जगद्रूपाऽप्रहाणेनैव? नेत्याह—नेति ॥ अस्मात्=सद्रूपात्, अन्यत्=जगद्रूपं न=नास्तीत्यर्थः। तत्र "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति सूत्रोपबृंहितवाचारम्भणश्रुतिदर्शितं दृष्टान्तमाह—मृद इवेति ॥ अल्पो घटः, घट एव वा घटिका, उत्=ऊर्ध्वं अञ्च्यते उद्ध्रियते ओदनाद्यस्मिन्नित्युदञ्चनं=शरावः। आदिपदान्मणिमल्लिकादिपरिग्रहः। स यथा कालत्रयेऽपि मृद्व्यतिरेकान्मृन्मात्रं तद्वदित्यर्थः। तथा च श्रुतिः—"यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति ॥ किञ्च जगतो ब्रह्मसत्ताऽतिरिक्तसत्त्वस्य निरसिष्यमाणत्वात्सद्ब्रह्मभेदेऽभेदेवा त्वयोच्यमाने उभयथापि स्वमुखेनैव मिथ्यात्वमभ्युपगतं पर्यवस्यतीत्यभिप्रेत्याह—सद्भेदे इति ॥ विश्वस्येति विभक्ति विपरिणामेन संबध्यते। तस्य सतः=ब्रह्मणः सकाशात्, भेदे=उच्यमाने, असत्त्वं=अनृतत्वमेवोक्तं स्यात्, 'सद्भिन्नं, असत्, अनृतम्,

इति शब्दानामपृथगर्थत्वादित्यर्थः॥ अथ विश्वं सत्=सदभिन्नमेवेति यदि ब्रूषे, तदा भिद्यत इति भेदः=जगद्रूपं सद्व्यतिरिक्तं कथञ्चित्=प्रयत्नसहस्रेणाऽपि नास्ति। अभिन्नमिति नञो भिन्ननिषेधकत्वेन जगच्छब्दप्रत्यययोः सद्व्यतिरिक्तविषयाऽनिरूपणादित्यर्थः॥ ननु यथा कुण्डलकटकादिषु अनुगतकनकमन्वयात्कनकात्मना अभेद एव, कुण्डलकटकादिव्यावृत्तरूपेण तु परस्परं भेदः, तथा सद्रूपेणाऽभेदेऽपि सर्ववस्तूनां प्रातिस्विकरूपेणभेदोऽस्तु। एवं च कार्यकारणरूपाभ्यां भिन्नाऽभिन्नमेव वस्तु तत्त्वं। अभिन्नादिशब्दाश्च न स्वगतभेदप्रतिषेधकाः। यथाहुः—

"कार्यरूपेण नानात्वमभेदः कारणात्मना।
हेमात्मना यथाऽभेदः कुण्डलाद्यात्मना भिदा॥" इति॥

तत्राह—भेदाऽभेदाविति॥ भेदश्चाऽभेदश्च भेदाऽभेदौ। विरुद्धौ=असहभाविनौ परस्परोच्छित्तिरूपत्वादित्यर्थः। अयं भावः—यदि कुण्डलं कनकाऽभिन्नं, तर्हि कटकादपि न भिद्येत, तस्यापि कनकत्वात्। यदि च तस्माद्भिद्येत, तर्हि कनकादपि भिद्येत। तदभिन्ने तद्भिन्नभेदाऽयोगात्। अन्यथा कुण्डलेऽपि कुण्डलभेदप्रसङ्गात्। एवं कनकभेदोऽपि प्रसज्येत। तदभिन्नभिन्ने तद्भेद नियमात्। तथा यदि कनकाऽभिन्नं कटकं, तर्हि कनकवत्कुण्डलेऽनुवर्तेत। नानुवर्तते चेत् न कनकाभिन्नं, यस्मिन्ननुवर्तमाने यन्नानुवर्तते तत्ततोऽत्यन्त भिन्नम्। यथा सूत्रात्कुसुमानि। किञ्च यदि कुण्डलादयः कनकाऽभिन्नाः तर्हि दूरात्कनके गृहीते तदभिन्नास्ते गृहीता एवेति न पुनर्जिज्ञास्येरन्। भेदोऽप्यस्तीति जिज्ञासेति चेत्, अभेदोऽस्तीति ज्ञानसामग्रीसत्त्वाज्ज्ञाता एवेति न जिज्ञासा युक्ता। अतो यस्मिन् ज्ञाते यदज्ञातं तत्ततोऽत्यन्तभिन्नं, यथा घटात्पटः॥ ननु यथा भेदग्राहिमानसत्वाद्भेदः, तथा अभेदग्राहिमानसत्वे सोऽपि दुरपह्नवः। अस्ति चाऽभेदेऽपि कुण्डलं कनकमित्यबाधितसामानाधिकरण्यप्रत्ययः सर्वजनीनो मानं। नह्यत्यन्तभिन्नयोः गोऽश्व इति सामानाधिकरण्यप्रत्ययोऽस्ति॥ न च विरोधादन्यतरस्याऽनृतत्वम्। विरुद्धमिति नः कः संप्रत्ययो यत्खलु प्रमाणविपर्ययेण वर्तते। यत्तु यथाप्रमाणेनाऽवगम्यते तत्तथाभूतमेव, सामानाधिकरण्यप्रत्यये च प्रमाणभूते, व्यक्तं भेदाभेदौ चकास्त इत्यविरोधकल्पनमेव युक्तमितिचेत् तत्राह—नहीति॥ भिदा=भेदः। अभिन्नं=भेदशून्यं यद्वस्तु तदेव प्रतिष्ठा आश्रयो यस्यास्तथाविधा नहि भवति। भेदस्य प्रतियोगिवृत्तित्वाऽसंभवात्। अभेदस्य भेदनिवृत्तिरूपत्वे निवृत्तं तिष्ठतिचेति व्याघातात्। अत-

द्रूपत्वे गवि अश्वाऽभेदप्रत्ययस्य, शुक्तौ रजताऽभेदप्रत्ययस्य च याथार्थ्यापातात्। सामानाधिकरण्यं त्वेकस्य पारमार्थिकत्वेऽन्यस्य व्यावहारिकत्वेऽप्युपपन्नमिति नाऽविरोधं कल्पयितुं क्षमत इति भावः॥

अथवा॥ ननु कुण्डलं कनकाऽव्यभिचारात्ततो न भिद्यतां, कनकं तु कुण्डलव्यभिचारि कुण्डला द्भिद्यत एवेति, नैकत्र भेदाऽभेदावित्यविरोध इत्याशङ्क्याह—नहीति॥ न भिन्नं वस्तु प्रतियोगिपदार्थो यस्यास्सकाशात्साऽभिन्नवस्तुः तथाविधा प्रतिष्ठा=आश्रयो यस्याः सा तथा, स्वाऽऽश्रयाऽभिन्नप्रतियोगिका न भवतीत्यर्थः। अन्यथाऽगौर्गौः, असास्नादिमती गौः, इदं कनकं न कुण्डलमित्यादि प्रत्ययस्याऽविपर्ययत्वप्रसङ्गादित्यर्थः॥

इत्थं च वस्तुनि विकल्पाऽसंभवादवश्यभाविनि भेदाऽभेदयोरन्यतरस्य मिथ्यात्वे आगन्तुकत्वात्, सापेक्षत्वात्, अनियतत्वात्, दृष्टबाधत्वात्, वाचारम्भणश्रुत्याऽऽनुगुण्यात्, बहूनां सत्यत्वकल्पने गौरवाच्च भेदस्य मिथ्यात्वं, लाघवात्, पूर्वसिद्धत्वात्, उपजीव्यत्वात्, नियतैकरूपत्वात्, निरपेक्षत्वात, अदृष्टबाधत्वात्, सर्ववेदान्ततात्पर्यविषयत्वाच्च परमार्थसद्वस्तुरूपस्याऽभेदस्यैव सत्यत्वमिति युक्तम्॥ यथाहुः, आचार्यवाचस्पतिमिश्राः—"तस्माद्भेदाभेदयोरन्यतरस्मिन्नवहेये अभेदोपादानैव भेदकल्पना, न भेदोपादानाऽभेदकल्पना। भिद्यमानतन्त्रत्वात् भेदस्य, भिद्यमानानां च प्रत्येकमेकत्वात्" इति॥ ३॥

यत्तु सामानाधिकरण्यप्रत्यये प्रमाणभूते व्यक्तं भेदाभेदौ चकास्त इति साधकमुपन्यस्तं तत्तु विपरीतं बाधकमेव। विरुद्धोभयांशभानोक्तौ संशयवत्प्रामाण्यस्यैवाऽयोगेनाऽन्यतरांशे अप्रामाण्याऽवश्यंभावेन वास्तवांशे अवास्तवांशस्य बाधरूपत्वेन पर्यवसानगत्या वा मिथ्यात्वसाधकत्वात्। किञ्चोक्त प्रत्ययगोचरो भेदः स्वतः? परतो? वा, वस्तुन्युभयथापि भेदाऽघटनादित्यभिप्रेत्याह—

**भेदोऽभिन्ने प्रतीतो भवति खलु मृषा चन्द्रनानात्मतावत्**
**भिन्नेऽभेदश्च तद्वत्प्रभवति हि ततो न स्वतो वस्तुभेदः।**
**धर्मैर्भेदः प्रसिद्ध्येद्यदि भवति भिदा धर्मिणो हन्त तेषां**
**भेदेऽभेदेऽपि लोके न खलु परिचिता धर्मधर्मिव्यवस्था॥४॥**

भेद इति। अभिन्ने=भेदशून्ये वस्तुनि प्रतीतः=प्रतिभातः, भेदः=स्वप्रतियोगिकाऽन्योन्याभावः। मृषा=मिथ्या भूतो भवति। खलु इति

सर्वसंमतत्वद्योतनाय। तत्र लोकप्रसिद्धं दृष्टान्तमाह—चन्द्रेति॥ यथा चन्द्रनानात्मता=चन्द्रव्यक्त्यनेकता अभिन्ने चन्द्रे प्रतीता मृषैव तद्वत्। तथा च चन्द्रैकत्वबुद्धिर्यथा द्वित्वबाधरूपा, तथा सामानाधिकरण्यबुद्धिरप्यैक्यांशे भेदबाधरूपैव। अत्र भेदाऽभेदयो रविरोधकल्पने, चन्द्रेऽपि तथा कल्पनाप्रसङ्गात्। वस्तुनि विकल्पाऽयोगस्तु प्रकृतेऽपि समान इति भावः॥ अथवा अनुमानेन प्रदर्श्यते। सामानाधिकरण्यप्रत्ययगोचरो भेदो मिथ्या अभिन्ने प्रतीतत्वात्, चन्द्रभेदवदिति॥ ननु वैपरीत्यमेव किं न स्यात्। उक्तप्रत्ययगोचरोऽभेदो मिथ्या, भिन्ने प्रतीतत्वात्, दूरस्थवृक्षद्वयप्रतिभासमानाऽभेदवदित्यपि प्रयोगसंभवात्। भवताप्यात्मनि प्रतिभासमानस्य अन्तःकरणदेहेन्द्रियाद्यैक्यस्य तथात्वाऽभ्युपगमादित्याशङ्क्य भवत्वेवं, तथापि कुण्डलादौ कनकात्पृथक् सत्ताऽदर्शनात्, सत्कनकाऽभेदबाधस्य तेष्वसत्त्वाऽऽपादकत्वेन फलतो विशेषाऽभावादित्यभिप्रेत्याह-भिन्ने इति॥ दूरस्थवृक्षादिवद्भिन्ने वस्तुनि प्रतीतः अभेदः=ऐक्यं च, तद्वत्=मृषैवेत्यर्थः। स च प्रकृते मृषाभवन्कुण्डलादिकं सत्त्वात्प्रच्याव्य मृषात्वे स्थापयिष्यतीतिभावः। अभ्युपेत्यापि भेदप्रतिभासस्याऽभेदबाधकत्वमिदमुक्तम्। विशेषस्य प्रागुक्तत्वात्। उभयथापि वास्तवं कनकैक्यमव्याहतमेवेत्याह—प्रभवतीति॥ ततः=उक्तहेतोरन्यतरमृषात्वलक्षणात्कनकादिवस्तुनः स्वतो भेदो न प्रभवति, अनृतभेदस्यैक्याऽविघातित्वादित्यर्थः। अथवा॥ नन्वेवं सामानाधिकरण्यप्रत्ययगोचर भेदाऽभेदयोरेकतरविरोधादन्यतरमृषात्वमिव सत्प्रतिपक्षन्यायेन परस्परपराहतत्वादुभयमृषात्वमेव किं न स्यात्? तथा च सर्वप्रपञ्चे प्रतिभासमानस्य सदभेदस्यापि मृषात्वापत्तौ शून्यवादप्रसङ्ग इत्याशङ्क्य, भवत्वेवं तथापि कुण्डलाद्यनृतविकारसापेक्षभेदाभेदयोर्मृषात्वेऽपि निरपेक्षवास्तवकनकैक्याऽक्षतेरित्यभिप्रेत्याह—प्रभवतीति॥ ततः=त्वदुक्तसापेक्षभेदाभेदोभयमृषात्वात् स्वतस्सिद्धनिरपेक्षवस्तुनः परमार्थसद्रूपस्य भेदनं भेदोऽसत्त्वं न भवति। तथाविधसर्पभेदाऽभेदोभयबाधेऽपि रज्ज्वादिस्वरूपाऽविघातदर्शनादित्यर्थः॥

ननु स्वतोऽभिन्नमपि कनकादिवस्तु कटकत्वकुण्डलत्वादिधर्मभेदात् भिद्यताम्। यथा अभिन्नोऽपि पुरुषो दण्डी कुण्डली स्रग्वीत्यादिविशेषणभेदाद्भिद्यते। केवले तस्मिन्विशेषणान्तरवति च नायं दण्डीतिभेददर्शनात्, स्वात्ममात्रनिरूपिताऽभेदस्य चाऽन्यप्रयुक्तभेदाऽविरोधित्वेन बाधकाऽभावान्मिथ्यात्वाऽसिद्धेश्चेत्याशङ्क्याह—धर्मैरिति॥ उक्तधर्मैः कनकादिधर्मिणि तदा भेदः प्रसिद्ध्येत्, यदि तेषां=धर्माणां, दण्डकुण्डलादिविशेषणा-

नामिव धर्मिणः=कनकादेः सकाशात् भिदा=प्रमाणसिद्धा भवति ॥ ननु तथा। तेषु कनकाद्यभेदस्य त्वयैवोच्यमानत्वादित्यर्थः । ननु तर्हि कटकत्वादिजातयः कनकादत्यन्तभिन्ना एव तत्समवेताश्च सन्त्विति वैशेषिकाद्याशङ्कायामाह—भेद इति ॥ खल्विति हेतौ । यस्माल्लोके गवाश्वादीनां भेदे सति, चन्द्रादिस्वरूपस्याऽभेदेऽपि वा सति गौःअश्वधर्मोऽश्वोगोधर्म इति, गवाश्वौ परस्परस्य धर्मिणाविति वा, चन्द्रःचन्द्रधर्मश्चन्द्रधर्मीति वा धर्मधर्मिव्यवस्था= धर्मधर्मिव्यवहारः, तद्भावेन स्थितिर्वा न परिचिता=न क्वचिदपि दृष्टा । तथाच धर्मधर्मित्वमपि विमर्शे प्रमाणागोचरत्वात् भेदवन्मृषैवेति धर्माणां भेदकत्वं दूरापास्तमिति भावः ॥ ४ ॥

किञ्च भिन्नैर्धर्मिण्यन्योभेद उत्पाद्यते? उत स्वनिष्ठएवाऽऽसज्यते? नाद्य इत्याह—

**मू०॥ यच्चाऽऽभिन्नं स्वतस्तन्न भवति परतो भेदभाङ्नान्यभेदा-**
**दन्यो भिद्येत धर्माः कथमथ विविधा धर्म्यभेदादभिन्नाः ।**
**भेदो भिन्नाश्रयश्चेदधिकरणभिदा तेन चेदात्मनिष्ठा**
**नोचेदन्योन्यनिष्ठा स्थितिहतिरथवा तद्भिदा दुर्निरूपा ॥५॥**

यदिति ॥ यत्=कनकादिवस्तु स्वतः अभिन्नं=भेदरहितं, तत्परतः= स्वातिरिक्त कटककुण्डलत्वादिधर्मतः, भेदं भजत इति भेदभाङ्न भवति= परोत्पाद्यभेदाधिकरणं न भवतीत्यर्थः । उत्पन्नेन भेदेन स्वाभाविकाऽभेदोपमर्दे कुण्डलादेरकनकत्वप्रसङ्गात्। अनुपमर्दे चोत्पत्तुमेवाऽशक्यत्वात्। किञ्च, अभिन्ने वस्तुनि लब्धात्मानौ धर्मौ भेदं जनयेताम्? अलब्धात्मानौ वा? आत्मलाभसमकालमेव वा? आद्ये अभिन्ने वस्तुनि विनापि भेदं यथोत्पत्तिं लभेते, एवं स्थितिमपि लप्स्येते इति भेदजननवैयर्थ्यम् । उत्तरकल्पयोस्तु अलब्धात्मकधर्मयोर्जनकत्वमेवाऽसंभवि । परेषां जन्यभेदाऽसंप्रतिपत्तिश्चेति दोषान्तरसूचनार्थश्चकारः ॥ द्वितीयेऽप्याह—नेति ॥ अन्यस्य भेदादन्यः= तदितरो न भिद्येत । संभावनायां लिङ् । एतन्न संभावितं, न हि घटपटयोर्भेदाद्देवदत्तादि भिद्यते। परभेदस्य परस्मिन्नध्यासमन्तरेणाऽऽसञ्जयितुमशक्यत्वात् । अन्यथाऽभेदमात्रोच्छेदप्रसङ्गादिति भावः ॥ एतेन 'दण्डी कुण्डली' इत्यादि विभिन्न विशेषणानामप्यभिन्नपुरुषे भेदकत्वं न संभवतीति दर्शितम् ॥ धर्माणां परस्परभेद एव न सिद्ध्यति, दूरे तेषां धर्मिभेदकत्वमित्यभिप्रेत्याह—धर्मा इति॥ 'अथ' इति युक्तिभेदद्योतनार्थः॥

अभिन्नेन धर्मिणा सहाऽभेदात् धर्माणामपि भेदो नोचित इति ते धर्माः भिन्नाः=कथं? न कथञ्चिदित्यर्थः। स्वनिष्ठधर्मभेदाद्भिन्ना इति चेत्। न। तत्राप्याऽऽक्षेपसाम्यात्, अनवस्थापाताच्च ॥ अथवा, यदि धर्मभेदाद्धर्मी भिद्यत इति निर्युक्तिकमेवाऽभ्युपगच्छसि, तर्हि तथैव धर्म्यभेदाद्धर्माणामप्यभेद इति वैपरीत्यमेव किं नाभ्युपगच्छेरित्यर्थः ॥ धर्मधर्मिणोर्धर्माणां च परस्परं भेदो मिथ्येति किं वक्तव्यं घटपटादीनामपि परस्परभेद आश्रयादिनत्यविमर्शे तथैवेति दर्शयति—भेद इत्यादिना ॥ सर्वोऽपि भेदः अभिन्नाऽऽश्रयः? भिन्नाऽऽश्रयो वा? नाद्यः, व्याघातात्, प्रतियोगितावच्छेदकसामानाधिकरण्यविरोधाच्चेति ॥ द्वितीयमनूद्य दूषयति—भिन्नाश्रय इति ॥ भिन्नः=स्वप्रतियोगिप्रतियोगिकाऽन्योन्याभाववानाश्रयो यस्य सः तथाविधोऽभ्युपगत इति चेत्। तत्र पृच्छामः,—निरूप्यमाणभेदाधिकरणस्य व्यावर्तिका भिन्ना प्रतियोग्यन्यता निरूप्यमाणभेदेनैव? उत भेदान्तरेणेति? आद्ये तावदाह—तेनेति॥ तेन निरूप्यमाणभेदेनैवेति चेत्, तदा आत्मनिष्ठा=आत्माश्रयदोषः। स्वाधिकरणविशेषनिर्णये स्वाधिकरणनिर्णयस्य हेतुत्वोक्तिपर्यवसानादित्यर्थः॥ द्वितीयेऽपि दोषद्वयमाह—नोचेदिति ॥ तेनैवेति न, किन्तु भेदान्तरेणेति चेत्। तस्यापि भेदत्वात् प्रतियोग्यन्यवृत्तित्वस्याऽवश्यवाच्यतया पूर्वभेदेन तदधिकरणस्य प्रतियोग्यन्यत्वोक्तौ अन्योन्यनिष्ठा=अन्योन्याश्रयः। भेदयोः परस्पराधिकरणनिर्णये परस्पराधिकरणनिर्णयस्य हेतुत्वोक्तिपर्यवसानात्। यदि तु तदधिकरणव्यावर्तनाय तृतीयो भेदोऽप्यभ्युपगम्येत तत्राप्याह — स्थितिहतिरिति ॥ अथवेति=पक्षान्तरे। तस्याऽपि पूर्वभेदद्वयवदाश्रयव्यावृत्त्यनिर्णयादाद्यभेदेन तदुक्तौ चक्रकं, द्वितीयेन त्वन्योन्याश्रयः, स्वेनैव चेदात्माश्रय इत्यन्यस्याऽन्यस्य स्वीकारेऽवस्थितेः=विश्रान्तेः, हतिः=क्षतिरनवस्थेत्यर्थः ॥ प्रस्तुतं निगमयति—तदिति। तत्=तस्मादाश्रयविशेषाऽनिरूपणात्। भिदा=भेदमात्रं दुर्निरूपान्तत्त्वतो निर्वक्तुमशक्या। अतो मिथ्यैवेत्यर्थः ॥ ५ ॥

किञ्च धर्मितावच्छेदकविशिष्टधर्मिज्ञानस्य प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य चाऽभावे भेदबुद्ध्यदर्शनाद्भेदज्ञानस्य तथाविधधर्मिप्रतियोगिविषयकत्वनियमाच्च तस्मिन् धर्मिप्रतियोगिज्ञानं कारणमिति निर्विवादम्। तत्र तयोरैक्यज्ञाने कुतो न भेदधीः? ऐक्यज्ञानं विरोधीति चेत्। न। प्रत्येकमैक्यज्ञानस्याऽवर्जनीयतया भेदबुद्धिमात्रोच्छेदापत्तेः। भेदज्ञानात्प्राक् भेदाभावस्य तद्व्याप्यस्यान्यादिना चैक्योपस्थित्यसंभवेन विरोधित्वाऽसंभवाच्च। तस्मादगत्या भेदज्ञाने धर्मिप्रतियोगिनोर्भेदज्ञानं हेतुरित्य

वश्यं वाच्यम्। तत्र कारणीभूतज्ञानगोचरो भेदो यदि ग्राह्यभेद एवोच्येत, तर्हि तज्ज्ञाने तज्ज्ञानं कारणमित्युक्तं स्यादित्यात्माश्रयदोष वारणायाऽन्यो वाच्यः। तस्यापि पूर्वभेदवदेव धर्म्यादिभेदग्रहं विना ग्रहणायोगात्पूर्वभेदज्ञास्याऽपेक्षणे अन्योन्याऽऽश्रयप्रसङ्गादन्योन्यो भेदो वाच्यः। तथाचाऽनवस्था दुर्वारैवेत्याह—

मू०॥ भेदोऽयं भिन्नधर्मिप्रतिभटविषयज्ञानजज्ञानवेद्यो
धर्म्यादेर्भेदसिद्धिः पुनरपि च तथेत्यापतेचाऽनवस्था।
भेदे धर्म्याद्यभेदे बत भवति मृषा भेदबुद्धिर्विभेदे
प्रादुःष्युः पूर्वदोषा नच गतिरपरा तेन भेदो मृषैव ॥८॥

भेदोऽयमिति॥ अयं=प्रसिद्धो भेदः। भिन्नौ यौ धर्मिप्रतिभटौ=आश्रयप्रतियोगिनौ तौ विषयौ यस्य तथाविधाज्ज्ञानात् जातं यज्ज्ञानं तेन वेद्यः=ग्राह्यः। भेदज्ञाने धर्मिप्रतियोगिभेदज्ञानं कारणमिति यावत्। तत्र धर्म्यादेः=आदिपदात्प्रतियोगिनश्च परस्परभेदस्य सिद्धिः=ज्ञानं, पुनरपि=पूर्वभेदज्ञानवदेव, तथा=धर्मिप्रतियोगि भेदज्ञानाधीना, इति=एवंरीत्या अनवस्था आपतेत्=आपद्येत। परावृत्तावन्योन्याश्रय चक्रकयोरापत्तिरिति द्योतनार्थश्चकारः॥ किञ्च भेदः धर्मिप्रतियोगिभ्यां भेदान्तराच्चाऽभिन्नः? भिन्नो वा? आद्ये तावदाह भेदे इति॥ वक्ष्यमाणाऽऽत्माश्रयादिदोषभयाद्भेदे=भेदपदार्थे, धर्म्यादेः=आदिपदात्प्रतियोगिनो भेदान्तराच्च सकाशात्, अभेदे=भेदाभावे। व्यधिकरणे सप्तम्यौ। अथवा अभेदे भेदशून्ये तदनधिकरणे वा अभ्युपगम्यमाने। भेदबुद्धिः=भेदज्ञानं, मृषा=निर्विषया भवति घटात्पटो भिन्न इति बुद्धेर्भिन्न इत्यंशे घटपटाऽतिरिक्तविषयाऽनिरूपणादित्यर्थः। किञ्च प्रतियोग्यभेदे घटशून्यो घटभिन्नो न स्यात्, घटभिन्नो वा घटशून्योन स्यात्, घटभेदशून्यश्च घटो घटवान्न स्यात्, भेदप्रतियोगी च घटो न स्यात्। अभावविरहात्मत्वाभावात्। एवं धर्म्यभेदेऽप्याधाराऽऽधेयभावो न स्यात्। घटभेदात्मकपटाद्याश्रयस्य घटाऽभिन्नत्वापत्तिः। अभावान्तराऽभेदे तत्तत्प्रतियोग्यवृत्तित्वप्रसङ्गे निराश्रयत्वापत्तिरित्यपि बोध्यम्॥ परेषां भेदनिरूपणक्लेशवैफल्यदर्शनात्, बतेति खेदे॥

द्वितीयेऽप्याह—विभेदे इति॥ भेदे अधिकरणे धर्मिप्रतियोगिभ्यां विभेदेऽभ्युपगम्यमाने पूर्वदोषाः=आत्माश्रयादयः। प्रादुःष्युः "उपसर्गप्रादुर्भ्यामस्तिर्यच्परः" इति षत्वं। आविर्भवेयुरित्यर्थः। तथाहि भेदनिष्ठो धर्म्या-

द्विभेदः स्वयमेव चेत्तदात्माश्रयदोषापत्तिः। अभेदे आधाराऽऽधेयभावाऽयोगात्पूर्वकल्पाऽविशेषात् तदुक्तसर्वदोषापत्तिः॥ अन्यदचेत्सोऽपि भेदो धर्मिप्रतियोगिभिन्नोऽवश्यं वाच्यः तस्मिंस्तु धर्मिप्रतियोगिभेदस्याऽधिकरणाऽऽत्मकत्वे आत्माश्रयापत्तेः। अन्यत्वे पूर्वभेदात्मकत्वेऽन्योन्याश्रयात्। अन्यत्वे परावृत्तौ चक्रकापत्तेः। तथाऽप्यन्यस्तथाऽप्यन्य इत्यनवस्था। एवं द्वितीयादिभेदेषु पूर्वपूर्वभेदभेदस्य तेषु चोत्तरोत्तरभेदभेदस्य चान्यत्वानन्यत्वादिना आत्माश्रयाऽन्योन्याश्रय चक्रकानवस्था अपि प्रसञ्जनीयाः।एवमेव च घटभेदे पटभेदः तस्मिंश्च घटभेदश्चाऽऽश्रयानतिरिक्तश्चेत्सर्वभेदानामैक्यापत्तौ जगत एव तत्प्रतियोगितया तदाऽऽश्रयत्वाऽयोगान्निराश्रयत्वात्सर्वप्रमाणाऽगोचरत्वे अलीकत्वापत्तिः॥ प्रतियोगिनामेव तदाश्रयत्वाभ्युपगमे च घटोऽपि घटभिन्नः पटोऽपि पटभिन्नः भेदोऽपि भेदभिन्नस्स्यादिति सर्वं जगदव्यवस्थितं मिथ्यैवाऽऽपद्येत। तयोराश्रयातिरिक्तत्वे चान्योन्याश्रयचक्रकाऽनवस्थाः। एवं कुड्यादिभेदे तौ, तयोस्तम्भादिभेदः, तस्मिन्कुड्यादिभेद इति चक्रकानवस्था। तथा घटे घटभेदभेदः तद्भेदस्तद्भेद इत्यनवस्था। एवमभावाधिकरणकाऽभावान्तरस्याऽऽश्रयाभेदे अत्यन्ताभावेऽपि न्यायसाम्यादेकयापत्त्या तस्य प्रतियोग्यधिकरणाऽवृत्तित्वे निराश्रयत्वापत्तिः। तद्वृत्तित्वे तु जगन्मात्रस्य स्वाधिकरणनिष्ठाऽत्यन्ताभावप्रतियोगित्वेन मिथ्यात्वाऽऽपत्तौ अस्मदभिलषितसिद्धिः। आश्रयाभेदे त्वनवस्थाद्यापत्तिरित्यादि बोध्यम्॥ ननु घटभेदे घटभेद इत्यभेदेऽप्याधाराधेयभावः प्रामाणिकप्रतीतिबलादभ्युपगम्यते। घटे घटभेदभेदः,तद्भेदेतद्भेद इत्यनवस्थापि प्रामाणिकत्वान्न दोषायेत्यादिकं परेषां कुशकाशावलम्बनेन परिहारं निरस्यति—न चेति॥ अपरा=स्वदभ्युपगमलक्षणा गतिः=उपपत्तिः प्रतीतेः प्रामाणिकत्वनिर्वाहिका न। घटो घटवानिति घटान्तरानधिकरणघटविषयकप्रतीतेरपिप्रामाण्यापत्तेः। यदि तु तादृशघटस्यापि घटात्यन्ताभावाधिकरणत्वात्तदभाववति तद्वगाहित्वात्सा अप्रमा, तर्हि प्रकृतेऽपि तुल्यमिति भावः॥ प्रतीयमाना अप्यन्ये भेदाः नाभ्युपगम्यन्ते चेत्। आद्योऽपि तथाऽस्तु, साधकबाधकयोस्साम्यादित्याह—तेनेति। तेन=उक्तदोषनिवहेन। भेदः सर्वोऽपि मृषैव=मिथ्यैव मिथ्याभूतस्य तु दोषाऽऽकरत्वं भूषणमिति भावः॥ ६॥

एवं भेदस्याऽधिकरणेन सह सम्बन्धस्य दुर्निरूपत्वादपि निरवच्छिन्नस्वसम्बन्धाभाववति प्रतीयमानत्वरूप मिथ्यात्वलक्षणाऽऽक्रान्तत्वात् मिथ्यात्वमिति सदृष्टान्तमाह—द्रव्य इति

द्रव्ये भेदस्य योगो न भवति निरुपाख्यस्य भावस्वरूपो
नाऽभावोऽन्यः समत्वादनुभयमिलनान्नापि तत्तत्स्वरूपम् ।
भावाऽभावाऽतिरिक्तं न च किमपि तयोरस्ति सम्बन्धरूपं
निस्सम्बन्धेऽपि शुक्तौ रजतमिव मृषा तेन भेदः प्रतीतः॥७॥

भेदाऽधिकरणत्वेनाऽभिमते भूतलादि द्रव्ये गुणादीनां विमर्शे द्रव्याऽनतिरेकात् तेभ्यो द्रव्यस्य प्राधान्याच्च वस्तुमात्रोपलक्षणत्वेन द्रव्यनिर्देशः। वस्तुमात्रे भेदस्य=अन्योन्याभावमात्रस्य। आधारतानियामको योगः=सम्बन्धः, भावरूपः? अभावरूपोवा?। आद्यं निरस्यति—न भवतीति। तत्र भावस्वरूपस्ताव न्नसंभवति। सम्बन्धो हि सम्बन्धिभ्यां भिन्नः तावाश्रितश्चेति सम्बन्ध लक्षणाक्रान्तस्यैव तस्याऽवश्यवक्तव्यतया अधिकरणवत्तस्याप्यभावेन सह सम्बन्धान्तर कल्पनेऽनवस्थानादसिद्धेः। सम्बन्धाऽयोग्यत्वोपपादनाय भेदं विशिनष्टि—निरुपाख्यस्येति। निर्गता धर्मि प्रतियोगि व्यावर्तक धर्मव्यतिरेकेण उपाख्या शब्दप्रत्यय प्रवृत्ति निमित्त धर्मो यस्य स्वतोऽध्यासतो वा व्यावर्तक सर्वधर्मशून्यस्येत्यर्थः। अभावत्वादेव धर्माऽऽधारत्वस्याऽध्यासाऽधिष्ठानत्वस्य चाऽयोगात्॥ नच तेजोभावे अन्धकारे नैल्यचलनाद्यारोपो दृश्यत एवेति नाऽयं नियम इति वाच्यम्। अन्धकारस्याऽपि द्रव्यान्तरत्वात्॥ न चैवं सति तत्साक्षात्कारे आलोकसंयोगापेक्षाऽऽपत्तिः। पेचकादीनां द्रव्यचाक्षुषे अस्मदादीनामालोकचाक्षुषेचाऽऽलोकसंयोगाऽपेक्षाविरहेण तस्याऽसार्वत्रिकत्वात्॥ नचाऽऽवश्यकतेजोभावेनैव निर्वाहः। अबाधितनैल्य-चलन-तारतम्य-संख्या-परिमाण-संयोग-विभाग-पृथक्त्व-परत्वाऽपरत्व-संस्कार-जात्यादिगोचर सर्वानुभवसिद्ध प्रत्यक्षाणां स्वतः संवादतश्च निश्चितप्रामाण्यानां निर्वाहकत्वादावश्यकेन तमोद्रव्येणैव निर्वाहे तेजोऽभावस्यैव काममपलापापत्तेः॥ नचाऽवयवादि कल्पना गौरवम्। अवयवानामप्यनुभवसिद्धत्वात्। परमाणूनां च पृथिव्यादिष्वपि निरस्तत्वेन क्वाप्यकल्पनीयत्वात्। अन्यथा तुल्यन्यायेन शीतोष्णस्पर्शयोरन्यतराऽभावेनैवोपपत्तेरेकतरस्य अनुष्णाऽशीतस्पर्शस्य वाऽपलापाऽऽपत्तेः।

नच पृथिवीवाय्वोरुभयाऽभावाऽनुभवविरोधः। तप्यमानोदके कदाचिदुभयाऽभावाऽनुभववदुपपत्तेः॥ किञ्च, प्रौढप्रकाशकतेजःसंसर्गाऽभावस्यैवाऽन्धकारत्वे घटे घटान्तराऽभाववत्प्रौढ प्रकाशक तेजस्यपि तदभावसत्त्वात्सूर्येऽप्यन्धकारव्यवहाराऽऽपत्तिः॥ तेजोगतगुणक्रियादिषु तेज-

स्वसंयुक्त घटादिसर्वद्रव्य निष्ठ गुणक्रियादिषु चाऽन्धकारप्रत्ययाऽऽपत्तिः । तत्र प्रौढप्रकाशक यावत्तेजस्संसर्गाऽभावस्य सदैव सुलभत्वादिति यत्किञ्चिदेतत् ॥ द्वितीयंनिरस्यति—नाभावइति । अभावश्च प्रकृतभेद्एवेति पक्षस्याऽग्रिमस्वरूपपक्षान्तर्भावाद्व्यावर्तनायाऽन्यइति,प्रकृतभेदातिरिक्तोऽभावो भेदतदधिकरणयोर्योगइति न । कुतः । समत्वात् ॥ तस्यापि निरुपाख्यत्वेन भेदतुल्यत्वाद्धिकरणेन भेदेन च सह सम्बन्धायोगात् । एतेन विशेषणता पदार्थान्तरमिति नवीन तार्किक प्रलापो निरस्तः ॥ तस्य भावाऽभावान्यतरान्तर्भावस्याऽवश्यवाच्यत्वात् । विशेषणताख्यः स्वरूपसम्बन्ध विशेषइति जरत्तार्किक प्रलापमपि निरस्यति—अनुभयेति । स्वरूपसम्बन्ध इत्यस्य=स्वरूपमेव सम्बन्ध इत्यर्थो वा? स्वरूपयोस्सम्बन्ध इति वा? आद्येऽपि तत्तदधिकरणस्वरूपं? भेदस्वरूपम्? उभयस्वरूपंवा? नत्रितयमपि । कुतः । अनुभयमिलनात् । उभाभ्यां सम्बन्धिभ्यां मिलनं सम्बन्ध उभयमिलनं तदभावात् । एकैकस्वरूपस्योभयाऽसम्बद्धत्वात् उभयस्वरूपस्याप्यसम्बद्धस्याऽन्यसाधारणत्वात् उभयाश्रितत्वाभावादनेकत्वाच्च तेषां सम्बन्धत्वायोगादित्यर्थः ॥ द्वितीयेऽप्याह—भावाभावातिरिक्तमिति ॥ तयोः=भेदतदधिकरणयोः भावाभावाभ्यामतिरिक्तं किमपि सम्बन्धरूपं नास्ति । तदुभयभिन्नस्याऽलीकत्वादिति भावः ॥ प्रकृतमुपसंहरन्निष्टसिद्धिं दर्शयति—निस्सम्बन्धेऽपीति ॥ तेन=उक्तदोषगणेन । सम्बन्धस्याभावो निस्सम्बन्धं,अर्थाभावेऽव्ययीभावस्य"अद्रुतायामसंहितं रक्षोहागमलघ्वसन्देहाः प्रयोजनम्" इत्युभयथापि महाभाष्ये प्रयोगेन तत्पुरुषेण सह विकल्पनादव्ययीभावः, तत्पुरुषो वा । अव्ययीभावपक्षे "तृतीयासप्तम्योर्बहुलम्" इति बहुलग्रहणात्सप्तम्या अम्भावोन । सम्बन्धाभावेऽपीत्यर्थः । प्रतीतः= प्रतीयमानः भेदः मृषैव ॥ तत्र दृष्टान्तः=शुक्तौ रजतमिवेति । यथा रजतसम्बन्धशून्यायां शुक्तौ प्रतीयमानत्वाद्रजतं मृषा तद्भेदोऽपीत्यर्थः । अत्र निस्सम्बन्धेऽपि तत्र प्रतीयमानत्वं मिथ्यात्वमिति लक्षणप्रदर्शनेन सम्बन्धविमर्शे गुणगुणिनोः, क्रियाक्रियवतोः, जातिव्यक्त्योः, अवयवावयविनोः, विशिष्टकेवलयोः, उपादानोपादेययोः, आधाराऽऽधेयप्रभृतीनांच सम्बन्धस्य भिन्नत्वाऽभिन्नत्वादिना दुर्निरूपत्वात् सर्वप्रपञ्चस्य मृषात्वे,असङ्गोदासीनमद्वीयकूटस्थचिन्मात्रवस्त्वेव परमार्थसत्यं शिष्यत इति सिद्धान्तरहस्यं सूचितम् ॥ ७ ॥

ननु प्रमाणजन्यप्रतीतिरेव वस्तुतत्त्वसाधिका। सा च घटपटादीनां भेदं ग्राहयति। न च प्रामाणिकोऽप्यर्थो युक्तिसहस्रेणाप्यपलपितुं शक्यः।

युक्तीनामपि प्रमाणाधीनत्वेन उपजीव्यप्रमाणविरोधे आभासत्वौचित्यात्। उपपत्तिरहितानामपि पक्षिमत्स्यादेः निरालम्बनगमन निरुच्छ्वासजीवनादीनां प्रत्यक्षसिद्धानामप्रत्याख्येयत्वादित्याशङ्क्य भेदग्राहिप्रमाणानि विमृश्य निराचष्टे—संयोगादेरिति॥

**संयोगादेरयोगान्न हि भवति भिदा गोचरश्चेन्द्रियाणां**
**व्याप्तिर्नासङ्गताया न भवति सदृशी वाक्यतात्पर्यदूरा।**
**मानाभावो न मानं न च पुनरपरं मानमस्यां तथापि**
**प्रत्यक्षा स्वाप्नमाया नगरमिव भवेत्साधु सैषा मृषैव॥८॥**

तत्र भेदस्याऽऽद्यप्रमाणगम्यतां निरस्यति—संयोगादेरिति॥ भिदा=भेदः। इन्द्रियाणां=चक्षुरादीनां। गोचरः=विषयः न भवति। कुतः? संयोगादेः=न्यायनयप्रसिद्धस्य संयोगसंयुक्तसमवायादेः भाट्टाभिमत संयुक्ततादात्म्यादेश्च संनिकर्षस्यस्य निरुपाख्ये तस्मिन्नयोगात्। न च विशेषणता संनिकर्षोऽस्ति, तस्याः सम्बन्धनिरासेनैव निरस्तत्वात्। तस्मान्न भिदा प्रत्यक्षस्य गोचरः। नाप्यनुमानस्येति दर्शयति—व्याप्तिरिति। अधिकरणविशेषेणाऽसङ्गतायाः=असम्बद्धायाः, 'भिदायाः' इति विभक्तिविपरिणामेन सम्बन्धः। समानोक्तिर्वा। व्याप्तिः=अव्यभिचरित सामानाधिकरण्यलक्षणा, स्वाधिकरणनिष्ठाऽत्यन्ताऽभावप्रतियोगिताऽनवच्छेदकभेदत्वाऽवच्छिन्नसामानाधिकरण्यलक्षणा अन्यादृशी वा व्याप्तिः। क्वचिदपि वस्तुनि न=नास्ति। यद्ग्रहात्सा अनुमीयेतेत्यर्थः। एवं निरुपाख्यत्वादेव व्यापकताऽवच्छेदकधर्मशून्यत्वात्, प्रतियोगिताऽधिकरणत्वाऽसंभवात्, प्रतियोग्यनुयोगिभावसम्बन्धस्यैव विमर्शे दुर्वचत्वाच्च व्याप्तिर्नेत्यपि बोध्यम्॥ नाऽप्युपमानस्येत्याह—न भवतीति॥ गवादिसदृशे गवयादौ हि दृष्टे गोसदृशो गवयइत्यतिदेशवाक्यार्थं स्मरतः प्राग्दृष्टगोपिण्डस्य पुरुषस्योपमितिः प्रसिद्धा। नच निरुपाख्ये भेदे कस्यचित्सादृश्यमस्ति, येनोपमीयेतेति भावः॥ एवं वैधर्म्याऽसाधारणधर्मयोरप्याधारत्वाऽसंभवात्, तत्सिद्धेः प्रमाणगोचरत्वसिद्ध्यधीनत्वाच्च वैधर्म्याऽसाधारणधर्मविशिष्ट पिण्डज्ञा नजन्योपमितिगोचरताऽपि निरसनीया॥ असंनिकृष्टे संनिकृष्टसादृश्यज्ञानमुपमितिरिति भाट्टनयेऽपि वस्तुतस्सदृश एवोपमितिरिति सर्वतो विसदृशी भिदा न तद्गोचरः। नापि शब्दस्य। तत्र लौकिकशब्दस्य प्रत्यक्षादिसिद्धार्थानुवादित्वेन प्रत्यक्षाद्यगोचरेऽप्रसरात्॥ दृश्यमानस्य च नीलं

नभ इत्यादिवद्भ्रान्तिसिद्धानुवादित्वेनाप्युपपत्तेरित्यभिप्रेत्य वैदिकशब्दगोचरत्वं निराचष्टे—वाक्येति॥ वाक्यस्य=वैदिकवाक्यस्य, तात्पर्य=पैदम्पर्यं, दूरं=यस्याः सकाशात्सा। वाक्यतात्पर्यात्स्वयं दूरेति वा। वैदिकवाक्यतात्पर्यगोचरता भेदस्य दूरापास्ता। प्रत्युत "नेह नानास्ति किञ्चन, मृत्योस्स मृत्युमाप्नोति य इह नानेव पश्यति" "एकधैवाऽनुद्रष्टव्यम्" "अत्र भिदामिव मन्यमानः" "उदरमन्तरं कुरुते। अथ तस्य भयं भवति" "यत्र हि द्वैतमिव भवति" "अथ योन्यां देवतामुपास्ते अन्योसावन्योऽहमस्मीति न स वेद यथा पशुः" "सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयं" "यत्र नाऽन्यत्पश्यति नाऽन्यच्छृणोति नाऽन्यद्विजानाति सभूमा" इत्यादि श्रुतिसहस्रैः प्रत्यगद्वयसन्मात्रतात्पर्यकैः प्रतिषिध्यमानत्वादिति भावः॥

ननु क्रियाकारकफलभेदस्य प्रतिषेधे सर्वप्रमाणप्रमेयव्यवहारोच्छेदः, कर्मकाण्डप्रामाण्याऽनुपपत्तिः, गुरुशिष्यशास्त्राऽऽदिद्वैताभावे श्रवणाद्यप्रसिद्धेरुपनिषदामपि प्रवृत्त्ययोगात्प्रामाण्याऽसिद्धिरित्यसंभावना प्रपञ्चनोक्तदोषाणां कः परिहार इति चेत्? शृणु। लोकसिद्धव्यावहारिकभेदोपजीवनेनैव सर्वव्यवहारसिद्धिः। अविद्वद्विषयत्वात् सर्वप्रमाणानां। उपपादितं चैतद्भगवद्भिर्भाष्यकारैः। तथाहि, "ब्राह्मणो बृहस्पतिसवेन यजेत" "राजा राजसूयेन स्वाराज्यकामो यजेत" "वैश्यो वैश्यस्तोमेन यजेत" जातपुत्रः कृष्णकेशोऽग्नीनादधीत"। "एतया निषादस्थपतिं याजयेत्" इत्यादिश्रुतयो लौकिकवर्णाऽऽश्रमवयोवस्थाऽऽदिविशिष्ट देहतादात्म्यमुपजीव्य प्रवृत्ता अपि नाऽप्रमाणं, तात्पर्यविषयीभूते यागादिक्रियाफलयोः साध्यसाधनभावेऽविसंवादात्। तथा क्रियाकारकफलभेदं कर्तृत्वभोक्तृत्वादिकं च वस्तुतो मिथ्याभूतमपि लौकिकसर्वानुभवसिद्धमुपजीव्य प्रवृत्ता अपि। अन्यथा देहाऽऽत्मवादस्याऽपि श्रुत्यनुमतत्वेन वास्तवत्वकल्पना प्रसङ्गात्॥ नचोपजीव्यविरुद्धार्थं श्रुतिरपि कथं निषेधयेदिति वाच्यम्। तात्त्विकप्रामाण्यं शास्त्याऽनुपजीव्यत्वात्, तद्बाधेऽपि व्यावहारिकप्रामाण्यं शास्त्याऽबाधनेन तावन्मात्रस्यैवोपजीव्यत्वेनाऽविरोधात्॥ नच क्रियाकारकफलविभागस्य मिथ्यात्वनिश्चये कर्मसु श्रवणादौ च प्रवृत्त्यनापत्तिः। प्राक्तन्निश्चयात्प्रवृत्त्युपपत्तेः। तादृशपुरुषान्प्रत्येव शास्त्रप्रामाण्योपपत्तेः। निश्चितात्मतत्त्वं प्रत्यप्रवृत्तावपि कृतकार्यायाः श्रुतेर्वैयर्थ्यस्याऽनाशङ्क्यत्वादिति भावः॥ नाप्यनुपलब्धिः तस्यां मानमित्याह—मानाभाव इति॥ उपलब्धिर्ह्यर्थसद्भावाऽवगाहनान्मानं। तदभावश्चाऽनुपलब्धिः। सा च न मानं=न

प्रमाणं। न ह्युपलब्धिरर्थं साधयतीति तद्भावोऽपि तथेति वक्तुं शक्यम्। चक्षुरादेरर्थग्राहित्वं दृष्टमित्याऽऽन्ध्यादेरपि तथात्वकल्पनापत्तेः॥ नच तस्याः स्वतोऽर्थग्राहित्वाऽभावेऽपि प्रतियोगितद्व्याप्येतरयावत्प्रतियोग्युपलब्धिसामग्रीसहकृतत्वरूपयोग्यता विशिष्टाया अभावोपलब्धि जनकत्वमस्त्विति वाच्यम्। अननुगतगुरुतर प्रतियोग्युपलब्धिसामग्रीणां कारणतावच्छेदकत्वाऽनुपपत्तेः। अनुपलब्धिविशिष्टप्रतियोग्युपलब्धिसामग्री वा तद्विशिष्टाऽनुपलब्धिर्वा सामग्रीघटकैकैककारणानि वा प्रत्येकन्तदितरकारणान्यनुपलब्धिविशिष्टानि, वैपरीत्यं वेत्यत्र विनिगमनाविरहेणाऽभावग्रहे प्रमाणाऽऽनन्त्यापत्तेः। अनुपलब्धिमात्रग्राह्यत्व नियमभङ्गापत्तेश्च॥

किञ्च। अन्धकारेऽपि घटाऽभावप्रत्ययापत्तिः। घटाऽऽलोकसंयोगादेर्घटव्याप्यत्वेन तदितरचक्षुरादिसत्त्वात्॥ अपिच। पिशाचचाक्षुषसामग्र्यप्रसिद्ध्या स्तम्भे पिशाचभेदग्रहाऽनापत्तिः। किञ्चाऽनुपलब्धेरप्यभावतया साप्यनुपलब्ध्यन्तरेण सिद्ध्यतीत्येव वाच्यम्। तथाच साप्यन्यया साप्यन्ययेत्यनवस्थानात् अनुपलब्धिरेव स्वयं न सिद्ध्यति दूरे तस्या अर्थसाधकत्वम्। एतेन प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपा तद्योग्यतापि प्रत्युक्ता॥ तर्कस्याऽऽपाद्याऽऽपादकव्यतिरेकनिश्चयाधीनत्वेन अनुपलब्ध्यग्रहे अयोगात्। तद्ग्रहेचाऽनवस्थानात्। यद्यनवस्थाभयादनुपलब्धिः अन्यतस्स्वतो वा सिद्ध्यतीत्युच्येत, तर्हि अभावान्तरमपि तथैव सेत्स्यतीत्यनुपलब्धिकल्पनवैयर्थ्यम्॥ यदि तु सा साक्षिवेद्या, तर्हि स्वाप्नार्थवन्मिथ्यैवेति नार्थसाधिका। अभावान्तराणामपि तथात्वापत्तिश्चेति त्वदभिलषितभङ्ग एवेति भावः॥ अर्थापत्त्यादिगोचरतामपि भेदस्य निराचष्टे—न चेति॥ अस्यां भिदायां, अपरम्=अर्थापत्त्यादिरूपं मानं प्रमाणं च न संभवति। अर्थापत्तेः व्यतिरेकव्याप्तिग्रहाऽधीनत्वेन प्रतियोग्यप्रसिद्धौ व्यतिरेकाऽप्रसिद्धेः। किञ्च। पटे कस्याऽनुपपत्त्या घटभेदः कल्प्येत। पटत्वस्येति चेत्। न। तस्य भेदाऽविनाभावनियामक तज्जन्यत्वादिसम्बन्धाऽप्रसिद्ध्या तत्कल्पकत्वाऽयोगात्। घटत्वाऽभावाऽनुपपत्त्येति चेत्। समनियताऽभावानामैक्येन भेदाऽभावाऽभावरूपत्वेन च तस्य भेदाऽव्यतिरेकात्। व्यतिरेकाऽभ्युपगमेऽपि भेदसमानयोगक्षेमत्वात्सोऽपि कस्याऽनुपपत्त्या पटेकल्प्येतेति प्रष्टुं शक्यत्वात्। कल्पकाऽपरिचयेऽर्थापत्त्यप्रसरात्॥ नापि संभवः प्रमाणं। तस्य सर्वसंमतत्वाभावात्। अभ्युपगन्तॄणामपि संख्यापरिमाणादिमात्रगोचरत्वप्रसिद्धेः अभावग्राहकत्वाऽभावात्॥ एवमुप-

देशानिरपेक्षत्वात् ऐतिह्यप्रमाणगोचरत्वात् तस्य न संशयस्यैवेति भावः ॥ तर्हि सा किमलीकैव? तथा सति न प्रतिभासेतेति शङ्कां वारयन्साक्षिवेद्यत्वपरिशेषणेन तन्मिथ्यात्वं साधयति—तथापीति । तथापि=प्रमाणाऽगोचरत्वेऽपि, प्रत्यक्षा=अपरोक्षत्वेन सर्वानुभवसिद्धा, सा=विमृष्टा, एषा=भिदा, साधु=अतितरां मृषैव॥ तत्र दृष्टान्तः—स्वप्नेति । स्वप्नदृष्टं ऐन्द्रजालिकमायोपदर्शितं वा नगरं यथा साक्षिमात्रवेद्यत्वान्मिथ्या, तद्वदित्यर्थः॥ तथा च प्रयोगः—भेदो मिथ्या, प्रमाणाऽविषयत्वे सत्यपरोक्षत्वात् । स्वप्नगन्धर्वनगरादिवदिति ॥ भेदस्य मिथ्यात्वसाधकयुक्तयः संसर्गाभावेऽपि समाः सुधीभिरूहितुं शक्यन्त इति न पृथक् प्रपञ्चिताः । इत्थं कार्यकारणभेदनिरास प्रसङ्गेन सर्वे भेदाः स्वातन्त्र्येणापि निरस्ताः । प्रथमः सर्वप्रपञ्चकारणत्वश्रुत्युपपादितैः कनककुण्डलन्यायेनापि साम्प्रतिनयुक्तिभिः सर्वप्रपञ्चभेदो निरस्त एवेति कार्यस्वरूपपर्यालोचनमुखेनापि जगन्मिथ्यात्वस्य तर्कैः प्रसाधनाद्द्वितीयश्लोकसिद्धिरिति सर्वतोऽद्विसिद्धिः॥८॥

एवमन्योन्याभावलक्षणे भेदे निरस्ते द्वित्वपृथक्त्वादिरूपस्यापि तस्य निरासे, अयमेवाऽवसरः । तत्र वैशेषिकादयस्त्वेवमाहुः—"संख्याऽऽख्यो गुणः सर्वद्रव्यवृत्तिः, एकत्वद्वित्वबहुत्वभेदात् त्रिधा । तत्राऽवयवगतैकत्वैः अवयव्येकत्वमनित्यद्रव्येषु यावद्द्रव्यभावि जन्यते । नित्यद्रव्येषु तु तन्नित्यमेव । द्वित्वादौ तु विशेषः । घटद्वये चक्षुरादिसंयोगात् अयमेकोऽयमेक इत्यपेक्षाबुद्ध्या द्वित्वोत्पत्तिः । ततो द्वित्वत्वनिर्विकल्पकम्, अनन्तरम् सविकल्पकम्, अनन्तरमिमौ द्वौ घटाविति विशिष्टवैशिष्ट्याऽवगाहि साक्षात्कारः । द्वित्वे प्रत्येकवृत्त्येकत्वद्वयमसमवायिकारणं । द्रव्यद्वयं समवायिकारणम् । अपेक्षाबुद्धिर्निमित्तकारणम् । एवं बहुत्वादावप्यूह्यम् । अपेक्षाबुद्धिनाशाच्च द्वित्वनाशः । अपेक्षाबुद्धिः क्षणचतुष्टयस्थायिनी । एवं पृथक्त्वेऽपि सर्वं बोध्यम्" इति । तन्निराकर्तुमाह—बाह्य इति ॥

मू०॥बाह्योऽर्थो बुद्धिमात्रान्न भवति स भवन्गोचरः स्यात्परेषा

मेकैकं न द्वयंचेदुभयमिति मृषा तद्विशिष्टप्रथा च ।

द्वित्वादेस्सङ्करः स्यान्न खलु भवति ते प्रागभावाद्यवस्था
नापेक्षाबुद्धिक्लृप्तिः सकलमपि शनैर्योज्यमेतत्पृथक्त्वे ॥

अपेक्षाबुद्ध्या द्वित्वं जन्यत इत्यसत् । यतो वहिर्भवो वाह्यः=घटादिप्रदेशवृत्तिरर्थः सत्यवस्तुरूपः, बुद्धिमात्रात्=इच्छाप्रयत्न कायचेष्टाद्यद्वारक ज्ञानात्, न भवति=नोत्पद्यते। उत्पद्यमानश्च मिथ्यैवस्यात्। तथाच प्रयोगः,—द्वित्वादिः मिथ्या, बुद्धिमात्रजन्यवाह्यार्थत्वात्, गिरिशिखरे मनोरथपरिकल्पित प्रासादवत् इति॥ एवं स्वाप्नपदार्थवदेकैक पुरुषमात्रग्राह्यत्वादपि तस्य मिथ्यात्वमित्यभिप्रेत्याह—स इति॥ सः=द्वित्वादिलक्षणोऽर्थः,भवन्=अपेक्षाबुद्ध्या जायमानत्वेन त्वयाऽभ्युपगम्यमानः, परेषां=पुरुषान्तराणाम्, गोचरः=प्रत्यक्षः, स्यात्। वाह्यसत्यार्थस्यैकपुरुषमात्रग्रहणयोग्यस्याऽप्रसिद्धेः। तथाविध शुक्तिरजतादेर्मिथ्यात्वप्रसिद्धेश्चेति भावः॥ स्वसमानाधिकरणाऽत्यन्ताभावप्रतियोगित्व स्वविशेष्यनिष्ठभेद प्रतियोगितावच्छेदकत्वरूप मिथ्यात्वलक्षणयोगादपि द्वित्वादेर्मिथ्यात्वमित्याह—एकैकमिति॥ एकैकत्र न द्वित्वमेकैको नद्वाविति प्रतीतेः एकैकं वस्तु प्रत्येकं न द्वयं=द्वित्वशून्यं, द्वयभिन्नं वेति तवाऽप्यभिमतमेव। एवं चेत्प्रत्येकमनीलयोर्नीलाविति प्रतीयमाननीलरूपवत् प्रत्येकमनुभयस्वरूपयोरुभयमिति प्रतीतं द्वित्वमपि मृषा=मिथ्यैव। द्वौ न द्वौ, द्वयोर्द्वित्वं नास्तीति प्रतीतिर्नास्तीतिचेत् प्रत्येकमनीलयोः द्वावप्यनीलौ, द्वयोरपि नैल्यं नास्तीति वत्, द्वावपि न द्वौ,द्वयोरपि द्वित्वं नास्तीति प्रतीतौ वाधकाऽभावात्। द्वित्वाऽभावप्रकारतायां द्वित्वं विशेष्यतावच्छेदकं नेतिचेत्। न। नेदं रजतमितिवत् रजतं रजतं नेति वाधाऽनुल्लेखात्। वाधे क्वाप्यारोपितस्य रूपस्य विशेष्यतावच्छेदकत्वाऽप्रसिद्धेस्तदनपेक्षणात्॥ किञ्च। सति नीले पाकेन रक्तरूपाऽनिष्पत्तेः व्याप्यवृत्तिगुणस्य समवायेन गुणत्वव्याप्यजात्या सजातीयस्योत्पत्तौ प्रतिवन्धकत्वमवश्यं वाच्यम्। तथाच सत्येकत्वे समवायेन द्वित्वाद्युत्पत्त्यनुपपत्तिः। एकत्वस्य नाशे तस्य यावद्द्रव्यभावित्वसिद्धान्तव्याघातः। प्रत्येकमेकत्व प्रत्ययाऽनुपपत्तिश्च।

किञ्च। यदि प्रत्येकं न द्वित्वं, तर्हि क्व द्वित्वं? द्वयोरिति चेत्। किं तद्द्वयं? द्वित्वान्तरस्य पर्याप्त्यधिकरणं चेदनवस्था। स्वस्यैव चेदाऽऽत्मा-

धयः। स्वाधिकरणविशेषनिश्चये स्वाधिकरणविशेषनिर्णयस्य हेतुत्वाऽऽपत्तेः। अथ च केयं पर्याप्तिः?। स्वरूपसम्बन्धविशेष इति चेत्। विशेषणतातिरेकप्रसङ्गः। अतिरिक्ता चेत्? सा ऽपि प्रत्येकसमवेता कास्ते?। सापि द्वयोः पर्याप्ता चेत्? अनवस्थेति न द्वित्वाऽऽश्रयसिद्धिः। किञ्च। त्वया योग्यविभुविशेषगुणानां स्वोत्तरजन्यगुणनाश्यत्वाऽभ्युपगमात्, द्वित्वसमकालोत्पन्न ज्ञानेन द्वित्वत्वनिर्विकल्पकेन वा अपेक्षाबुद्धिनाशाऽवश्यंभावात् तेन द्वित्वनाशे द्वित्वसविकल्पकं,द्वित्वविशिष्टद्रव्यप्रत्यक्षं वा निर्विषयं स्यात्। तथा च प्रत्यक्षे विषयस्य कार्यसद्भावेन हेतुत्वसिद्धान्तहानिः। तद्भाववति तदवगाहित्वात् ज्ञायिति प्रत्यक्षस्याऽप्रमात्वापत्तिश्च। पूर्वं द्वित्वनानासीदिति तज्ज्ञेय तदवगाहनमिति चेत्। न। तस्कराऽपहृतकुण्डले पुरुषे असौ कुण्डली पुरस्तादास्ते इति शब्दप्रत्यययोः प्रामाण्याऽदर्शनात्। तदानीं घटवति भूतले पूर्वोत्तरकालवर्तिघटाभाववत्त्वमात्रेण घटाभाववदिदं भूतलमिति शब्दप्रत्ययप्रमाणत्वापत्तेः, तुल्यन्यायेन घटवदिदं भूतलमिति शब्दप्रत्यययोरप्रमाणत्वापत्तेश्च प्रतीतिकालिकतत्तद्भाववत्त्वयोरेव प्रमात्वाऽप्रमात्वप्रयोजकताया अवश्यं वाच्यत्वादित्यभिप्रेत्याह—तद्विशिष्टेति। तस्य=द्वित्वस्य विशिष्टधीर्या=सविकल्पज्ञानं द्वित्वविशिष्टद्रव्यप्रत्यक्षं वा मृषा=निर्विषया, अप्रमाण्यादित्यर्थः। अथवा, अपेक्षाबुद्धेर्विनैव प्रमाणं चतुःक्षणावस्थानाभ्युपगमेऽपि दण्डकुण्डलोभयवानिति षष्ठक्षणोत्पन्नज्ञानस्याऽप्रामाण्यं दुर्वारमेव। पञ्चमक्षणेऽपेक्षाबुद्धिनाशेन षष्ठक्षणे द्वित्वनाशादिति भावः॥ किञ्च अयमेकोऽयमेक इत्यपेक्षा बुद्ध्या द्वयोरेव द्वित्वं, त्रिष्वेव त्रित्वमित्यादिनियमः कुतः?। वैपरीत्यस्यापि दुर्वारत्वात्। समवायिकारणादिसाम्ये कार्यवैलक्षण्यं वा कथं?। नन्वेकत्वयोर्द्वयं द्वित्वे, त्रयं त्रित्वे हेतुरिति नियमाद्व्यवस्थेति वाच्यम्। एकत्वे द्वित्वाद्यभावात्। गुणे गुणानङ्गीकारात्। द्वित्वोत्पत्तेः प्राक् द्रव्येऽपि तदभावेन परम्परासम्बन्धेनाऽपि तत्र तस्य दुर्वाच्यत्वात्। अत एव द्वित्वे द्रव्यद्वयं हेतुरित्यपि न, उक्तसंभवाभावादित्यभिप्रेत्याह—द्वित्वादेरिति॥ द्वित्वस्य=आदिपदात्त्रित्वादिसंख्यामात्रस्य च सङ्करः=आश्रयाऽव्यवस्था, एकत्रैव समवधानमवैलक्षण्यं, एकैकस्याऽनेकजात्याक्रान्तता च स्यात्। कारणवैचित्र्यं विना कार्यवैचित्र्याऽयोगात्। योगे चाद्यमेवैतज्जातीयमेव जननीयमिति विनिगमका

भावेन एकैकस्यैवाऽनेकवैजात्यशालि द्वित्वत्रित्वादिसमावेशप्रसङ्गात्। जायमानैकसंख्याव्यक्तेरेव वा लाघवात् द्वित्वत्वत्रित्वत्वाद्यनन्तवैजात्यकल्पनप्रसङ्गादित्यर्थः॥ नच तत्तत्प्रागभावव्यवस्थाभेदाभ्यां कार्यव्यवस्थाभेदवैलक्षण्यानोत्युदयनाचार्योक्तं युक्तम्, प्रागभावस्य कार्यवैलक्षण्याऽप्रयोजकत्वात्, अन्यथा गुणगुणिनोः समानसामग्रीकत्वेऽपि प्रागभावभेदादेव वैलक्षण्योपपत्तेः, समवायिकारणादिभेदकल्पनस्याऽनुभवविरुद्धपौर्वापर्योत्पत्तिकल्पनाप्रयासस्य च नैष्फल्याऽऽपत्तेः। सजातीय कारणजन्यघटादीनां नानाद्वित्वादिव्यक्तीनां च प्रागभावभेदाद्वैजात्यापत्तेः, प्रागभाव तद्भेदयोः प्रतियोगि तद्भेदसिद्ध्यधीनत्वेनाऽन्योन्याश्रयापत्तेः, प्रागभावानभ्युपगमाच्चेत्याशयेनाह—न खल्विति॥ तेन=तत्र प्रागभावाद्व्यवस्था=आश्रयनियमो विविधा अवस्था व्यवस्थेति व्युत्पत्तेर्वैलक्षण्यं च न भवति। खल्विति=दर्शितार्थस्य प्रसिद्धत्वद्योतनाय॥ यत्त्वाहुः—एकत्वान्तरसहितैकत्वेन द्वित्वं, द्वित्वसहितैकत्वेन त्रित्वं, तत्सहितेन चतुष्ट्वमिति। तन्न। द्वयोरेव द्वित्वोत्पत्त्यनन्तरं त्रित्वचतुष्ट्वाद्यापत्तेः। तयोः प्रत्येकमेकत्वस्यापि सत्त्वेन द्वित्वसहितैकत्वस्य तत्रैव सुलभत्वात्। नच द्वित्वाऽसमानाधिकरणैकत्वमेव तथाविधं त्रित्वहेतुरिति वाच्यम्। द्वित्वान्तराश्रयघटैकेन सह द्वयोस्त्रित्वव्यवहाराऽनापत्तेः॥

ननु नानैकत्वविषयिण्या अपेक्षाबुद्ध्या द्वित्वं, द्वित्वतद्व्यक्तिव्यधिकरणैकत्वविषयिण्या त्रित्वं, एवं त्रित्वादि, तद्व्यधिकरणैकत्वविषयिण्या चतुष्ट्वादीनि,कारणवैलक्षण्यादेव द्वित्वत्रित्वादिवैलक्षण्यम्।एवमसमवायिकारणमपि त्रित्वे द्वित्वं तद्व्यक्तिव्यधिकरणैकत्वं चेत्यादि तद्व्यवस्थयैव कार्यव्यवस्थासिद्धिरिति नोक्तदोष इत्याशङ्क्याह-नेति॥ अपेक्षाबुद्धेःक्लप्तिः=इदृशये वाऽस्यांसंख्यायां हेतुरिति निश्चयो नास्ति। उपलक्षणंचैतदसमवायिकारणत्वेनाऽभिमतसंख्यानामप्यनिश्चयस्य। तथाहि—अयमेकोऽयमेक इत्येकरूपया द्वित्वं, अयमेकोऽयमेकोऽयमेक इति वा, इमौ द्वावयमेक इति वा द्विविधया त्रित्वं, एवमेकत्वचतुष्कविषयिण्या इमौ द्वावयमेकोऽयमेकः, इमे त्रयोऽयमेकः, इमौ द्वाविति च चतुर्विधया चतुष्ट्वं च, सर्वैरनुभूयत इति नैकतरैव कारणमिति विनिगमकमस्ति। इत्थं चाऽऽसां सर्वासां

कार्यवैजात्यादिनियामकत्वे द्वित्वस्यैकरूपस्य संभवेऽपि त्रित्वे वैजात्यद्वयं, चतुष्ट्वे वैजात्यचतुष्टयं, पञ्चत्वे वैजात्याष्टकमित्येवं क्रमेणोत्तरोत्तरं-बहुतरवैजात्यवृद्धिरनुगतत्रित्वत्वाद्युच्छेदश्च स्यात् । एवमेव विनिगमनाविरहाद्गणितशास्त्रप्रसिद्ध गुणनभाजन वैचित्र्ययुक्तीनामपि संख्याप्रानहेतूनां संख्यावैजात्यप्रयोजकत्वे द्वित्वादिसर्वसंख्यास्वप्यनन्तवैजात्यानि स्युरिति। एवं तत्तद्द्रव्यसमवेतपूर्वपूर्वसर्वसंख्यानां व्यस्तसमस्तानां स्वस्वन्यूनाऽधिकसर्वसंख्यासु गुणनभाजनादिवैचित्र्येण प्रत्येकमसमवायिकारणत्वे वैजात्यप्रयोजकत्वं च सर्वसंख्यासु प्रत्येकमनियताऽनन्तवैजात्यापत्तिः । कारणीभूतद्वित्वाद्यव्यवस्थया त्रित्वादिष्वव्यवस्थापत्तिश्च बोध्या ॥

नन्वेवमेकत्वस्याप्यनुपपत्तौ अद्वयं ब्रह्मेतिवदनेकं ब्रह्मेत्यप्याऽऽपद्येतेति चेत् । न । तस्येतरनिरपेक्षत्वेन वस्तुस्वरूपत्वात् । परमाणुतदेकत्वयोर्मानाभावेन कारणपरम्पराभङ्गाद् जन्यैकत्वासिद्धेः। आकाशादेरुत्पत्तिश्रवणान्नित्यद्रव्याऽप्रसिद्धया, नित्येऽपि तस्मिन्मानाभावात् । गुणकर्मादिष्विव सर्वत्रापि वस्तुस्वरूपमात्राऽवलम्बनेनैव ऐक्यव्यवहारोपपत्तेः । नचाश्रयगतसंख्ययैव गुणादिष्वेकत्वादिव्यवहारः, न स्वरूपमात्रेणेति साधुः । एकव्यक्तिसमवेतगुणक्रियादिषु एकत्वादिषु चाश्रयैक्यापत्तौ, विनैवाऽऽयासमस्मदिष्टसिद्धयापत्तेः।व्यक्त्यनेकत्वाज्जातिसमवायादिषु द्वित्वादिसर्वसंख्याव्यवहारापत्तेः,एकव्यक्तिगतरूपरसादिषुद्वित्वबहुत्वव्यवहाराऽनापत्तेश्च। तत्रैकत्वं स्वरूपमेवेति यद्युच्येत, तर्हि द्रव्येप्यपि तथैवाऽस्तु ॥ किञ्च । आकाशैकत्वव्यक्तेरेकत्वव्यवहारः किमाश्रयैकत्वव्यक्त्यन्तरात्? उत स्वतः? । आद्ये तस्याप्यन्यत स्तस्याप्यन्यत स्तस्याप्यन्यत इत्यन्योन्याश्रयचक्रकाऽनवस्थाः स्युः । द्वितीये तस्येव घटादीनामपि स्वत एकत्वव्यवहारोपपत्तौ नैकत्वाऽऽख्यसंख्यागुणस्वीकारे प्रयोजनं प्रमाणं वास्तीति मूलोच्छेदादपि न द्वित्वादिसिद्धिः । साधकबाधकसाम्यात्संख्योक्तदूषणानि पृथक्त्वेऽप्यतिदिशति—निखिलमपीति ॥ निखिलं=सर्वमप्येतद्दूषणजातं संख्यायामिव पृथक्त्वेऽपि योज्यं । तस्यापि संख्यावदेव एकपृथक्त्वद्विपृथक्त्वादिभिन्नस्य कारणगतैकपृथक्त्वापेक्षाबुद्ध्यादिजन्यत्वस्य परैरभ्यु-

पगमादित्यर्थः । त्वरयोपन्यासे व्यामोहः स्यादिति शनैरित्युक्तम् । एतेन बहुतरपतन परिस्पन्दाश्रयत्वादि मानसाध्याः परत्वादयः परास्ताः ॥९॥

ननु कनककुण्डलयोरन्योऽन्याऽभावलक्षणो द्वित्वपृथक्त्वादिलक्षणश्च भेदो मास्तु, तथाप्यधिकरणात्मकाऽभाववादिनां प्राभाकरादीनां मत इवाधिकरणस्वरूप एव भेदोऽस्त्वित्याशङ्क्याह—कार्यमिति ॥

**मू०॥कार्यं नाऽन्यन्निदानात्पृथगनधिगमान्न ह्युपादानहेत्वो**
**वैलक्षण्यं तथात्वे न भवति समवायाद्व्यवस्थाऽनुपेतात्।**
**नोचेत्स्वर्णादिकार्ये द्विगुणगुरुतया मूल्यवृद्धिप्रसङ्गो**
**ऽवस्थाभेदाद्विभेदे स्थितिगतिभिदया भेदिनः स्युर्नराश्च ॥**

कार्यं=घटशरावादि, निदानात्=उपादानकारणात् मृदादेः, नान्यत्=स्वरूपतोऽपि भिन्नं न भवति । कुतः । पृथक्=कारणात्पृथग्भावेन, अनधिगमात्=मृदः पृथक्कृत्यघटादेर्दर्शयितुमशक्यत्वादित्यर्थः । ननु क्षीरोदकयोर्मिलितयोः पृथक्करणाऽसामर्थ्येऽपि तत्स्वरूपभेदवदत्राप्यस्त्वित्याशङ्क्याह—नहीति ॥ हि=यस्मात्, तथात्वे=कार्यस्योपादानाऽन्यत्वे सति, उपादानहेत्वोः = उपादानकारणनिमित्तकारणयोः, वैलक्षण्यं=विभिन्नलक्षणत्वं न संभवति । गवाश्वयोरिवाऽत्यन्तभिन्नयोस्तयोः अयुतसिद्धिनियामकस्य दुर्वचत्वात्, स्वतादात्म्याऽऽपन्न कार्यजनकत्वमुपादानत्वं, स्वातिरिक्तकार्यजनकत्वं निमित्तत्वमित्येव उपादाननिमित्तयोर्लक्षणभेदस्याऽवश्यवाच्यतया भेदाभ्युपगमे लक्षणभेदाऽसंभवादित्यर्थः ॥ ननु स्वस्मिन्समवायेन कार्यजनकत्वमुपादानत्वं, तदन्यसम्बन्धेन कार्यजनकत्वं निमित्तत्वमित्येव लक्षणम् । अयुतसिद्धिनियामकश्च समवाय एवाऽभ्युपगम्यत इति चेत् । तत्राह—न भवतीति ॥ "समवायाऽभ्युपगमाच्च साम्यादनवस्थितेः" इति बादरायणदर्शितदिशा निरसनीयत्वेन अनुपेतात्=अनभ्युपगतात्समवयात्त्वदुक्तलक्षणव्यवस्था न संभवत्येवेत्यर्थः । तथाहि—उपादानोपादेययोः, गुणगुणिप्रभृतीनां च न तावत्समवायाख्यः सम्बन्धः संभवति । स हि संयोगवदेव संबन्धिभ्यां भिन्नस्तावाश्रितश्च

वाच्यः। तस्य यद्युभयसम्बन्ध्याश्रितत्वं संयोगवदेव स्वातिरिक्तसमवायेन कल्प्येत, तर्हि तस्यापि पूर्वसमवायसाम्यात्पूर्वसमवायतत्सम्बन्धिनौ चाऽऽश्रयितुं समवायान्तरपर्येषणायां तस्यापि पूर्वाभ्यां साम्यमित्यनवस्था प्रसङ्गात्। किञ्च पटादिद्रव्यस्यैकेन समवायेन बहुभिस्तन्तुभिर्गन्धरसादिभिश्च न सम्बद्धत्वसंभवः। संयोगे तथा अदर्शनात्। अपि च, सत्स्ववयवेषु अवयविनाशस्थले एकसम्बन्धिनि नश्यति सम्बन्धो न नष्ट इत्येतदनुभवविरुद्धं, घटध्वंसाऽधिकरणकपालेषु घटसमवायप्रत्ययाऽऽपत्तिश्च। तदानीं तेषु तत्समवायो नास्तीति चेत्। अनपसृतस्य अनष्टस्य च तस्य तत्र कुतोऽसत्त्वं। सत एव तस्य समवायस्य *तदाऽऽधारतानियामको नेति चेत्। तत्प्रागपि तस्य कपालेष्वाधारतानियामकसम्बन्धस्य दुर्वचत्वेन पूर्वोत्तरकालयोरविशेषात्। अभावीयविशेषणता निरासोक्त युक्तिभिः अनवस्थाप्रसक्त्या च विशेषणता विशेस्याप्युक्तिसंभवाऽभावात्। एवं तन्तुषु प्रागसतः पटसमवायस्योत्पत्तिमन्तरेण कथं पटोत्पत्त्यनन्तरमपि सत्त्वं। तत्राऽनागतस्यानुत्पन्नस्य चाऽसतस्तत्र सत्त्वोक्तेरनुभवपथाऽनारोहात्। अत एवोपहसितं वृद्धैः—

"न याति न च तत्राऽसीदस्ति पश्चान्न चांशवत्।
जहाति पूर्वं नाऽऽधारमहो व्यसनसन्ततिः॥ इति॥

अयं च दोषगणो जातिष्वत्यन्ताभावे च बोध्यः॥ किञ्च। यद्येक एव समवायस्तर्हि तन्तुषु घटः, कपालेषु पटः, अश्वे गोत्वं, गविचाश्वत्वमिति रीत्या सर्वेषां समवेतद्रव्यगुणकर्मजातीनां सर्वद्रव्यगुणकर्मसु समवेतत्वात्सर्वस्य सर्वात्मकत्वे वस्त्वव्यवस्था स्यादिति निष्प्रमाणकात् दुरवस्थिताच्च समवायान्न लक्षणव्यवस्था सिद्धिरिति भावः। कार्यस्योपादानान्यत्वाऽभ्युगमे दण्डान्तरमाह–नोचेदिति॥ कर्षादिपरिमितसुवर्णादेः कार्ये=कुण्डलकटकादौ द्रव्यान्तरभूते कारणगुरुत्वेन तत्सदृशगुरुत्वान्तराऽऽरम्भाद्वापाद्यमानया द्विगुणगुरुतया मूल्यस्य=क्रेतृप्रत्यर्पणीयद्रव्यस्य, वृद्धिप्रसङ्गः द्वैगुण्यं प्रसज्येत। कर्षान्तरसंवलिते गुरुत्वमूलद्वैगुण्यदर्शनादित्यर्थः। कारणगुरुत्वस्य कार्यगुरुत्वेनाभिभवान्न द्वैगुण्यप्रत्यय इति चेत्, अतीन्द्रिये कार्ये प्रतिबन्धातिरिक्ताभिभवनिरूपणासंभवात्, विनिगमनाविरहेण परस्परेण

* तदाधारता=तमालाधारकतेत्यर्थः॥

परस्परकार्यप्रतिबन्धे पतनादिकार्यस्यैवाऽसंभवापत्तेः। पतनादिकार्याऽतिरेकेण तदनुमापकान्तराऽप्रसिद्धेः। तदसंभवे गुरुत्वप्रत्ययस्यैवोच्छेदापत्तेश्चेति भावः॥ नन्वस्तु कनककुण्डलयोरत्यन्ताऽभेदः। तथापि तदभिन्नकुण्डलाद्यवस्था परिमाण भेदात् तदनुरक्त कनकस्वरूपमपि भिन्नमेवोच्यतां। अन्यथा वैचित्र्यबुद्धेर्निरालम्बनत्वापत्तेः। अवस्थाभेदेऽपि कनकैकाकारप्रत्ययस्तु कनकत्वजात्यैक्यनिबन्धनो भविष्यतीत्याशङ्क्याह—अवस्थाभेदादिति। पिण्डकुण्डलाद्यवस्थादिभेदात् कनकादिवस्तुभेदे उच्यमाने स्थितिगत्युपवेशनाद्यवस्थाभिदया देवदत्तादयो नराः=मनुष्याश्च प्रत्येकं प्रतिक्षणं भेदिनः=भेदवन्तः स्युः॥ तथा च देवदत्तस्योपविष्टस्योत्थाने तदवस्थस्य मरणात्, उत्थितस्य च जन्मत आशौचजातकर्मादिप्रसङ्गः। उपविष्टस्य मरणहेतावुत्थाने इच्छाऽयोगात् सर्वपुरुषाणां स्पन्दनानुपपत्तिश्च। यदि तेष्ववाधितप्रत्यभिज्ञावलादभेदः, तर्हि प्रकृतेऽपि तुल्यम्। अवस्थानां तु भेदाभेदादिना दुर्वचत्वेन मिथ्यात्वमेव। एवमाश्रयात्पार्थक्येन उत्पत्ति विनाश निरवयवत्व सावयवत्व परिस्पन्दाऽपरिस्पन्द व्याप्ति विछित्ति व्यासक्ति पर्याप्तिसाङ्कर्याऽसांकर्यादिना दुरवधारण स्वभावत्वात् आवश्यकानुगतोपादानेनैवाऽनुगतकनकादिबुद्धिनिर्वाहाच्च तार्किकाभिमत नित्यजातिपदार्थोऽपि निरसनीयः। तत्रापि "न याति नच तत्राऽऽसीदिति" श्लोकोक्तदोषसाम्यादिति नाऽधिकरणस्वरूपोऽपिभेदः प्रामाणिक इति सर्वोपादानसन्मात्रवस्त्वैक्यं सिद्धमिति भावः॥ १० ॥

ननु वस्तुनोऽत्यन्ताऽभेदे कार्यकारणभावप्रत्ययः किं निबन्धन इत्याशङ्क्य सोऽपि मायिकाऽवस्थाभेदपर्यालोचननिबन्धनो न वास्तवः, तदन्वयव्यतिरेकाऽनुविधानादिति दर्शयन्

"तस्मात्संभावनामात्रः संसारः प्रत्यगात्मनि।
उक्तेऽर्थे संशयश्चेत्स्यात्प्रत्यग्दृष्ट्या निरीक्ष्यताम्॥"

इति॥ वार्तिकोक्तप्रत्यग्दृष्टिप्रकारोपदर्शनेन निष्प्रपञ्चं सन्मात्रमनुभावयति—पिंडाऽवस्थेति॥

मू०॥ पिण्डाऽवस्थाघटत्वे मनसि विमृशतो हेतुकार्यत्वधीःस्या
न्मृन्मात्रं यद्वदेकं स्फुटमभिमृशतो नैव हेतुर्न कार्यम्।
तद्वन्मायिप्रपञ्चौ मनसि कलयतो ब्रह्म विश्वस्य हेतुः
सन्मात्रन्त्वेकरूपं पटुपरिमृशतो नैव मायी न विश्वम्॥

पूर्वोत्तरोभयाऽवस्थाऽनुगतं हि मृद्वस्तु प्राक्तनपिण्डावस्थापन्नं कारणमित्युच्यते, पश्चात्तनं घटावस्थापन्नं तु कार्यमिति। तत्र पूर्वतनीं पिण्डावस्थां पश्चात्तनं घटत्वं=घटावस्थां च मनसि विमृशतः=विभेदेनाऽनुसंदधानस्य पुरुषस्य वस्तुतो भेदशून्येऽपि मृद्वस्तुन्यवस्थाद्वयाऽनुषङ्गमपेक्ष्य हेतुकार्यत्वधीः=कार्यकारणभावलक्षणभेदग्राहिणी बुद्धिः स्यात्। प्रार्थकालतायां लिङ्। एवं=उभयावस्थानुगतं मृदमेव=मृन्मात्रं स्फुटं=अवस्थाद्वयविविक्तं, परिमृशतः=पर्यालोचयतः पुरुषस्य पूर्वोत्तरावस्थयोर्मृद्व्यतिरेकेणाऽसत्त्वप्रतीतेः, स्वरूपमात्रनिष्ठे मृद्वस्तुनि चाभिन्ने कार्यकारणभावासंभवात्, हेतुः=कारणं नैवाऽस्ति=नास्त्येव, एवं कार्यमपि नास्ति, वास्तवरूपपर्यालोचने मायिकरूपतिरोभावादित्यर्थः। यथाऽयं दृष्टान्तः—तद्वन्मायी=मायासंवलितः परमात्मा प्रपञ्चस्य पूर्वावस्था "सदेव सोम्येदमग्र आसीत्" इति श्रुतेः। प्रपञ्चश्चोत्तरावस्था "तद्धेदं तर्ह्यव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियत" इति श्रुतेः। तौ=मायिप्रपञ्चौ द्वैतवासनावासिते मनसि कलयतः=अतिसंदधानस्य पुरुषस्य "तदेतद्ब्रह्माऽपूर्वमनपरम्" इत्यादिश्रुतेः वस्तुतः कार्यकारणभावनिर्मुक्तमपि ब्रह्म विश्वस्य=जगतः, हेतुः=उपादानमिति धीरपि स्यात्। वस्तुतो मायिप्रपञ्चयोः सर्वाऽनुगतसद्व्यतिरेकात्, सदेवैकरूपं सन्मात्रं ब्रह्म पटु=द्वैतवासनाऽनास्कन्दितं यथास्यात्तथा परिमृशतः=सर्वत्र पश्यतः पुरुषधौरेयस्य, मायी=मायाविशिष्टः जगत्कारणं, नैव=नाऽस्त्येव, तथा विश्वं=जगदपि नाऽस्त्येव। मायिप्रपञ्चयोः सदविचारमात्रसिद्धत्वेन विचारपूर्वकदर्शने सत्येव तिरोधानादिति भावः॥ यथाहुः—

"दन्तिनि दारुविकारे दारु तिरोभवति सोऽपि तत्रैव।
जगति तथा परमात्मा परमात्मन्यपि जगत्तिरोभवति॥" इति॥

श्रुतिरपि—"कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते।" "मनसैवेदमाप्तव्यं" "नेहनानास्ति किञ्चन" "पूर्णमदः पूर्णमिदम्" इत्यादौ तदेव बोधयतीति॥ ११॥

ननु यदि ब्रह्मैव सत्यमितरत्सर्वमनृतं, तर्हि कथं जगति सत्यता प्रतीतिरित्याशङ्क्य देहादावात्मताप्रत्ययवत्सत्पदार्थे जगदध्यासात्तद्धर्मेणैव तथाप्रतीतिरिति लौकिकदृष्टान्तेन बोधयति—सन्कुम्भ इति॥ अथवा—ननु घटशरावादौ मृन्मृदित्यनुगतप्रत्ययवज्जगति प्रतिवस्तु न ब्रह्माऽनुगतिः प्रतीयते। तत्प्रतीतौ जाड्यदुःखानुभवविरोधादित्याशङ्क्य विरुद्धचित्सुखरूपानुगमादर्शनेऽपि अध्यस्तरूपाविरुद्ध सत्तांशाऽनुगतिर्दृश्यत एवेति सदृष्टान्तमुपपादयति—सन्कुम्भ इति॥

**सन्कुम्भः सत्कुसूलं सदखिलमिति यद्भाति यच्च श्रुतं प्राक्**
**तत्सत्यं व्याप्य विश्वं घटपिठरमुखं मृत्तिकेवाऽवभाति।**
**तस्मिन्रज्जाविवाऽहिर्निखिलमपि जगत्कल्पितं तत्स्वभावा**
**त्तन्मात्रं तत्पृथक्त्वे ह्यसदिदमखिलं स्यात्तदेव ह्यभेदे॥१२॥**

कुम्भः=घटः सन्=सत्यः, एवं कुसूलं=मार्तिकं धान्याऽऽवपनं सत्=सत्यमिति रीत्या, अखिलं=जगत्, सत्=सत्यमिति यत्सर्वत्रैकं सद्रूपं भाति, यच्च सृष्टेः प्राक् "सदेव सोम्येदमग्र आसीत्" "तद्धेदं तर्ह्यव्याकृतमासीत्" "आत्मा वा इदमेक एवाऽग्र आसीत्" "अहमेकः प्रथममासं वर्तामि च भविष्यामि च" इत्यादिश्रुतिषु नित्यसत्ताबोधकेन असधातुना सदेकस्वभावं वस्तु श्रुतं तदेव मायिप्रपञ्चोभयानुगतमुभयाधिष्ठानरूपं सत्यं, तदेव मृत्तिका=मृत्, घटपिठरमुखं=कुम्भस्थालीशरावादि स्वकार्यजातमिव कृत्स्नं प्रपञ्चं व्याप्य अवभाति=प्रथते॥ तर्हि मृदिव किं ब्रह्मापि सविकारं नेत्याह—तस्मिन्निति॥ तस्मिन्=सद्रूपे ब्रह्मणि, निखिलमपि जगत्कल्पितं=अध्यस्तमित्यर्थः। रज्जुगतऋजुवक्रतादेस्तदध्यस्तसर्प इव विवर्तेऽपि जगति अधिष्ठानसत्तानुवृत्तिसंभवादिति भावः॥ ततः को लाभ इत्याशङ्क्येष्टसिद्धिरित्याह—तदिति॥ तत्=ब्रह्मैव स्वः=स्वीयः भावः=तत्त्वं यस्य जगत स्तत्तत्स्वभावं भावप्रधानो निर्देशः। तथात्वादि-

स्यर्थः। तन्मात्रं=ब्रह्ममात्रं तद्व्यतिरेकेण जगन्नास्तीत्यद्वितीयमद्वस्तुसिद्धि-रित्यर्थः॥ उक्तेऽर्थे प्राग्दर्शितयुक्तीरपि स्मारयन्नुपसंहरति—तदिति॥ हि=यस्मात्। तत्पृथक्त्वे=सद्रूपादन्यत्वे, इदमखिलं=जगत् असत्स्यात्, सतः अभेदे तु सदेकरूप्यात् तद्ब्रह्मैव जगत्सम्पन्नमित्युभयथापि प्रतिज्ञाताऽद्वितीय सन्मात्ररूपलक्ष्यसिद्धिरित्यर्थः ॥ १२ ॥

ननु यदि ब्रह्मसत्तयैव जगत्सत्ता न स्वतः,तर्ह्यापणस्थरजते शुक्तिरजते च मिथ्यात्वेनाऽविशिष्टे एकस्यैवाद्यनीमेव बाधो, लोके मिथ्यात्वव्यवहारश्च, अन्यस्य तु नेति वैलक्षण्यं कुतः? इत्याशङ्क्य सदृष्टान्तमुपपादयति—एकैवेति ॥

मू०॥एकैव ब्रह्मसत्ता व्यवहृतिविषये शुक्तिरूप्यादिके च
ख्यांत्याऽऽद्ये सत्यमेतज्जगदिति धियमाब्रह्मबोधाद्विधत्ते।
यावत्स्फूर्ति द्वितीये प्रथितमिव पटस्फाटिके रक्तरूपं
माञ्जिष्ठं साधु रक्तः पट इति न मृषा स्फाटिके तन्मृषेति॥

अधिष्ठानब्रह्मसत्ता व्यवहृतिविषये=कटकनूपुरादिनिर्माणरूपस्य क्रयविक्रयादिरूपस्य च व्यवहारस्य विषये=निर्वाहके आपणस्थरजतादौ प्रातिभासिक शुक्तिरूप्यादिके च तत्तत्प्रतीतिकाले ख्यान्ती=भासमाना एकैव=न भिन्ना। तथापि आद्ये=आपणस्थरजतादिव्यावहारिके जगति, आब्रह्मबोधात्=सर्वाधिष्ठानब्रह्मसाक्षात्कारं मर्यादीकृत्य, तावत्कालमित्यर्थः। एतत्=प्रत्यक्षादिदृश्यं जगत् सत्यं=वास्तवमेवेति धियं=प्रतीतिं विधत्ते=जनयति। तद्बाधकसाक्षात्कारस्याऽनुदयादित्यर्थः। द्वितीये=शुक्तिरूप्यादिके तु यावत्स्फूर्ति=तत्प्रतिभासकालमभिव्याप्यैव सत्यमेतदिति धियं विधत्त इत्यनुपज्यते, तद्बाधकशुक्त्यादिसाक्षात्कारस्योत्तरकालमेव समीपोपसर्पणे संभवादित्यर्थः। तथा च बाधकसमवधानविलम्बशैघ्र्याभ्यामेव लोके सत्यमिथ्यात्वव्यवहारव्यवस्थेति भावः। तत्र दृष्टान्तः—यथा माञ्जिष्ठं=मञ्जिष्ठा रञ्जकद्रव्यविशेषः तत्सम्बन्धिरक्तरूपं, पटश्च स्फटिकस्य विकारः स्फाटिकं च तयोः समाहारे पटस्फाटिके। प्रथितं=प्रतीतं वस्तुतो रञ्जकद्रव्यनिष्ठस्यैव पटस्फाटिकयोरारोपितत्वाविशेषेऽपि रक्तः पट इति

अर्थो ज्ञानं च न मृषा=नमिथ्या, किन्तु साधु=यथार्थमेव। अतः प्रत्युत तत्संवीतपुरुषे "असौ शुक्लवासाः" इति व्यवहरन्तं पुरुषं लोकाः भ्रान्तोऽसीत्याहुः। यत्परिधानादौ "शुक्लवासाश्चरेद्व्रतम्" इत्यादिविधयो विगुणाः। "लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इत्यादिविधयश्च साङ्गा भवन्तीति। स्फाटिके तु तत्=रक्तः स्फटिक इत्यर्थो ज्ञानं च मृषैव=अयथार्थमेवेति यथा तद्वदित्यर्थः।

अयं भावः—व्यावहारिकरजतादेर्निरवच्छिन्ने शुद्धचैतन्येऽध्यासात् तन्मात्राऽऽश्रयविषयकमूलाऽज्ञानकार्यत्वाच्च निरवच्छिन्नशुद्धचैतन्यगोचरब्रह्मसाक्षात्कारादेव बाधः। प्रातिभासिकरजतादेस्तु शुक्त्याद्यवच्छिन्नचैतन्येऽध्यासात् तादृशचैतन्यमात्राऽऽश्रयविषयावस्थाऽज्ञानकार्यत्वाच्च शुक्त्याद्याऽऽकारवृत्त्या तदवच्छिन्नचैतन्याऽऽवरणभङ्गे शुक्त्यादौ वृत्तिव्याप्त्या चिदुपरागेण वा शुक्त्यादिसाक्षात्कारेणैव बाध इति विशेष इति। अत्र "भग्नावरणविषयावच्छिन्नचैतन्यमेव विषयाऽवभासकं।" "विषयप्रतिफलितमेव विषयाऽवभासकम्" इति भामतीविवरणकृतोर्मतभेदः। आद्ये आवरणभङ्ग एव वृत्तिफलम्। द्वितीये तु अस्वच्छतमे घटादौ स्वतश्चित्प्रतिबिम्बोदयाऽयोगात्स्वच्छतमान्तःकरणवृत्तिव्याप्तौ काचरसोपलिप्तकुड्यादौ सौराऽऽलोकादि प्रतिबिम्बग्राहित्ववत् चित्प्रतिबिम्बग्रहणसंभवाच्चिदुपराग एव वृत्तिफलमिति द्वैविध्यमुक्तम् ॥ १२ ॥

नन्विदमिति सामान्याकारेण स्फुरति शुक्तित्वादिविशेषाकारेणाऽऽवृते शुक्त्यादौ रजताद्यारोपो दृष्टः, तथा ब्रह्मण्यपि सामान्यविशेषांऽशद्वयसद्भावे सांशत्वापत्तिः, निरवयवत्वश्रुतिव्याकोपः, अनित्यत्वाऽऽपत्तिश्च। निरंशत्वे तु तत्र जगदध्यासाऽनुपपत्तिः। किञ्च, ब्रह्म यदि सदेकरूपमेव, तर्ह्यपुरुषार्थः स्यात्, सुखस्यैव पुरुषार्थत्वात्। तस्यापि परकीयस्यांऽतथात्वात् अपरोक्षतापि तद्घटिकाऽवश्यं वाच्या। यदि तु पुरुषार्थत्वोपपादनाय सदपरोक्षाऽऽनन्दांशा ब्रह्मणि स्वीक्रियेरन्, तर्हि एकरसत्वहानिः। न च तेषामंशानामत्यन्ताऽभेदाददोष इति वाच्यम्। तथा सति "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतिषु सत्यज्ञानादिपदानां पर्यायतया ज्ञानादिपदानां वैयर्थ्याऽसहप्रयोगादिप्रसङ्गात्। लोके सच्चिदंशयोरानन्दांशव्यभिचारित्व-

स्य सर्वांशे चिदंशाव्यभिचारित्वस्य न दृष्टान्तेनैक्यसंपादनाऽयोगात्॥ किञ्च, यदि सत्तैव चिदानन्दौ, तर्हि सत्सद्विति जगज्ज्ञायमानमानन्दरूपमेव भातीत्यद्वयं स्यात्। दुःखस्य स्पृहणीयत्वाऽऽपत्तिश्च। अतः सदिति सदंशसाक्षात्कारे जाते ब्रह्मणि ज्ञातत्वरूपान्तराऽपरिशेषात्, तत्साक्षात्कारो वृत्त एवेति मूलाज्ञानोच्छेदे सर्वजगद्बाधाऽऽपत्तिरित्याशङ्काः परिहरिष्यन्नैकरस्येऽपि सामान्यविशेषांशभेदमुपपादयति—सच्चिदिति ॥

मू० ॥ सच्चित्सौख्यैकरस्येऽप्यनृतजडमहादुःखमोहाऽन्यभावा-
त्सत्यज्ञानादिवाक्यव्यवहृतिविषये कल्पिते रूपभेदे ।
शुक्तीदंतेव सत्ता स्फुरति समरसा कल्पितेनाऽनुविद्धा
शुक्तित्वादीवमायाऽऽवरणपरिभवाच्चित्सुखत्वेन भातः॥

सच्चित्सौख्यानां=सत्यज्ञानाऽऽनन्दांशानां एकरसः=सारः अबाध्यत्वाज्ञानानन्दरूपतादात्म्यात्मा तद्भाव ऐकरस्यं तस्मिन्नद्वितीयात्मब्रह्मस्वरूपत्वे सत्यपीत्यर्थः। तथाविधस्य तस्याऽव्यवहार्यत्वात्तच्छब्दप्रयोगादिव्यवहारमन्तरेण च शिष्यबोधनाऽसंभवात् व्यावर्तकधर्मशून्यवस्तुनो व्यावर्तनीयविरुद्धरूपकल्पनमन्तरेण अनृतजडदुःखात्मकाऽविद्यादिप्रपञ्चाद्विविच्य बोधयितुमशक्यत्वाच्च बोधनार्थप्रवृत्तानां "सत्यं ज्ञानमनन्तं ब्रह्म" "नित्यं विज्ञानमानन्दं ब्रह्म" इत्यादिवाक्यानां बोध्यबोधनव्यवहारोपपादकत्वात् व्यवहृतिविषये=अनाद्यविद्याकल्पिते सत्यज्ञानत्वसुखत्वरूपभेदे॥ निर्धारणे सप्तमी॥ भिद्यमानरूपेषु मध्ये इत्यर्थः। रूपभेदे कल्पिते सतीति वा॥ भेदकल्पनायां हेतुमाह—अनृतेति। अनृतः=मिथ्याभूतः, जडः=स्वासिद्धावन्यसापेक्षः, महादुःखः=नित्यंप्रतिकूलवेदनीयश्च यो मोहः=अज्ञानं तस्मादन्यभावात्=स्वतो व्यावृत्ततद्विरुद्धस्वभावत्वादित्यर्थः। अयं भावः—किमनाद्यविद्याध्यासेऽधिष्ठानस्य सामान्यविशेषांशापेक्षा, उत कार्याध्यास एव? नाद्यः, अनादेरन्वयव्यतिरेकानुविधानाऽयोगेन तद्योगक्षेमाऽनिर्वाहकस्यांऽशद्वयस्याऽपेक्षाविरहात्। द्वितीये त्वनृत जडदुःखरूपैरधिष्ठानवस्तुविरुद्धया अविद्ययेवाभिन्नेऽपि वस्तुनि तत्सापेक्षद्वैरूप्यकल्पनया आवृताऽनावृतांशप्रयुक्तकार्याध्याससिद्धेर्वास्तवांशाऽपेक्षाऽभावात्॥ न च कल्पितांशभेदस्याऽध्या-

सोपयोगो न दृष्टचर इति शङ्क्यम्। शुक्तिकेदमंशस्यैव तथाभूतस्य तद्दर्शनात्। नहि शुक्तिकाया इदमंशो नाम कश्चिदवयवो गुणो जातिर्वा वास्तवोऽस्ति। किंतु पुरोवर्तिदेशकालसंनिकर्षादिसम्बन्धं कादाचित्कमपेक्ष्याऽवास्तवेनैव भेदेनाऽभिन्नशुक्तिस्वरूपमेव इदमनिदमिति चाख्यायत इति तद्वत्प्रकृतेऽपीष्टसिद्धेरिति। तथाचाऽभिन्नमेव वस्तु अनृतविरुद्धस्वभावमिति सत्यपदेन, स्वसिद्धावन्यनिरपेक्षमिति चित्पदेन, नित्यानुकूलवेदनीयत्वात् प्रतिकूलवेदनीय विरुद्धस्वभावमित्याऽऽनन्दपदेन च तत्तद्विरोधिरूपविवेचनायाऽभिधीयत इति भावः॥ नचाऽविद्याऽधीनांशभेद कल्पनाया अध्यासत्वाऽविशेपात् तत्राप्यावृतानावृतांशान्तराऽपेक्षायामनवस्थेति वाच्यम्। अविद्याया इवांऽशभेदकल्पनाया अप्यनादित्वेनाऽदोपात्।

इत्थं रूपभेदे कल्पिते सति तत्राऽनावृतमधिष्ठानसामान्यांशं सदृष्टान्तं दर्शयति—शुक्तीदंतेवेति। तस्मिन् रूपभेदे सत्ता=सद्रूपं, कल्पितेन=अध्यस्तेन जगद्रूपेण, अनुविद्धा=धर्मसंसर्गाऽध्यासान्मिलिता, धर्मितादात्म्याऽध्यासात् समरसा=घटत्वादिजगद्रूपसमस्वभावा। स्फुरति=घटपटादिसर्ववस्तुपु घटस्सन्, पटस्सन्नित्येवं रूपेण सर्वप्रत्ययेपु प्रथते। तत्र दृष्टान्तः—शुक्तीदंतेवेति। यथा शुक्ताविदं रजतमित्यध्यासे शुक्तीदंता कल्पितरजतसंसृष्टा तादृशरजतत्वसमरसाच स्फुरति, तद्वदित्यर्थः॥ नचैवं सत्ताया अपि कल्पितत्वे तस्या जगद्रूपाऽविशेप इति वाच्यम्। सद्वस्तुन एव धर्मधर्मिभेदकल्पनेन धर्मत्वस्य जगद्रूपाऽन्तः प्रवेशेऽपि तस्या वस्तुस्वभावभूतायास्तदप्रवेशात्। आवृतविशेषांशावपि तथैव दर्शयति—शुक्तित्वादीवेति। यथा दर्शितदृष्टान्ते शुक्तित्वत्रिकोणत्वाऽरजतत्वादयो विशेषांशा अज्ञानाऽऽवृतत्वात् रजतभ्रमदशायां न भासन्ते, तद्वद्ब्रह्मण्यपि मायागताऽऽवरणशक्त्या परिभवात्=प्रतिबद्धत्वात् तिरोहितत्वादित्यर्थः। चित्सुखत्वे=चैतन्याऽऽनन्दांशावपि, न भातः=न स्फुरतः, यावद्ब्रह्मसाक्षात्कारोदयमित्यर्थः।

अयंभावः—न तावत्सच्चिदानन्दांशानां ब्रह्मणि वास्तवो भेदः संभवति। अबाध्यत्वं हि सत्त्वं। स च बाध्यत्वाऽभावोऽधिकरणस्वरूप एव॥

न च सत्ताजात्यादिकमेव सत्त्वमिति युक्तम्। तथासति तत्सम्बन्धस्यैव जगत्यपि सत्सदिति प्रतीतिनिर्वाहकत्वस्याऽवश्यं वाच्यतया सत्तायां सत्ताश्रयत्वाभ्युपगमेऽनवस्थानात्। अनभ्युपगमे च सत्ताजातेरेवाऽसत्त्वापत्तौ तया अन्यसत्त्वनिर्वाहाऽयोगात्। एवमर्थक्रियाकारित्वेऽप्यर्थक्रियान्तरकारित्वेऽनवस्था, नोचेदसत्त्वापत्तिरिति न तदपि जगत्सत्त्वमिति बोध्यम्। किञ्च। स्वतो बाध्यस्य धर्मसहस्रैरपि त्राणाऽसंभवः। स्वत एवाऽबाध्यं वस्तु चेत्। अतिरिक्तसत्ताजातिकल्पना गौरवो व्यर्थ इति स्वरूपमेव सत्त्वम्। एवं स्वपरप्रथायामन्यनिरपेक्षत्वं चित्त्वं, तदपि स्वयंज्योतिरात्मस्वरूपमेव। स्वतो जडस्य धर्मसहस्रैरपि स्वरूपपरिवर्तनाऽसंभवात्। एवमानन्दरूपत्वमपि निरुपाधिप्रीतिप्रयोजकं नित्यानुकूलाऽऽत्मस्वरूपमेव। स्वतः प्रतिकूलस्य धर्मशतैरप्यनुकूलयितुमशक्यत्वात्रिति कल्पनापेक्ष एव तेषां भेदः। लोके सच्चिदंशयोरानन्दांशव्यभिचारादिरपि कल्पिताऽऽभेदतद्व्यावरणादिवशादेव, श्रौतसच्चिदानन्दपदानामपर्यायतापि वाच्यतावच्छेदकं कल्पितरूपभेदमादायैव। पर्येकपदोपादाने आविद्यकविरुद्धनैरूप्यव्यावर्तनासिद्धेरिति प्रपञ्चितमेव॥ नचैवमाविद्यकघटत्वाद्यनन्तरूपव्यावर्तनायापि ब्रह्मणितद्रूपविरुद्धांशभेदकल्पनपदान्तरोपादानापत्तिः। अस्थूलादिवाक्यैरनन्तादिपदैश्च स्थौल्यादितद्व्यापकरूपनिषेधेनैव तद्व्यावृत्तेरपि सिद्धेः। अत एव हि "आनन्दादयः प्रधानस्य" "अक्षरधियां त्ववरोधः" इत्यधिकरणयोर्भावाऽभावलक्षणसकलव्यावर्तकगुणोपसंहारो भाष्यकृद्भिर्दर्शितः।

> "नित्यशुद्धो बुद्धमुक्तस्वभावः सत्यः सूक्ष्मः सन्विभुश्चाऽद्वयश्च।
> आनन्दाब्धिर्यः परस्सोहमस्मि प्रत्यग्धातुर्नात्र संशीतिरस्ति॥"

इति वृद्धैः सङ्ग्रहेणोक्तः॥ यद्यपि घटः सन्नित्यादिप्रत्ययेष्वपरिच्छेदसौक्ष्म्याद्यंशा अपि न भासन्ते, तथापि स्फुटत्वाद्वक्ष्यमाणेन पुरुषार्थोपयोगित्वेन प्राधान्याच्च चित्सुखत्वे नभात इत्येतावदेवोक्तं। तदभानादेव तद्विरुद्धप्रपञ्चाऽध्यासोपपत्तिः, तत्र सामान्यांशभानोपपत्तिश्चेति भावः॥ नच कल्पिताऽधिष्ठानांऽशविरुद्धांऽध्यासोऽप्रसिद्धः, वास्तवशुक्तित्वाद्यंशविरुद्धस्यैव रजतादेरध्याससिद्धेरिति वाच्यम्। स्वतः सांमुख्यवैमुख्य-

बिम्बत्वप्रतिबिम्बत्वरहितेऽपि मुखे पुरस्स्थितदर्पणापेक्षाकल्पिततत्सांमुख्य-विरुद्धस्वसांमुख्यस्य, कल्पितबिम्बत्वविरुद्धप्रतिबिम्बत्वस्य चाऽध्यासदर्शनात् ॥ नच दर्पणे ग्रीवास्थमुखातिरिक्तं मुखान्तरमेवाऽध्यस्यत इति युक्तम्। दर्पणाऽऽवरकाऽज्ञानस्य दर्पणाऽपरोक्षादेव नाशात्, दर्पणे तदाऽऽवरणीयांशान्तराऽप्रसिद्धेश्च, तत्र मुखारोपाऽसंभवेन ग्रीवास्थ एव मुखे दर्पणप्रतिघातपरावृत्त नयन रश्मिसंनिकृष्टे दर्पणस्थत्वप्रतिबिम्बत्वाद्यारोप इत्यस्यैव न्याय्यत्वात्। एवं स्वस्थानस्थितवृक्षादौ स्वतो दक्षिणेतरभावशून्ये व्यवहर्तृपुरुषसूर्योदयाद्युपाधिपरिकल्पितदक्षिणोत्तरादिभावमपेक्ष्य दिङ्मोहे तद्विरुद्धधर्माऽऽरोपदर्शनाच्च, वास्तवांशभेदविरुद्धस्यैवाऽऽरोप इति नियमाभावात् ॥ यत्तूक्तं सत्सदिति जगद्भासमानमानन्दरूपमेव भातीत्यहेयं स्यात्, दुःखस्यापि स्पृहणीयत्वापत्तिश्चेति। नैष दोषः। वस्तुतश्चित्सुखाऽभिन्नसद्रूपस्यैव जडदुःखाऽऽत्मकप्रपञ्च संवलनेन स्फुरणे सत्सुखांशभेदवासनावासितचेतसां प्रबलतरतिक्तसंसृष्टमधुररसस्येव, अस्पृहणीयत्वेनाऽपुरुषार्थत्वद्वेष्यत्वयोरुपपत्तेः। अत एव हि द्वेष्यतमरजस्तमोंशाऽल्पत्वे सात्त्विकस्रगादिजन्यान्तःकरणवृत्तौ सुखात्मनैव सत्तास्फूर्तिर्देहेन्द्रियादौ प्रेमाचाऽनुभवसिद्ध उपपद्यते। परमपुरुषार्थत्वं च सर्वोपाधिनिर्मुक्तसन्मात्रवस्तुनः स्वसाक्षात्कारप्रध्वस्ताऽऽवरणविक्षेपस्य आनन्दैकरसस्य तस्यैवेति न कश्चिद्दोषः ॥ १४ ॥

इत्थं श्रुत्यनुगुणैस्तर्कैरद्वितीयत्वं ब्रह्मणो व्यवस्थाप्य इदानीं साक्षाच्छ्रुतितात्पर्योद्घाटनेनापि तद्व्यवतिष्ठापयिषुः तटस्थलक्षणमुखेन सृष्टिश्रुतीनामद्वितीयब्रह्मबोधकत्वे लौकिकं दृष्टान्तमाह—पृष्ट इति।

**पृष्टे "कोऽस्मिन्समाजे नरपतिरिति" यो मत्तमातङ्गपृष्ठे**
**मुक्ताजालान्तराले शशिधवळलसच्छत्रमूले स्फुरन्सः।**
**इत्युक्तः पुंविशेषं सपदि परिच्छिनोत्येष राजेति सर्वं**
**मुक्त्वैकं येन पश्यन्नमुमपरविधं सैष राजेति वेत्ति॥१५॥**

केन चिदनभिज्ञपुरुषेण राजस्वरूपपरिचयेच्छुना तदभिज्ञपुरुषान्तरे अस्मिन्=परिदृश्यमाने सैनिकसमाजे नरपतिः=राजा कः? इति पृष्टे सति

तद्भिन्नपुरुषेण यो मत्तस्य=मदयुक्तस्य मातङ्गस्य=गजस्य, पृष्ठे,तादृशेगजान्तरस्याऽपि प्रधानाऽऽयधिष्ठितस्यसंभवात् मुक्तेति। मुक्तानां=मौक्तिकानाम् यज्जालं=जालकं चतुरस्रं दोलाकारं तस्याऽन्तराले मध्य इत्यर्थः। राजपुत्रादीनामपि तत्संभवात् तद्व्यावर्तनाय शशीति। शशी=पूर्णचन्द्रः तत्रैव स्फुटं शशाकारलाञ्छनदर्शनात् स इव धवलं=शुभ्रं, सुवर्णकलशप्रवालदण्डादिभिर्लसत्=शोभमानं यच्छत्रं तस्यमूले=छायाप्रदेशे स्फुरन्=विचित्राऽऽयुधाऽऽभरणाम्बरादि प्रभाभिःनिजतेजसा च दीप्यमानो यः स राजा इत्यनेन प्रकारेणोक्तः=लक्षणोपन्यासेन प्रतिबोधितः श्रोता, सपदि=तत्कालमेव सर्वं=मत्तमातङ्गादिलक्षणजातं स्वस्याऽजिज्ञासितं वक्तृतात्पर्याऽविषयीभूतं चेति मुक्त्वा=विहाय तदुपलक्षितमेकं=पुरुषान्तरव्यावृत्तं पुंविशेषं=विजातीयसंस्थानं पुरुषमेव, एष राजेति सपदि=तत्कालमेव, परिचिनोति नोक्तसर्वलक्षणविशिष्टमेवेत्यर्थः॥ नन्वेतत्कथं ज्ञायते तत्राह—येनेति। येन=हेतुना, अयं=परिचेता अमुं=राजानं देशान्तरे कालान्तरे च अपरविधं=पूर्वदृष्टलक्षणशून्यं, अन्यलक्षणाक्रान्तं च जलक्रीडायासक्तमङ्गनासहस्रमध्यगतं, मुच्यमानचिकुरचयं मवलुप्यमानमाल्याङ्गरागं, मदविघूर्णिताऽरुणलोचनमपि पश्यन्स एवैष राजेति वेत्ति=प्रत्यभिजानीते। अतो लोके छत्रादिलक्षणस्य राजस्वरूपाऽघटकस्यापि तदितराऽसम्बन्धादन्यव्यावर्तकत्वमात्रेण तल्लक्षणत्वं प्रसिद्धम्। एवं 'लोहितोष्णीषः पीतवासाः स्रग्वी देवदत्तः' इत्यादि लौकिकलक्षणवाक्यान्यप्युदाहर्तव्यानि ॥ १५ ॥

दृष्टान्तमुपपाद्य तथैव दार्ष्टान्तिके प्रकृतलक्षणवाक्येऽपि परमार्थसद्वस्तुलक्षकत्वात्तल्लक्षणत्वमिति दर्शयति—वर्णिता इति।

**वर्णिता विविदिषादियन्त्रणात्पुंविशेषमिव लक्षणोक्तयः।**
**विश्वसर्गविषयाऽऽगमाः परं लक्षयन्ति निरवद्यचिद्घनम् ॥१६॥**

एवं वर्णिताः=विविच्य दर्शिताः लौकिक्यो लक्षणोक्तयः=लक्षणवाक्यानि, श्रोतृबुभुत्सावक्तृतात्पर्यानुरोधान्मत्तमातङ्गाद्युपलक्षितं पुंविशेषं=सर्वतो व्यावृत्तगजाद्यखण्डपुरुषव्यक्तिमात्रमिव, विश्वसर्गविषयाऽऽगमाः="यतो वा इमानि" इत्यादिजगत्सृष्ट्यादिगोचरवेदान्तवाक्यान्यपि, निरवद्यचिद्घनम्=निरस्तमायादिद्वैतदोषं="तद्यथा सैन्धवखिल्यः" इत्यादिश्रुत्यु-

पपादितं चैतन्यैकरसंप्रत्यग्ब्रह्म, लक्षयन्ति=जगतस्त्रैकालिकतद्व्यतिरेकात् तन्मात्रत्वमिति मिथ्यात्वसमर्थनमुखेनाऽनुभावयन्तीत्यर्थः। नच प्रष्टुः पूर्वमेव कश्चिदत्र राजास्ति सच पुरुष इति ज्ञातत्वादितरव्यावृत्तिमात्रं जिज्ञासितं,न तत्स्वरूपमिति वाच्यम्। तथाच सति को राजा? इतिप्रश्नाऽनापत्तेः। सामान्यतः स इतरव्यावृत्त इत्यपि ज्ञातत्वात्, अन्यथा अत्यन्ताऽप्रसिद्धायां व्यावृत्तावपि जिज्ञासायोगात्, विशिष्याऽप्रसिद्धेश्च राजस्वरूपेऽपि साम्यादित्याद्यखण्डार्थविमर्शे विस्तरेणोपपादयिष्यामः॥ नन्वत्र राजस्वरूपमात्रप्रश्नानुसारात् उत्तरत्र पुरुषमात्रदर्शनेनापि प्रत्यभिज्ञादर्शनाच्च लौकिकलक्षणवाक्यस्य पुरुषस्वरूपमात्रलक्षकत्वमस्तु, यतो वेत्यादिवाक्येतु "अधीहि भगवो ब्रह्म" इतिप्रश्नवाक्यस्य सविशेषब्रह्मपरत्वं निर्विशेषब्रह्मपरत्वं वेत्यत्र नियामकाभावात्, उत्तरत्र जगज्जन्मादिकारणत्वोपन्यासेन प्रश्नस्यापि कारणत्वविशिष्टविषयत्वप्रतीतेः, श्वेताश्वतराणामुपनिषदि "किं कारणं ब्रह्म कुतः स्म जाताः" इति तद्विशिष्टस्यैव प्रश्नदर्शनाच्च, एवं "कुत आजाता कुत इयं विसृष्टिः" "न तं विदाथ य इमा जजान" इत्यादिश्रुतिषु कारणत्वविशिष्ट एवाऽज्ञानजिज्ञासयोरभिलापाच्च, निर्विशेषस्य लक्ष्यत्वे श्रुतहान्यश्रुतकल्पनादिदोषप्रसङ्गाच्च, सविशेषस्यैव लक्ष्यत्वमुचितमित्याद्याशङ्का निरासाय वाक्यस्य निर्विशेष एव तात्पर्यग्राहकं दर्शयति—विविदिषादियन्त्रणादिति॥ वेदितुमिच्छा विविदिषा आदिपदात् उपक्रमादिषड्विधतात्पर्यलिङ्गानि, तैः समानप्रकरणस्थस्फुटतरश्रुत्यन्तरैश्च निर्विशेष एव तात्पर्यनियमनादित्यर्थः।

अयं भावः—व्रात्यनास्तिकादेरनधिकारादधीतसाङ्गवेदः श्रद्धालुर्विवेकी श्रवणादावधिक्रियत इत्यविवादम्। तस्य च "निर्गुणं निष्क्रियं शान्तं" "एकमेवाद्वितीयं नेह नानास्ति किञ्चन" "अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" "यत्र नाऽन्यत्पश्यति नाऽन्यच्छृणोति नान्यद्विजानाति स भूमा" "यत्तदद्रेश्यमग्राह्यं अपूर्वमनपरं" "न तस्य कार्यं करणंच विद्यते" "नतत्समश्चाऽभ्यधिकश्च दृश्यते" "गुहाशयं निष्कलमद्वितीयं" "नान्तःप्रज्ञं न बहिःप्रज्ञं" "अस्थूलमनणु" इत्यादिश्रुतिवाक्याध्ययनस्याऽवर्जनादद्वितीयनिर्विशेषाऽऽत्मज्ञानमेव मोक्षहेतुरित्यापाततो ज्ञानस्याप्यनिवार्य-

स्वात्, निर्विशेष एव जिज्ञासासंभवात्, "अधीहि भगवो ब्रह्म" इत्यत्र "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिना पूर्ववल्युपपादितनिर्विशेषस्यैव प्रत्यभिज्ञानात्, उत्तरत्र यतो वा इत्यादिना कारणत्वोपन्यासस्य तटस्थलक्षणत्वेनाप्युपपन्नत्वात्, यावत्स्वरूपलक्षणाधिगमं जिज्ञासाऽनुवृत्तिदर्शनात्स्वरूपपरिचयमात्रेण जिज्ञासाऽशान्तेश्च निर्विशेषस्यैव प्रश्न इति स्पष्टमवगमात्। एवं "किं कारणं ब्रह्म" इत्यादिवाक्येष्वपि यत्कारणं ब्रह्म तत्किं स्वरूपम्? इत्येव प्रश्नतात्पर्यं, न तु कारणत्वांशेऽपि। तत्स्वरूपे निश्चिते तद्धर्मकारणत्वांशे जिज्ञासाऽपरिशेषात् अनिश्चिते च तस्यैव प्रश्नतात्पर्यगोचरत्वकल्पनौचित्यात्। कारणं जगतः किञ्चिद्वस्त्वीत्यनिश्चित्य किं कारणमिति प्रश्नायोगात्, कारणत्वमात्रांशे जिज्ञासोक्तौ च कथं कारणमिति प्रश्नाऽऽपत्तेश्च। किञ्च। उत्तरत्र—

"ते ध्यानयोगाऽनुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च॥"

"मायां तु प्रकृतिं विद्यात्" इत्यादिना कारणत्वादेर्मायाशक्तिमात्रनिर्वाह्यत्वप्रदर्शनात् "न तस्य कार्यं करणं च विद्यते" "एक एव रुद्रो न द्वितीयाय तस्थे" इत्यादिना कारणत्वादिसर्वद्वैतप्रतिषेधेन पुनःपुनः परामृष्टस्याऽन्ते

"निर्गुणं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्।
अमृतस्य परं सेतुं दग्धेन्धनमिवाऽनलम्॥"

इति निष्प्रपञ्चस्यैवोपसंहाराच्च प्रकरणस्य तन्मात्रपरत्वनिश्चयात्। सविशेषपरत्ववादिन एव श्रुतहान्यादिदोषो नाऽस्माकम्। एवं "न तं विदाथ" इत्यज्ञानलिङ्गिवाक्यस्याऽपि स्वरूपमात्राज्ञानोपदर्शकत्वं, जजानेति लिङा जनकत्वांशे पारोक्ष्यप्रतिपादनेनैवाऽज्ञातत्व सूचनेन पुनरज्ञातत्वकीर्तनस्य स्वरूपमात्र विषयत्वपर्यवसानात्, पौर्वापर्याऽऽलोचनाच्च स्पष्टं प्रतीयते। तथा "को अद्धा वेद क इह प्रवोचत्" इत्यवाङ्मनसगोचरत्व प्रदर्शनादपि "कुत आजाता" इत्यादिवाक्यस्य कारणतत्त्वनिर्विशेषमात्रगोचराऽज्ञानाऽनुवादित्वं नाऽन्यदिति भावः॥ १६॥

ननु तटस्थलक्षणपरत्वेनाऽभिमतानि "यतो वा" इत्यादिवाक्यानि

कथं निर्विशेषं लक्षयेयुः किं शक्त्या? उत लक्षणया वा? नाऽऽद्यः। पदानां प्रवृत्तिनिमित्तमनन्तर्भाव्य शक्यार्थोपस्थापनाऽसामर्थ्यात् वाक्यार्थबुद्धेः पदार्थोपस्थित्यन्यूनविषयत्वसंसर्गगोचरत्वनियमात्,शाब्दनिर्विकल्पकाऽसंप्रत्ययात्, उद्देश्यविधेयभावयोरखण्डेऽयोगाच्च। अत एव न द्वितीयः। बीजाऽभावाच्च। तथाहि–न तावद्गङ्गायां घोष इति वदन्वयानुपपत्तिःअत्र लक्षणा बीजं। योग्यताद्यबाधात्। नापि यष्टीः प्रवेशयेत्यादि वाक्यवत्तात्पर्यानुपपत्तिः। पूर्वोत्तरसंदर्भव्यतिरेकेणाऽलौकिकवाक्यस्याऽलौकिकेऽर्थे तात्पर्यग्राहकमानान्तराऽप्रसरात्, पूर्वोत्तरवाक्यानामपि वाक्यत्वाऽविशेषेण संसर्गगोचरत्वादिनियमेन निर्विशेषतात्पर्यग्राहकत्वाऽयोगात्। अवान्तरवाक्यसंदर्भस्यैव उपक्रमादिशब्दार्थत्वेन तस्य निर्विशेषबोधकत्वाऽसिद्धौ इदं वाक्यं निर्विशेषतात्पर्यकं निर्विशेषोपक्रमादिघटितत्वात्, इत्याद्यनुमितेरप्यसंभवात्॥ किञ्च। किं सर्वाणि पदानि निर्विशेषं लक्षयेयुः? उत ब्रह्मादिपदमेव?। आद्ये विभिन्नविभक्तिकनानापदैः एकार्थलक्षणाऽयोगात्, नानार्थानां च विभक्त्यर्थानद्वारीकृत्याऽन्वयाऽयोगात्, तद्द्वाराऽन्वये चाऽभेदान्वयेऽनाकाङ्क्षत्वात्, क्रियाकारकभावादिसंसर्गे च निर्विशेषत्वस्याऽयोग्यत्वात् वाक्यकदर्थनापत्तेः। अभिलषिताऽसिद्धेश्च। अत एव न द्वितीयः। विशेषणाऽन्वयाऽयोग्यमर्थं विशेष्यपदं लक्षयतीत्युक्तिसंभवाऽभावाच्च। पक्षद्वयेऽपि जगज्जन्मादिकारणत्वस्य वाक्याद्ब्रह्मण्यनवगमेन तस्य तटस्थलक्षणत्वोक्तिव्याघातात्। तस्यापि बोधने युगपद्वृत्तिद्वयस्वीकारविरोधात्,वाक्यभेदाऽऽपत्तेश्च॥ नच भट्टमते "वायुर्वै क्षेपिष्ठा देवता" इत्यादिपदानां परस्परान्वयेन विशिष्टार्थबोधकत्वेऽपि निष्प्रयोजनत्वात् प्रधानीभूतविध्येकवाक्यत्वाऽनुरोधाच्च अखण्डप्राशस्त्यलक्षकत्ववत् जगज्जन्मादिकारणत्वविशिष्ट सगुणब्रह्मबोधनद्वारा वाक्यमेव तादृशकारणत्वोपलक्षिताऽखण्डनिर्विशेषवस्तुलक्षकमस्त्विति वाच्यम्। वायुक्षेपिष्ठत्वादिवाक्यवदस्याऽन्यशेषत्वाऽभावेन वैषम्यात्। पदवद्वाक्यस्यापि पदार्थमात्रपरत्वे तद्वदेव पदार्थान्तरान्वयसाकाङ्क्षत्वापत्त्या प्रामाण्यायोगात्। भट्टमतेऽर्थवादानां शाब्दीभावनेतिकर्तव्यताभूतप्राशस्त्यपदार्थलक्षकाणां पदैकवाक्यतयैव विध्यन्वयसिद्धान्तेन वैषम्यात्। लक्ष्यतावच्छेदकरूपाऽनाक्रान्ते लक्षणाप्रवृत्त्ययोगाच्चेत्या-

घाशङ्क्य पदलक्षणापक्षदूषणान्यनभ्युपगमेनैव परिहरन्वाक्यलक्षणापक्षसमर्थनेन निर्विशेषे तटस्थलक्षणसमन्वयं दर्शयति—तत्त्वमिति।

मू० ॥ तत्त्वमर्थवदत्र यद्यपि नाऽन्वयानुपपत्तिधी-
र्नाप्यभिन्नपदार्थकत्वमतः पदेषु न लक्षणा।
भेदसङ्गतिकानि तानि समेत्य सत्यचिदद्वयं
तत्पराणि हि लक्षयेयुरुपक्रमाद्यनुसारतः॥ १७ ॥

यद्यप्यत्र=तटस्थलक्षणे तत्त्वमर्थवत्="तत्त्वमसि" इति महावाक्यस्थ तत्त्वंपदवाच्यसर्वज्ञत्वकिञ्चिज्ज्ञत्वादिविरुद्धधर्मविशिष्टेश्वरजीवरूपपदार्थयोरिव पदार्थानां परस्परमन्वयाऽनुपपत्तिज्ञानं नास्ति। नापि प्रकृष्टप्रकाशादिवाक्यवत् अभिन्नपदार्थकत्वं, अभेदान्वययोग्यसमानविभक्तिकपदोपस्थाप्यार्थकत्वं अत्यन्ताऽभेदशालिपदार्थकत्वं वाऽत्रास्तीति, अतः=तदुक्तदोषात्, पदेषु प्रत्येकं नलक्षणा=लक्षणा नाभ्युपगम्यत इत्यर्थः। तथाचाऽनभ्युपगमपक्षे दोषोपन्यासश्रमस्तत्र वृथैवेति भावः॥ तर्हि कथमभिलषितसिद्धिस्तत्राह—भेदेति। यद्यपीति दर्शनात्तथापीत्यध्याहार्यम्। तथापि तानि="यतोवा" इत्यादिपदानि, आकाङ्क्षाद्यनुरोधेन भेदसङ्गतिकानि="जनिकर्तुः प्रकृतिः" इत्याद्यनुशासनात्, जन्मादिक्रियाकारकभावादिभेदसम्बन्धेन परस्परान्वितानि सन्ति समेत्य=जगज्जन्मादिकर्त्रऽभिन्नोपादानकारणत्वविशिष्टैकार्थप्रतिपादनेन एकवाक्यतामापद्य, सत्यचिदद्वयं="सर्वं खल्विदं ब्रह्म" इति श्रुत्यन्तरोपदर्शितदिशा वक्ष्यमाणरीत्या च तादृशकारणत्वबललभ्यसत्यज्ञानाऽऽनन्दाऽद्वितीयमखण्डं ब्रह्म लक्षयेयु=लक्षणया बोधयेयुः। तत्कुतः? हि=यस्मात्कारणात्। तानि उपक्रमाद्यनुसारतः

उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥

इति पूर्वाचार्योपदर्शित षड्विधलिङ्गाऽनुरोधात्, तत्पराणि=सत्यचिदद्वयाऽऽनन्दब्रह्मैकतात्पर्यकत्वेन प्रमितानीत्यर्थः। दण्डिपुरुषे शुद्धपुरुषस्येव जगत्कारणत्वविशिष्टे मायाशबलब्रह्मणि शुद्धस्याप्यन्तर्भावात् एकदेशत्वलक्षणस्य अधिष्ठानत्वलक्षणस्य च लक्षणसमसत्ताकसम्बन्धस्य शुद्धेऽपि

सत्त्वान्न लक्षणत्वाऽनुपपत्तिः। लक्ष्यव्यक्त्यननुगतावेव तदनुगमाय लक्ष्यतावच्छेदकापेक्षानियमात्, अखण्डैकव्यक्तावनुगमकापेक्षाविरहात्, भागत्यागलक्षणायां चोपस्थितार्थैकदेशत्यागव्यतिरेकेण अर्थान्तरोपस्थित्यपेक्षाभावेन शक्यार्थोपस्थित्या सम्बन्धितावच्छेदकरूपेणाऽशक्यार्थोपस्थापनायापि लक्ष्ये धर्मानपेक्षणात्, लक्षणसमसत्ताकलक्ष्यतावच्छेदकोक्तिसंभवाच्च न लक्षणाया अप्यनुपपत्तिः। वाच्यार्थसंसर्गबोधोत्तरकालं लक्षणाभ्युपगमाच्च न वाक्यभेदाऽऽपत्तिः, वाक्यमुख्यतात्पर्यविषयनानात्व एव वाक्यभेदनियमात्। विशिष्टविधौ विशेषणेष्विव द्वारभूतवाक्यार्थे अवान्तरतात्पर्यसत्वेपि दोषाऽभावात्। अत्रत्याऽवान्तर तात्पर्यसिद्धं सविशेषं ब्रह्मोपजीव्यैव हि दहराद्युपास्तिविधयः, फलप्रदेश्वरसिद्ध्यधीनकर्मविधयः, मन्त्रार्थवादस्मृतिपुराणादिषु जगदीश्वरमाहात्म्यवर्णनानि च प्रवृत्तानीति बहवः। केचित्तु—नास्त्येवाऽवान्तरतात्पर्यं, तथापि ज्ञानानां स्वतः प्रामाण्यात्प्रमाणान्तराऽविरोधाच्च "वज्रहस्तः पुरन्दरः" इत्याद्यर्थवादेभ्यः प्राशस्त्यमात्रतात्पर्यकेभ्यो देवताधिकरणन्यायेन इन्द्रादिविग्रहसिद्धिवदसत्यपि सविशेषतात्पर्ये व्यावहारिकसगुणब्रह्मसिद्धिः। तदुपजीव्यैव उपास्तिविध्यादिप्रवृत्तिश्चेत्याहुः॥ अपरे तु दहरादिविद्यासु तत्र तत्राऽवान्तरवाक्यतात्पर्यात्, विशिष्टविधौ विशेषणांशेऽप्यवान्तरतात्पर्य कल्पनाद्वा सिद्धस्य सगुणेश्वरस्य निर्विशेषप्रकरणस्थजगत्कारणत्वादिलक्षणवैशिष्ट्येनाऽनुवादः तद्द्वारा निर्विशेषप्रतिपत्त्यर्थ इत्याहुः॥ यत्तु सृष्टिवाक्यानामन्यशेषत्वाभावेन वायुक्षेपिष्ठात्वादिवाक्यवैषम्यमित्युक्तं। तन्न। वक्ष्यमाणरीत्या "सत्यं ज्ञानम्" इत्यादिवाक्याऽवगतसत्यत्वाऽऽनन्त्ययोरुपपादकत्वेन, महावाक्यान्तर्गततत्पदार्थव्युत्पादकतया वा तच्छेषत्वस्य स्पष्टत्वात्। वायुक्षेपिष्ठत्वादिवाक्यवत्सर्गादिवाक्यानामपि भूतार्थवादत्वाऽविशेषात्स्वार्थमात्रपर्यवसाने प्रयोजनाभावाच्च अन्यशेषतां विना गत्यभावात्॥ नच वाक्यस्यैकपदार्थस्वरूपमात्रपरत्वाऽनुपपत्तिः। तथासति लक्षणवाक्यमात्रोच्छेदप्रसङ्गात्। "यत्परः शब्दः सशब्दार्थः" इति न्यायाज्जिज्ञासानुरोधाच्च सास्नादिमती गौः गन्धवती पृथिवीइत्यादि लक्षणवाक्यानामपि सर्वतो व्यावृत्ताखण्डगवादिस्वरूपमात्रार्थत्वात्। व्युत्पादयि-

श्रते चाखण्डार्थता–प्रकृष्टप्रकाशादिवाक्येष्विति। साकाङ्क्षत्वं तु अवान्तरवाक्यार्थस्य महावाक्यैकवाक्यतायामनुकूलमेव न तु प्रतिकूलम्। महावाक्यस्य तु पदार्थमात्रनिष्ठत्वेऽपि दशमस्त्वमसीत्यादिवत्तद्गोचराऽज्ञाननिवर्हणेन जिज्ञासानिवर्तनात् पुरुषार्थपर्यवसानाच्च नान्याकाङ्क्षाप्रसक्तिः॥ न च वाक्यान्निर्विशेषबोधाऽसिद्धिः, तादृशजिज्ञासातात्पर्ययोः सतोर्वारयितुमशक्यत्वात्। अन्यथा महावाक्यान्मदभिमतनिर्विशेषाऽबोधे तव तदपलापस्य तन्निरासोपायान्वेषणस्य चाऽनुदयप्रसङ्गात्। इत्थंचोपक्रमादेरपि तन्मात्रविषयत्वं सिद्धमिति न तात्पर्यग्राहकत्वाऽसंभव इति भावः॥ १७॥

ननु यदि निर्विशेषमेव श्रुतेर्बोधयितुमिष्टं, तर्हि किमर्थं सविशेषं तत्र तत्र सा प्रस्तौति? किमर्थं वा प्रतिशाखं प्रतिप्रस्तावं च सृष्ट्यादीनेव मुहुः कीर्तयति?। नच प्रान्दर्शितवाक्ये मत्तमातङ्गादीनामिवाऽसाधारणलक्ष्यस्वरूपपरिचयार्थमेव तत्कीर्तनमिति वाच्यम्। "सत्यं ज्ञानमनन्तं ब्रह्म" "नित्यं विज्ञानमानन्दं ब्रह्म" "अस्थूलमनणु" "यत्र नान्यत्पश्यति नान्यच्छृणोति" इत्यादिस्वरूपपरवाक्यैरेव तत्परिचयसंभवात्। अन्यथा तटस्थलक्षणेनैव तत्परिचये स्वरूपलक्षणवैयर्थ्यात्। न च तटस्थलक्षणेन स्वरूपलक्षणपरिचयः तेन च लक्ष्यपरिचय इति परम्परयोपयोगः अस्य स्वरूपलक्षणस्य तु साक्षादेवेत्युभयसार्थक्यमिति वाच्यम्। अनेनैव साक्षाल्लक्ष्यपरिचयसंभवेन "गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्" इति न्यायेन चाऽस्य स्वरूपलक्षणशेषत्वाऽयोगात्॥ किञ्च। स्वरूपलक्षणवज्जगज्जन्मादिकारणत्वस्यापि ब्रह्मणि श्रुत्यैकसमधिगम्यत्वेन स्वविशिष्टलक्ष्यपरिचायकत्वात्कोहेतुः तटस्थलक्षणत्वे, परित्यागे वा। यदि तूभयरूपताविरोधाल्लक्ष्यासामञ्जस्यं, तर्हि सर्गादिश्रुतेः कोऽभिप्राय इत्याशङ्क्य तत्तात्पर्यं सङ्क्षेपतो वर्णयति—अक्षेति॥

मू९॥ अक्षजादिबहिःप्रमाणसमेधितद्वयविभ्रमे
जाग्रति श्रुतिरद्वयप्रतिबोधने सहसाऽक्षमा।
व्यावहारिकवस्तुजातमिदं मृषेति विवक्षया
प्रक्रियां रचयांबभूव विसृष्टिसंहृतिलक्षणाम्॥ १८॥

अक्षेभ्यः=इन्द्रियेभ्यः जातः, आदिपदादनुमानादिभ्योऽपि जातो यो बहिर्वस्तुमात्रगोचरप्रमाणैः समेधितः=अनादिकालादारभ्य सम्यगत्यन्तदाढर्घेन एधितः=वर्धितः, यो द्वयविभ्रमः=द्वैतगोचरः अन्तःकरणदेहेन्द्रियपुत्रमित्राद्यभिमानलक्षणो विविधभ्रमः, तस्मिन् जाग्रति=इदमेव परमार्थसत्यं नान्यादृशं स्वरूपमस्तीति श्रोतृबुद्धौ विजृम्भमाणे सति, पुरुषार्थाय प्रवृत्ता निरपेक्षप्रमाणभूतापि श्रुतिः सहसा=विरोधिभ्रममनपाकृत्यैव, अद्वयस्य=सर्वद्वैतप्रपञ्चविधुरस्य सच्चिदानन्दैकरसस्य प्रत्यग्ब्रह्मणः, प्रतिबोधने=सप्रपञ्चमूलाऽज्ञानप्रतिकूलाऽखण्डाकारवृत्तिजनने, अक्षमा=असमर्था सती तदुपायत्वेन इदं=बाह्यप्रमाणगम्यं, व्यावहारिकवस्तुजातं=व्यवहारकालमात्रव्याप्तिसत्तास्फूर्तिकं पदार्थवृन्दं, मृषा=परमार्थसद्वस्तुव्यतिरेकेण नास्तीत्येवं, विवक्षया=तात्पर्येण, विसृष्टिसंहृतिलक्षणां=सृष्ट्यादिकल्पनारूपां प्रक्रियां रचयांबभूव=विरचितवतीति, बोधोपायमात्रत्वान्न तत्रैव श्रुतेर्निर्भर इत्यर्थः। अयंभावः,—त्रिविधपरिच्छेदशून्यसत्यज्ञानानन्दस्वरूपं हि ब्रह्म श्रुतेर्बुबोधयिषितं.तत्रोक्तपरिच्छेदशून्यत्वस्य सर्वबाधाऽवधित्वलक्षणाऽलौकिकसत्यत्वस्य च न सर्वद्वैतबाधमन्तरेण संभवः। न च द्वैतस्य प्रत्यक्षादिभिः सत्यत्वाऽवधारणदशायां बाधः संभावयितुं शक्यः। नच द्वितीयवस्तुमात्राऽबाधे अद्वितीयत्वलक्षणमानन्त्यं सुवचमिति। तथा ब्रह्मबोधने उपायान्तरमपश्यन्ती श्रुतिः द्वैतबाधोपपादनाय प्रथमं प्रपञ्चस्य सावयवत्वादिना संभावितकर्तृपादानकस्य ब्रह्मैवाभिन्ननिमित्तोपादानमाकाशादिक्रमेणेति प्रतिपाद्य तद्बुद्धौ स्थिरायां कार्यस्य कारणाऽनन्यत्वोपपादनन्यायेन विकाराऽनृतत्वप्रदर्शनेन प्रथमं पञ्चभूतमात्रतां परिशेष्य ततस्तेषामपि स्वस्वप्रकृतिपूर्वपूर्वभूताऽनतिरेकोपदर्शनक्रमेण परमार्थसत्यब्रह्मव्यतिरेकेणाऽसत्त्वं दर्शयति ॥ अयमेव हि श्रुतेरभिप्राय इति चाऽऽविश्चकार भगवान्सूत्रकारः—"तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यादिना। इत्थं च सविशेषप्रस्तावोऽपि तदुपजीव्य तत्रतत्रानुषङ्गिकोपासनाविध्यर्थः प्रवृत्तो न स्वप्राधान्येन। अनयैव प्रक्रियया दर्शितवस्तुस्वरूपस्य श्रोतुर्बुद्ध्यारोहाय जन्मादिकारणत्वस्य तटस्थलक्षणता, स्वरूपलक्षणोपपादकता च, स्वरूपस्य च लक्ष्यभूतस्यैव लक्षणत्वोपचारात् पारार्थ्याऽभावेन न तटस्थलक्षणसमन्वं, नापि वैयर्थ्यमिति नकश्चिद्दोष इति ॥१८॥

ननु सूत्रकृता "अथातो ब्रह्मजिज्ञासा" इतिप्रतिज्ञाय जिज्ञास्यं ब्रह्म किं स्वरूपमित्याकाङ्क्षायां "जन्माद्यस्य यतः" इति लक्षणाभिधानात्तन्मूलभूतयोः "तद्विजिज्ञासस्व" "यतो वा" इत्यादिश्रुत्योरपि सूत्रसमानार्थकत्वौचित्यात् जन्मादिकारणत्वं स्वरूपलक्षणमेव किं न स्यादिति कस्यचिन्मन्दमतेराशङ्कां परिहरन्नुपक्रमादिप्रदर्शनेन सर्ववेदान्तगतसृष्टिशास्त्राणामद्वितीये ब्रह्मणि तात्पर्येण समन्वयं विदर्शयिषुराद्यौ स्वगतार्थागोपनिरवमनुगामति—ब्रह्मेति ॥

मू० ॥ ब्रह्म सच्चिदानन्दमेकमशेषवाङ्मनसाऽतिगं
पञ्चकोशगुहान्तरं च निगद्य शश्वदलौकिकम् ।
तद्विसृज्य विवेश सत्यमसत्यमित्युभयं स्वतः
सत्यमित्यभिधायिनी श्रुतिरद्वयं स्फुटमभ्यधात् ॥ १९ ॥

उपक्रमे "ब्रह्मविदाप्नोति परम्" इति सर्वोत्कृष्टपुरुषार्थप्राप्तये ज्ञातव्यत्वेन प्रस्तुतं ब्रह्म किं स्वरूपमित्याकाङ्क्षायां श्रुत्यैव "तदेषाऽभ्युक्ता, सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रोदाहरणेन सत्यज्ञानाऽद्वयस्वरूपमेव तत्राऽन्यादृशमिति स्फुटीकृतम्। सविशेषस्यैव ज्ञेयत्वं श्रुत्यभिमतं चेत् एतन्मन्त्रोदाहरणमसङ्गतं स्यात्। सूत्रकृतापि "मान्त्रवर्णिकमेव च गीयते" इति सावधारणं निर्विशेषस्यैव प्रकरणित्वं दर्शितम् नान्यस्येत्यर्थः। एवमुपसंहारस्यापि तन्मात्रविषयत्वं दर्शयति—एकमिति। एकं=प्रत्यगभिन्नं अशेषा वाचः=वचांसि लौकिकवैदिकशब्दान् सर्वप्राणिमनांसि चाऽतिक्रम्य गतं=तदगोचरमित्यर्थः। वाङ्मनसेति "अचतुरविचतुर" इत्यादिना अच्प्रत्ययान्तो द्वन्द्वो निपातितः। अन्ते "सयश्चायं पुरुषे, यश्चाऽसावादित्ये, स एकः" इति महावाक्येन तदेव प्रत्यगभेदेनोपदिश्य "एतमन्नमयमात्मानमुपसंक्रामति" इत्यादिना तस्मिन्नन्नमयादिसर्वप्रपञ्चप्रविलापनेन अद्वितीयलक्षणमानन्त्यं समर्थ्य "यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कुतश्चन" इति सर्ववाङ्मनसपरिच्छेद्यधर्मशून्यं "द्वितीयाद्वै भयं भवति" इति श्रुत्यन्तराद्द्वितीयत्वादेव सर्वभयनिवर्तकं निरतिशयाऽऽनन्दैकरसं तदेवोपसंहृतमित्यर्थः। एतेन प्रत्यगभिन्नस्य तस्यैव ज्ञेयत्वे

सर्वाऽनर्थनिवृत्ति निरतिशयाऽऽनन्दाऽवाप्तिलक्षणमोक्षफलमुपपद्यते न तट-स्थकारणस्येति चतुर्थमपि तात्पर्यलिङ्गं दर्शितं बोध्यम्। तस्य ताटस्थ्यं वा-रयन् सोपपत्तिकमभ्यासं दर्शयति—पञ्चकोशेति। अन्नमय प्राणमय मनोमय विज्ञानमयाऽऽनन्दमयाख्य पञ्चकोशा एव अपरिच्छिन्नमात्मानन्दं गूह-न्ति=संवृण्वन्तीति गुहाः तेषामुत्तरोत्तरं सूक्ष्मत्वात्पूर्वेषां पूर्वेषामान्तराणा-मप्यान्तरं, अतः स्वप्रकाशप्रत्यगात्मभावेनाऽऽधारत्वेन स्थितं "यो वेद निहितं गुहायाम्" इति मन्त्रवर्णोपदर्शितगुहानिहितत्वोपपादनाय "स वा एष पुरुषोऽन्नरसमयः' इत्यादि "ब्रह्मपुच्छं प्रतिष्ठा" इत्यन्तेन सर्वान्तर-त्वेन तदेव ब्रह्म निगद्य=कोशेभ्यो विविक्तं स्वशब्देनैव स्पष्टमभिधायेत्यर्थः॥ अत्र श्रुतौ यद्यप्यापातदर्शिनां पूर्वपर्यायेष्विव "तस्माद्वा एतस्मादानन्दम-यात् अन्योऽन्तर आत्मा ब्रह्म" इत्यनभिधानात् "आनन्दमयोऽभ्यासात्" इत्यादिसूत्रदर्शनाच्च आनन्दमयमेव ब्रह्मेति प्रतिभाति। तथाप्यानन्दमय इति मयटोऽन्नमयादिविकारार्थकप्रायपाठेन विकारार्थत्वस्यौचित्यात्। "तत्प्रकृ-तवचने मयट्"इति प्राचुर्यार्थकस्य चाऽऽनन्दैकरसे ब्रह्मणिअल्पाऽनानन्दसं-वलितत्वरूपतत्प्राचुर्याभावेनाऽसंभवात्सूत्रोपदर्शिताऽभ्यासलक्षणतात्पर्यलि-ङ्गस्यचाऽऽनन्दमयशब्दे अदर्शनात्, "अन्नमय प्राणमय मनोमय विज्ञानमया-ऽऽनन्दमया मे शुद्धयन्ताम्" इति विरजाहोममन्त्रेऽन्नमयादिवदानन्दमय-स्यापि शोध्यत्वदर्शनेनाऽशुद्धताप्रतीतेः, कोशत्वप्रसिद्धेश्च आनन्दमयो न ब्रह्म, किन्तु ब्रह्मपुच्छं प्रतिष्ठेति निर्दिष्टं सर्वाऽऽधारत्वादानन्दमयस्यापि पक्षिणः पुच्छमिवाऽऽधारभूतं ब्रह्म स्वशब्दोपात्तं निर्विशेषमेव। "अभयं प्रतिष्ठां विन्दते" इति तस्यैवोत्तरत्र मुख्यप्रतिष्ठात्वश्रवणात्। तस्यैव चो-त्तरश्लोके, "असन्नेव स भवति, असद्ब्रह्मेति वेदचेत्। अस्ति ब्रह्मेतिचेद्वेद सन्तमेनं ततो विदुः॥" इत्यभ्यस्यमानत्वाच्चेत्येतदभिप्रायेण पञ्चकोशगुहा-न्तरमित्युक्तम्॥ पराक्रान्तं चात्र भगवद्भिर्भाष्यकारैः सूत्राणि च स्वपक्षे योजयद्भिरित्युपरम्यते।

दर्शिताभ्यासोऽपि तत्र तात्पर्यलिङ्गमिति प्रदर्शनाय शश्वन्निगद्येत्यु-क्तम्। अपूर्वत्वप्रदर्शनाय विशिनष्टि—अलौकिकमिति। लोके प्रत्यक्षादिप्र-माणेन विदितं लौकिकं तद्विलक्षणमित्यर्थः। "लोकसर्वलोकाट्ठञ्"। तथा

च सविशेषस्य मानान्तरयोग्यत्वाऽवर्जनाच्चालौकिकत्वमिति "नावेदविन्मनुतेतं बृहन्तं" "तं त्वौपनिषदं पुरुषं पृच्छामि" इत्यादि श्रुत्यनुसारेणाज्ञातज्ञापकत्वलक्षणप्रामाण्यनिर्वाहकत्वाद्धर्म इव ब्रह्मण्यपि श्रुतेरेवाऽसाधारणमानत्वौचित्याच्च मानान्तराऽनधिगम्यं निर्विशेषमेव तत्तात्पर्यगोचर इति भावः॥ एवं पञ्चभिर्लिङ्गैः प्रकरणस्य निर्विशेषपरत्वे निश्चिते भूतार्थवादरूपाणां "तस्माद्वा एतस्मात्" इत्यादिसृष्टिवाक्यानामपि जगन्मिथ्यात्वोपदर्शनमुखेन परमार्थसत्यनिर्विशेषतात्पर्यलिङ्गत्वमेवोचितं, उत्तरत्र "तत्सृष्ट्वा तदेवाऽनुप्राविशत्, तदनु प्रविश्य, सच्चत्यच्चाभवत्" इति स्रष्टुः स्वसृष्टजगदनुप्रवेशेन सत्यच्छब्दवाच्य मूर्ताऽऽमूर्त व्याकृताऽव्याकृत जगद्भावाऽऽपत्तिश्रवणात्प्रवेशस्य च व्यापकस्याऽधिष्ठानभाव तदन्तःस्थितिव्यतिरेकेण दुरुपपादत्वात् अविकारिणः कार्यभावाऽऽपत्तेः विवर्तव्यतिरेकेण दुरुपपादत्वाच्च। तदग्रे च तद्वदेव "सत्यं चानृतं च सत्यमभवत्, यदिदं किंच तत्सत्यमित्याचक्षते" इति परमार्थसत्यस्यैव व्यावहारिक प्रातिभासिक प्रपञ्चभावाऽऽपत्तिमुक्त्वा तदधिष्ठानस्य ब्रह्मविदभिलप्यमानपरमार्थसत्यत्व निगमनाच्च जगदनृतत्वप्रतिपादनार्थैव सृष्टिवाक्यप्रवृत्तिरिति स्पष्टं प्रतीतेर्न त्वदभिलषितसिद्धिरित्यभिप्रेत्याह—तदित्यादिना। तत्=ब्रह्म, सत्यं=व्यावहारिकं, असत्यं=तद्विलक्षणं प्रातिभासिकमित्येवं रूपम् अखिलं=जगत्, स्वतः=स्वस्मादेव प्रकृतिभूतात्, विसृज्य=विविधवैचित्र्येण संसृज्य तदेव विवेश अधिष्ठानताव्यतिरिक्त प्रवेशानुपपत्तिश्च भाष्यवार्तिकादौ प्रपञ्चिता, स्वत इत्येतद्देहलीदीपन्यायेन उत्तरत्रापि सम्बध्यते, तद्ब्रह्म स्वत एव सत्यं, न जगदिवाधिष्ठानसत्तावधीनसत्यमित्यर्थः॥ इति=दर्शितप्रकारेण अभिधायिनी=प्रतिपादनशीला ब्रह्मवल्ली श्रुतिः। अद्वयं=निर्विशेषमेव स्फुटं=व्यक्तम् अभ्यधात्=तात्पर्येण प्रत्यपीपददित्यर्थः। तथा च सृष्टिवाक्यानां न स्वरूपलक्षणपरत्वसंभव इति भावः ॥ १९ ॥

किञ्चास्तामामूलाग्रं श्रुतिपर्यालोचनं, "यतो वा" इत्यादिसृष्टिवाक्यानां प्रकारान्तरेण प्रकृताऽसङ्गत्यापि यथोक्ततात्पर्यकत्वं सुबोधमिति तत्प्रवृत्तिप्रकारप्रदर्शनेन दर्शयति—ब्रह्मविदिति॥

मू० ॥ ब्रह्मवित्परमेति तत्खलु सच्चिदद्वयलक्षणं
वेदनं च गुहान्तरस्य निजस्वरूपतदाऽऽप्तये ।
इत्युदीर्य सदद्वयत्वसमर्थनाय समाददे
विश्वसृष्टिमिमां श्रुतिर्न हि तत्समर्थनमन्यथा ॥२०॥

ब्रह्म वेत्तीति ब्रह्मवित् अधिकारी, परं=सर्वोत्कृष्टसुखरूपं मोक्षम्, एति=प्राप्नोतीत्यर्थः। "ब्रह्मविदाप्नोति परम्" इति सकलवल्यर्थसूत्रभूते प्रथमवाक्ये "बृह बृहि वृद्धौ" इति धातुनिष्पन्नब्रह्मपदेन परपदेन च सङ्कोचकारणाऽभावात्सर्वतोऽपरिच्छिन्नं निरतिशयाऽऽनन्दरूपं वस्तु मोक्षहेतुज्ञानविषयत्वेन फलत्वेन च कण्ठतो निर्दिष्टं, परिच्छेदहेतुद्वैतप्रपञ्चस्य मिथ्यात्वं वेदितु र्जीवस्य ब्रह्माऽभेदश्च सूचित इति भावः। एवं सूत्रितस्य सर्ववल्यर्थस्य सङ्क्षेपविस्तराभ्यां विवरणाय प्रवृत्ते उत्तरसन्दर्भे किं रूपं तद्ब्रह्म? क्व? कथं वा तद्वेदनं? कीदृशी वा तत्प्राप्तिः? इति जिज्ञासायां प्रथमं पदार्थव्युत्पादनमुखेन सङ्क्षेपतो विवरणाय "तदेषाभ्युक्ता" इति उदाहरिष्यमाण मन्त्रस्य पूर्ववाक्यार्थविवरणरूपत्वोक्तिपुरस्सरं "सत्यं ज्ञान मनन्तं ब्रह्म। यो वेद निहितं गुहायां परमेव्योमन्। सोऽश्नुते सर्वान्कामान् सह। ब्रह्मणा विपश्चिता" इति मन्त्रोदाहरणमिति दर्शयति—तत्खल्विति। तत्—=ब्रह्म खलु। सच्चिदद्वयलक्षणं=सत्यज्ञानाऽद्वितीयस्वरूपं अस्य=ब्रह्मणः वेदनं=ज्ञानं, त्वर्थे खलुशब्दश्चशब्दश्च। गुहान्तः=बुद्धिगुहायां निजस्वरूपस्य=वेदितृवास्तवाऽऽत्मरूपस्य तस्य समस्तवैषयिकसुखलवसमुद्रायितत्वात् सर्वकामस्वरूपस्य ब्रह्मणः आप्तये=प्राप्तये फलायेत्यर्थः। मन्त्रे परमे व्योमन्नित्यव्याकृताऽऽकाशमुच्यते। तस्मिन् ब्रह्म निहितं सदा सन्निहितमित्यर्थ इति केचित्। तन्न। "यो वै स बहिर्धा पुरुषादाकाशो यो वै सोऽन्तः पुरुष आकाशो योऽयमन्तर्हृदय आकाशः दहरोऽस्मिन्नन्तराऽऽकाशः" इत्यादिश्रुतिषु ब्रह्मण एव हार्दाकाशत्वप्रसिद्धेः। अत्रापि तथैव न्याय्यत्वात्। तथा च व्यधिकरणसप्तम्या परमेव्योम्नि ब्रह्मण्यध्यस्तायां बुद्धिगुहायां प्रत्यगात्मभावेन स्थितमित्यर्थ इति सूचनाय गुहान्तरित्युक्तम्। सहेति न साहित्यार्थे निपातः। किंतु युगपदित्यर्थे। सच विच्छित्तिपाठात्पूर्वान्वयी। तृतीयाद्वयं च समानाधिकरणमित्थंभावे। सार्वज्ञ्यप्रयोजकाचि-

द्रूपग्रहभावेन युगपत् सर्वकाम्यसुखान्यश्नुत इत्यर्थः। युगपत्सर्वप्राणिसुखानां प्रतिनियत देशकालशरीर विषयाऽऽदिसाध्यानां प्रातिस्विकरूपेण भोक्तुमशक्यत्वान्निकृष्टयोनिभोग्यसुखानां अधिकारिभिरनभिलषणीयत्वाद् न्यसुखस्याऽन्याऽभोग्यत्वाच्च "एतस्यैवाऽऽनन्दस्याऽन्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुत्यन्तरात् "को ह्येवाऽन्यात्कः प्राण्यात्, यदेष आकाश आनन्दो न स्यात्, एष ह्येवाऽऽनन्दयाती" त्युत्तर श्रुत्यनुरोधाच्च सर्वविषयसुखानामुपाधिविशेषतारतम्याधीनाऽभिव्यक्तितारतम्यशाल्याऽऽत्मसुखमात्रस्वरूपत्वात्, निरतिशयाऽऽनन्दरूपाऽऽत्मलाभ एव युगपत्सर्वकामाऽवाप्तिः श्रुत्यभिप्रेतेति सूचनाय निजस्वरूपेत्युक्तम्। इत्थं च स्वरूपलक्षणस्य मन्त्रेणैव स्फुटमभिधानात्तद्विरुद्धरूपान्तरस्य कल्पयितुमशक्यत्वाच्च निवृत्तायां स्वरूपलक्षणजिज्ञासायां इयमेव जिज्ञासा परिशिष्यते। कथं तद्ब्रह्म सत्यमित्युच्यते? कथं वा ज्ञानं? कथं वाऽनन्तं? यदि तत्प्रपञ्चसाधारण्येन सत्यं, तर्हि विशेषणवैयर्थ्यं, धर्म इव ब्रह्मण्यपि वेदवोध्ये आस्तिकस्याऽसत्यताबुद्ध्यप्रसक्तेः।

एवं ज्ञानत्वमपि कथं?, लोके नित्यज्ञानाऽसिद्धेः। एवमनन्तत्वमपि कथं? अन्तो हि परिच्छेदः, स च नद्यन्तः क्षेत्रभक्तिः, मरणान्तं जीवितं, गोत्वाऽन्तमश्वत्वम्, इति देशतः कालतो वस्तुतश्चेति त्रिधा। तत्राऽऽद्यस्याऽऽकाशादावदर्शनेऽपि द्वितीयस्य संदिग्धत्वेऽपि तृतीयोऽस्त्येवेति न त्रितयशून्यं वस्तु संभावयितुं शक्यम्। यदि त्वाद्यद्वयशून्यत्वमात्रमभिप्रेतं स्यात्तर्ह्याऽऽकाशादिष्वतिप्रसक्तं लक्षणं। किञ्च। ब्रह्म आकाशादिभ्यो भिन्नं? न वा?। आद्ये परिच्छेदाऽऽपत्तिः। द्वितीये ब्रह्माऽभावाऽऽपत्तिः। अपि च। प्रत्यगात्मैव ब्रह्मेति गुहानिहितत्वेनोपदर्शितं। स च जीव एव। नह्येकस्मिन् शरीरे द्वौ प्रत्यगात्मानौ संभवतः। जीवस्य च परिच्छिन्नत्वं प्रत्यक्षसिद्धं नापलपितुं शक्यमित्याद्याशङ्कानिरासाय, कोशविवेकप्रसञ्जनाय च सृष्टिवाक्यावतारइति दर्शयति—इत्युदीर्येत्यादिना। स्वरूपलक्षणोक्त्यनन्तरमेतच्छङ्कानिरसनमेवाऽऽकाङ्क्षितमिति द्योतनाय क्त्वाप्रत्ययः। श्रुतिःसदद्वयत्वसमर्थनाय=मन्त्रोपदर्शितसत्यत्वानन्त्योपपादनाय,इमां=आकाशादिपुरुषान्तक्रमोपक्लृप्तां विश्वसृष्टिं समाददे=वक्तुमुपचक्रमे इत्यर्थः।

"तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादेः—तस्मात्=ब्रह्मत्वेन प्रकृतात्=एतस्मात्प्रत्यक्त्वेन नित्यापरोक्षादतिसंनिहितात्, अतएवाऽऽत्मनः प्रकृतिभूतादाकाशः तत्सत्तया सन्नेव संभूतः सर्गादावाविर्भूतः । एवमाकाशाद्वायुः, वायोरग्निः, अग्नेरापः,अद्भ्यः पृथिवी, पृथिव्याश्च पञ्चीकरणोत्तरमोषधयः, ताभ्योऽन्नं, अन्नात्पुरुषाकारं शरीरमिति क्रमेण संभूतमित्यर्थः । पञ्चम्यन्तानि चाकाशादिपदानि तत्तदुपहितब्रह्मपराण्येव । अत्र संभूतिग्रहणं च प्रकृतिपञ्चम्यनुरोधाद्भृगुवल्ल्यां समानप्रकरणे त्रितयोपादानाच्च स्थितिप्रलययोरप्युपलक्षणम् । तथाचाऽऽकाशादेः कालत्रयेऽप्युपादानब्रह्मणः पृथक्सत्त्वाऽभावेनाऽनृतत्वाद्देहादिजीवोपाधीनां च तत्कार्यत्वेन तत्साम्यात्सर्वोपाध्यनृतत्वे च जीवस्य ब्रह्मभावेनैव परिशेषाद्ब्रह्मैव परमार्थसत्यं, न प्रपञ्चवत्पराधीनं सत्यं, कल्पितप्रपञ्चेन तस्य वास्तवाद्वितीयत्वाऽहानिः, नित्याऽपरोक्षप्रत्यगभेदात्सर्वजगत्कर्तृतावललभ्यसार्वज्ञ्याच्च तस्य नित्यज्ञानस्वरूपत्वोपपत्तिश्चेति श्रुतेस्तात्पर्यम् । प्रकारान्तरेण वर्णने त्वप्राप्तकालता, दर्शितशङ्काऽनपनयश्चेति भावः ॥

ननु न सत्यशब्दस्य प्रकृते कालत्रयाऽबाध्यत्वलक्षणं सत्यत्वमर्थः। किंतु सदात्मकसर्वप्रपञ्चोपादानत्वात्सार्वात्म्यम् । उत्तरत्र "सच्च त्यच्चाऽभवत्" इत्यादिना "तत्सत्यमित्याचक्षते" इत्यन्तेन तथैव तत्समर्थनात्। मान्त्रवर्णिकसत्यशब्दार्थ सार्वात्म्योपपादनायैव च सृष्टिवाक्याऽवतारः। एवमानन्त्यमपि गुणानन्त्यात् शक्त्यानन्त्यात् कार्यानन्त्याद्वा समर्थयिष्यामीति कस्य चिदन्यथा समर्थनाऽऽभासं निराचष्टे—नहीति । अन्यथा=त्वदुक्तेन प्रकारान्तरेण, तस्याः=विश्वसृष्टेः समर्थनं न संभवति। हिशब्दो हेतुप्रसिद्धिद्योतनार्थः। तथाहि—न तावत्सत्यशब्दस्य त्वदुक्तोऽर्थः। रूढिपरित्यागाऽयोगात्, कारणस्य वास्तवे अचेतनजगदात्मत्वे ज्ञानैकरसत्वायोगेन ज्ञानपदार्थाऽसंघटनाच्च, सार्वात्म्येनैव ज्ञानतादात्म्यस्यापि लाभेन ज्ञानपदवैयर्थ्यात्। परिणामित्वेन ब्रह्मणोऽनित्यत्वप्रसक्ति निरवयवत्वशब्दकोपादिप्रसङ्गाच्च। विषयानुपादानान्मतुबाद्यश्रवणाच्च सर्वगोचरज्ञानवत्त्वं तदर्थ इत्यपि वक्तुमशक्यत्वात्। अनादिजीवात्मनां ब्रह्मकार्यत्वाऽभावेन सार्वात्म्याऽसिद्धेश्च॥ न च त्रिपश्चितेत्यग्रिमपदानुरोधेन "अर्शआद्यच्" कल्पनमिति

युक्तं। "वेदो वा प्रायदर्शनात्" इति न्यायेनाऽसञ्जातविरोधिज्ञानपदाऽनुरोधात् विशब्दितस्यैव मानमात्रपरत्वौचित्यात्। एवं सार्वात्म्यादेव शक्तिगुणाद्यानन्त्यलाभादनन्तपदस्यापि धैयर्थ्यम्। ब्रह्मपदसमानाधिकरणमनन्तपदं शक्तिगुणाद्यानन्त्यं प्रतिपादयतीति च विचित्रा व्युत्पत्तिः। नच नित्यार्थमेवाऽनन्तपदं। सङ्कोचे कारणाऽभावात्। यश्च "सघत्यश्चाभवत्" इत्युत्तरग्रन्थानुसारोपन्यासः सोऽपि सन्दर्भाऽपरिशीलननिबन्धनः। तथाहि—"असन्नेव स भवति, असद्ब्रह्मेति वेदचेत्" इति ब्रह्माऽस्मत्त्वदर्शिनो निन्दया "अस्ति ब्रह्मेति चेद्वेद सन्तमेनं ततोविदुः" इति तत्सत्त्ववेदिनः स्तुत्या च ब्रह्मसत्त्वमेव समर्थ्यते॥ नच वेदबोधिते ब्रह्मण्यसत्त्वशङ्का,समर्थनापेक्षा वास्तीति वाक्यमेवानर्थकं स्यात् यद्यलौकिकी सत्ता नाभिप्रेता स्यात्। तदुक्तमपि "अथातो नु प्रश्नाः" इति बहुवचनानुरोधात् किं तद्ब्रह्मास्ति नास्ति?, अविद्वान्मृतो ब्रह्म प्राप्नोति न वा? विद्वानेव प्राप्नोति वा? इति प्रश्नत्रयं गम्यते। तत्राऽऽद्यप्रश्नोत्तरत्वेनाऽऽकाशादिकार्यमुखेन ब्रह्मसत्यत्वसमर्थनाय "सोऽकामयत" इत्यादिसंदर्भः प्रवृत्तः। यद्यस्ति कुतो नोपलभ्यते इत्याशङ्कायां निर्विशेषत्वान्नोपलभ्यते, सविशेषकार्यानुप्रवेशेन तु सत्तदिति सर्वत्रोपलभ्यते, बुद्धिगुहायां तु स्फुटतरमुपलभ्यते। नचाऽप्रसिद्धस्याऽलक्ष्यस्य कल्पितेन वस्त्वन्तरानुप्रवेशेनोपलम्भाऽप्रसिद्धिः। आनुभविकेऽर्थेऽप्रसिद्धेरदोषत्वात्। तादृशस्यापि राहोः तथाऽविरोधेनापि चन्द्रानुप्रवेशेनोपलब्धिदर्शनाच्चेति प्रदर्शनाय महावाक्योपयोगितया ब्रह्मणः प्रत्यक्त्वबोधनाय "तत्सृष्ट्वा तदेवाऽनुप्राविशत्" इत्यादिना मूर्तामूर्तप्रपञ्चाऽनुप्रवेशेन तदात्मतोक्ता। परमार्थाभिप्रायेण च समर्थितार्थनिगमनाय च "तत्सत्यमित्याचक्षते" इति विद्वदनुभवसंवादिसत्यत्वमित्युच्यते। उत्तरत्रापि "कोह्येवान्यात्कः प्राण्यात्" इत्यादिना तर्केण "भीषाऽस्मात्" इत्यादिना जगद्व्यवस्थालिङ्गेन च तदेव समर्थ्यते। अन्ते च महावाक्योपन्यासपूर्वकं विदुष एव ब्रह्मप्राप्तिर्नाऽविदुष इत्यवशिष्टप्रश्नद्वयोत्तरेण वल्लीसमाप्तेति सर्वसन्दर्भस्य सच्चिदानन्दाद्वय ब्रह्ममात्रपरत्वात् न त्वदुक्तरीत्या सृष्टिसमर्थनसंभव इति भावः॥ एवं ज्ञानोपायत्वेन तपःशब्दितविचारविधानाय प्रवृत्तायां भृगुवल्ल्यामपि "यतोवा" इत्यादिना

ब्रह्मलक्षणत्वेन प्रस्तुतसर्वसृष्टेरन्नप्राणमनोविज्ञानेषु भ्रान्त्या ब्रह्मत्वेन प्रसक्तेषु पर्यालोचनेन क्रमेण निरस्तेष्वन्ते "आनन्दो ब्रह्मेति व्यजानात्" इत्यादिना पूर्ववल्लीवदेवाऽपरिच्छिन्नाऽऽनन्दैकरसे ब्रह्मणि पर्यवसानं स्पष्टमवगम्यत इति तैत्तिरीयश्रुतेरद्वितीये ब्रह्मणि तात्पर्यं सिद्धम् ॥ २० ॥

इत्थं स्वशाखीयोपनिषदः सृष्टिवाक्यसङ्घटनव्याजेन ब्रह्मणि समन्वयमुपपाद्य गतिसामान्यप्रदर्शनाय ऋग्वेदोपनिषदोपि तं तथैवोपपादयति—एकएवेति ॥

मू० ॥ एक एव पुरा बभूव न चापरं स किलाऽखिलं
वीक्ष्य विश्वमिदं ससर्ज तनुं प्रविश्य निरीक्षते ।
स्वप्नमावसथत्रयं सविचारतः प्रतिबुद्धवान्
स्वाऽऽत्मनैव समस्तकाममवाप्नुवन्नमृतोऽभवत् ॥ २१ ॥

उपक्रमे "आत्मा वा इदमेकएवाग्र आसीन्नान्यत्किञ्चन मिषत्" इत्येकशब्देन, एवकारेण इतरप्रतिषेधेन च सजातीयादिभेदशून्य आत्मैव निरूपयितुमारब्ध इति दर्शयति—एकएवेति ॥ पुरा=सृष्टेः पूर्वं, इदं=परिदृश्यमानं जगत्, एकः=अद्वितीय आत्मैव बभूव । अपरं=जगद्रूपं, न बभूवेत्यर्थः । तर्हि किमत्यन्ताऽसदेव जगत् सह स्वसत्तयोत्पद्यते? नेत्याह—स किलेति ॥ अखिलं=जगत् सः=आत्मैव, आत्मेदंपदयोस्सामानाधिकरण्यादिदंपदपरामृष्टस्य जगतः पुरा आत्मरूपेण स्थितिबोधनादात्मसत्तैव जगत्सत्तेति इदानीमिव प्रागपि जगदासीदिति वक्तुं शक्यत्वान्नात्यन्तासत्त्वं, नापि स्वतःसत्त्वमित्यनिर्वचनीयत्वं श्रुतेरभिप्रेतमित्यर्थः । किलेति वैशब्दार्थे श्रौतप्रसिद्धिद्योतनाय । अत्रापि "स ईक्षत लोकान्नु सृजा" इति "स इमाँल्लोकानसृजत" इत्यादिसृष्टिवाक्यस्य तथाविधाऽऽत्मस्वरूपोपपादनायैवाऽवतार इति सूचयंस्तदर्थमाह—वीक्ष्येति॥ सः=आत्मा सृज्यपदार्थपर्यालोचनरूपमायावृत्त्या वीक्ष्य=पर्यालोच्य इदं विश्वं=जगत्, सूक्ष्मभूतसृष्टिपञ्चीकरणाऽनन्तरं अम्भोमरीचिमरापशब्दितद्युन्तरिक्षभूपातालल्लोकात्मकविराजं, ततोऽग्न्यादीन्द्रियाद्यधिष्ठातृदेवान्, तेषामशनाया पिपासे, तदुपशान्तयेऽन्नाद्युपभोगाय प्रथमं धर्माऽपवर्गयोस्साधकगवादिशरीरम्, अथ-

तत्साधकमनुष्यशरीरमिति क्रमेण ससर्ज। ततस्तस्मिन्देहे अग्न्यादीनां वागिन्द्रियादिभावेन प्रवेशानन्तरं स सर्वस्रष्टाऽस्मैव कार्यकारणसङ्घातं भोक्तारमन्तरेणाऽराजकं नगरमिव कथं स्यादित्यालोच्य जीवभावेन प्रविष्ट इत्यर्थः। "कथंन्विदं मदृते स्यात्" इत्यादि "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" इत्यन्तश्रुतिप्रतिपाद्यं सङ्क्षिप्य दर्शयति—तनुं प्रविश्येति। श्रुतौ सीमानं=केशविभागान्तं ब्रह्मरन्ध्रस्थानं विदार्यैतया द्वारा परमात्मा प्रापद्यत प्रविष्ट इत्यर्थः। अस्य देहान्तर्गतस्य तत्प्रवेशप्रयुक्तजीवभावस्य च मिथ्यात्वप्रतिपादिकां "तस्य त्रय आवसथास्त्रयः स्वप्नाः" इति श्रुतिं वर्णयति–निरीक्षते स्वप्नमिति। आवसथत्रयं=नेत्रकण्ठहृदयस्थानत्रयोपलक्षित जागृत्स्वप्नसुषुप्त्याख्याऽवस्थात्रयं मिथ्यात्वेन स्वप्नसाम्यात्स्वप्नं, निरीक्षते=अनादिकालात्पौनः पुन्येन पश्यतीत्यर्थः। मृत्युमूर्च्छावस्थयोरप्युपलक्षणमेतत्॥ ननु तनुप्रवेशोत्तरकालमागन्तुकोऽस्य जीवभाव इति तदारभ्य पश्यतीति वक्तुं युक्तं, नाऽनादिकालादिति चेत्। न। अविद्याकामकर्मवासनासन्तानलक्षण संसारबीज परम्पराया अनादित्वेन संसारप्रवाहस्याप्यनादित्वे तत्प्रवाहपतितजीवस्याप्यनादित्वौचित्यात्। कथं तर्ह्यविकृतस्यैव ब्रह्मणो जीवभावेन प्रवेशश्रुतेरुपपत्तिरिति चेत्? प्रलये सर्वकार्योपाधिविलयात् तत्संस्काराणां चाऽस्फुटत्वात् तदुपादाने ब्रह्मण्यविद्यामात्रव्यवधानेन एकतामापन्नानां जीवानां पुनरुपाधिप्रादुर्भावे तत्र प्रतिबिम्बभावेनाऽऽविर्भावलक्षणोऽनुप्रवेशो वास्तवब्रह्माऽभेदबोधनाय अभिनव इवोत्प्रेक्ष्यत इति।

अथवा यथा अनादिसिद्धसाधुशब्दव्युत्पादनायाऽत्यन्ताऽसतामेव प्रकृतिप्रत्ययाऽऽगमविकारादीनां कल्पना, तथा श्रुतेरपीयं जीवस्य वास्तव ब्रह्मभावव्युत्पादनायाऽत्यन्ताऽसत्येव प्रवेशादिकल्पनेति बोध्यम्॥ तथाच महाभाष्ये—"यदि नित्याः शब्दाः किमर्थं शास्त्रम्" इत्याशङ्क्योक्तं—"किमर्थं शास्त्रमितिचेत्। निवर्तकत्वात्सिद्धम्" इति अपशब्दनिवर्तकत्वात्कल्पनयापि व्युत्पादकं शास्त्रं सप्रयोजनमित्यर्थः। हरिणाप्युक्तम्—

"उपायाः शिक्षमाणानां बालानामुपलालनाः।
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते॥" इति ॥

तथाऽत्रापि जीवस्य नित्यसिद्धे ब्रह्मभावे उपदेशवैयर्थ्यमाशङ्क्योक्तं भगवद्भिर्द्रमिडाचार्यैः—"सिद्धं तु निवर्तकत्वात्" इति। अमुमेव हि स्वाभिप्रायं स्फुटयन्ती श्रुतिराह—"तस्य त्रय आवसथास्त्रयः स्वप्नाः" इति। श्रीगौडपादाचार्यैरप्युक्तम्—

"अनादिमायया सुप्तो यदा जीवः प्रबुध्यते।
अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा" ॥ इति ॥

एवंच सति श्रुत्यन्तरे "नान्योऽतोस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता" इत्यादिचेतनान्तरप्रतिषेधा अपि स्वरसत उपपद्यन्ते॥ नन्वेवं सत्युत्तरत्र गर्भोत्पत्तिक्रमेण पुत्रजन्मप्रपञ्चनानन्तरं "सोस्याऽयमितर आत्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते। अथाऽस्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति" इति पितापुत्रयोरात्मभेदश्रवणमनुपपन्नमिति चेत्। न। उपाधिभेदनिमित्तभेदाऽनुवादित्वाच्छ्रुतेः। कथमन्यथा तत्रैव स्त्रियां निषेकः प्रथमं जन्म, कुमारात्मना द्वितीयं जन्मेति, पुत्रात्मजन्मद्वयपङ्क्तौ "स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म" इति पितुरग्रिमजन्म तृतीयत्वेन गण्येतेति। एवं "कोऽयमात्मा" इत्यादि "सर्वान्कामानाप्त्वाऽमृतःसमभवदमृतस्समभवत्" इत्यन्ताऽग्रिमश्रुतेरप्यद्वितीयसच्चिदानन्दात्मन्येव पर्यवसानं दर्शयति-स इत्यादिना। सः=उपाध्यनुप्रवेशाज्जीवभावमापन्नः परमात्मा कोऽयमात्मेति वयमुपास्महे, कार्यकारणसङ्घातेऽस्मिन्कतरः स आत्मेति गुरुपूर्वकस्वतत्त्वविचारतो दर्शनश्रवणादिसर्वव्यवहारमुख्यसाधनाऽन्तःकरणोपहितं तद्वृत्तितादात्म्यात् संज्ञानमज्ञानमित्यादिशब्दवाच्यम्, स्वतस्तु ज्ञानैकस्वभावं इन्द्रादिसर्वदेवमहाभूतचतुर्विधशरीरादि सर्वजगदधिष्ठानसत्तास्फूर्तिनिर्वाहकं यन्मम प्रज्ञानैकरसस्वरूपं तदेव ब्रह्मेति तत्त्वतः स्वं प्रति बुद्धवान्सन् तत्कालमेव सर्वसुखलवसमुद्भूतेन स्वात्मनैव विस्मृत कण्ठचामीकरवज्ज्ञानमात्रतः प्राप्तेन समस्तं कामं अवाप्नुवन्=प्राप्तवान् सन्, अमृतः=अमरणधर्मा अभवत्। अत्र शतृप्रत्ययेन समकालत्वलक्षकेण प्रतिबोधाऽऽनन्दाऽवाप्त्यनर्थनिवृत्तीनां यौगपद्यबोधनेनाऽभेदसूचनात् मुखं व्यादायस्वपितीतिवच्छ्रुतौ क्त्वाप्रत्ययेन पूर्वकालता न विवक्षितेति सूचितम्॥ तथाहि श्रुत्यन्तरं—"ब्रह्म वेद ब्रह्मैव भवति" "तरति शोकमात्मवित्"

इति। "अस्माल्लोकादुत्क्रम्याऽमुष्मिन्स्वर्गे लोके" इति लोकान्तरगमनमुच्यत इति न भ्रमितव्यम्। "न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते" इति श्रुत्यन्तरे ब्रह्मविदो गतिप्रतिषेधात्। पूर्वकाण्डान्ते—"अधः श्येनो जवसा निरदीयम्" इति "गर्भे एवैतच्छयानो वामदेव एवमुवाच" इति गर्भशयनदशायामेव वामदेवस्य ज्ञानसमकालिकसंसारनिर्गमनोक्तिविरोधाच्च। किन्तु ज्ञानेन शरीरोत्पत्तिहेत्वविद्योपमर्दे पुनः शरीराद्यप्रसक्तिः, एतच्छरीराद्यभिमाननिवृत्तिश्चास्माल्लोकाच्छरीरभेदाद्योत्क्रमणं, निरतिशयाऽऽनन्दाऽऽत्मस्वरूपमेव च स्वर्गलोकोऽत्राऽभिधीयते। अन्यस्य स्वर्गस्याऽनित्यत्वोपपादनादमृतत्वोक्तिविरोधादिति ॥ २१ ॥

सृष्टिवाक्यसमन्वयप्रसङ्गेन ऋग्वेदोपनिषद्वोऽद्वितीये ब्रह्मणि तात्पर्यं प्रदर्श्य यजुर्वेदेऽपि बृहदारण्यके "स यथोर्णनाभिस्तन्तुनोच्चरेत् यथाऽग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवाऽस्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्ववेदाः सर्वाणि भूतानि व्युच्चरन्ति" इति सृष्टिश्रुतेः पूर्वोत्तरपर्यालोचनेन मूर्ताऽमूर्तब्राह्मणोपदर्शित निर्विशेषएव पर्यवसानमिति दर्शयति—स्थूलेति ॥

मू० ॥ स्थूलसूक्ष्मविभागि मूर्तममूर्तमित्यखिलं जगत्
ब्रह्मणो द्विविधं हि रूपमिति प्रकल्प्य विभागतः ।
आदिशन्त्यथ नेति नेति निषिध्य रूपमशेषतः
काण्व वाजसनेयक श्रुतिरप्यशेषपदद्वयम् ॥ २२ ॥

तस्य ह्येवमवतारः—अध्यायादौ "ब्रह्म ते ब्रवाणि" इति प्रतिज्ञाय, विमर्शे निरूपयितु महाकम् जिज्ञासुं बालाकिं प्रत्यजातशत्रुः "व्येव त्वा ज्ञपयिष्यामि" इति प्रतिज्ञाय सुषुप्तावौपाधिकरूपं परित्यज्य स्वस्वरूपावस्थितं प्रत्यञ्चं ब्रह्मेति बोधयिष्यामीति सुप्तपुरुषं गत्वा तमुत्थाप्य बालाकिं पप्रच्छ "यत्रैष एतत्सुप्तोऽभूत् योऽयं विज्ञानमयः पुरुषः क्वैष तदाऽभूत् कुत एतदागात्" इति । तत्किल नाऽजानाद्बालाकिः। तत अजातशत्रुः स्वयमेव प्रश्नयोरुत्तरं वक्तुं प्रवृत्तः । "यथा कुमारो वा महाराजो वा महाब्राह्मणो वा अतिघ्नीमानन्दस्य गत्वा शयीत एवमेवैष एतच्छेते" इति क्वैष तदाभूदिति

प्रश्नोत्तरत्वेन सर्वद्वैतदुःखातिघात्यद्वितीयाऽऽनन्दावस्थालक्षणेस्वाभाविकरूपे स्थितिमुक्त्वा कुत एतदागादिति प्रश्नोत्तरव्याजेन द्वैतमिथ्यात्वप्रदर्शनपूर्वकं तस्याऽद्वितीयत्वं व्यवस्थापयितुं हि स यथोर्णनाभिरित्यादिना प्रतीच एवाऽभिन्ननिमित्तोपादानाज्जगतः सृष्टिं सदृष्टान्तमुपन्यास्थत्। तत्र "सर्व एवाऽऽत्मनः" इति श्रुतिपाठे उपाधिविलयात्सुप्तौ परेणैकीभूतानामपि जीवानां पुनःप्राणाद्युपाध्याऽऽविर्भावे औपाधिकं व्युच्चरणमिति योज्यम्॥ यद्यपि प्रत्यक्षेणाऽन्यैस्तदा प्राणक्रियोपलम्भात्, "प्राणाग्नय एव तदा तस्मिन्पुरे जाग्रति" इति श्रुत्यन्तराच्च न सुषुप्तौ प्राणविलय इति, "सर्वे प्राणा व्युच्चरन्ति" इति तद्विरुद्धमिव प्रतिभाति। तथापि तत्तदविद्याप्रयुक्त प्रपञ्चसृष्टिभेदादन्यदृष्ट्यनुवादिनी सा श्रुतिः,इयं तु सुप्तपुरुषप्रपञ्चविषयिणीत्यविरोध इत्युक्तम्। एवं प्रतीचो निखिलजगद्व्युच्चरणे देहेन्द्रियाद्युपाधिसिद्धौ तत एव जीवभावेनाऽऽगमनमित्यर्थात्प्रदर्श्य व्युच्चरणाऽवधेः परमार्थसत्यत्वोपपादनाय अन्ते "तस्योपनिषत्सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्" इति व्यावहारिकसत्यप्रसिद्धप्राणाद्यपेक्षयापि तस्य सत्यत्वे नामनिर्वचनेन प्रदर्शिते प्राणादिप्रपञ्चस्वरूपाऽवधारणाय तदपवादेन ब्रह्मणः परमार्थसत्यत्वाऽवधारणाय च मूर्ताऽमूर्तब्राह्मणाऽवतारः। तत्र स्थूलं=मूर्च्छितावयवत्वात् मूर्तं पृथिव्यादित्रयं, सूक्ष्मं=अमूर्च्छिताऽवयवत्वात् अमूर्तं वाय्वन्तरिक्षमिति पञ्चभूतप्रधानं अखिलं जगत् अध्यात्माऽधिदैवविभागित्वेन दर्शितम्। उत्पत्तिस्थितिलयाऽवस्थास्वपि ब्रह्माऽपृथक्सत्तास्फूर्तिकत्वात् ब्रह्मण एवेदं द्विविधं रूपमिति "द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च" इत्यादिना प्रकल्प्य तयोर्धर्मविभागशो मर्त्यत्वाऽमृतत्वादीनधिदैवाऽध्यात्मविभागशोऽपि क्रमेण आदित्यं तदन्तः पुरुषरूपं,अक्षि तदन्तः पुरुषरूपं च, रसयुग्मद्वयं माहारजतादिसदृशलिङ्गरूपाणि च प्रदर्श्य, निर्णीते प्राणादिप्रपञ्चरूपे, अथ=अनन्तरं अध्यारोपितं मूर्ताऽमूर्तादिरूपं, अशेषतः=निरवशेषेण "अथात आदेशो नेति नेति" इति वीप्स्यमान नञा निषिध्य=अपोह्य, अधिष्ठानमात्रं परिशिष्टप्रत्यक्चैतन्यं ब्रह्मेति आदिशन्ती=प्रतिज्ञापूर्वकमुपदिशन्ती काण्ववाजसनेयकश्रुतिः=काण्वमाध्यंदिनशाखाद्वयेऽपि समानानुपूर्वीका मूर्ताऽमूर्तब्राह्मणश्रुतिरपि अद्वयं=सजातीयादिद्वितीयवस्तुशून्यमेव

प्रत्यग्ब्रह्म अशेषयत्=पर्यशेषयत् । निर्विशेषवस्तुबोधने प्राप्तसर्वविशेषप्रतिषेधेन तन्मात्रपरिशेषणव्यतिरिक्तस्फुटतरोपायान्तराभावादिति श्रुतेस्तात्पर्यमित्यर्थः ।

अमुमेव श्रुत्यभिप्रायं वाक्यशेषोऽपि स्फुटयति—"न ह्येतस्मादिति नेत्यन्यत्परमस्ति" इति। इति शब्दद्वयेन मूर्तामूर्तलक्षणद्वैतप्रपञ्चमात्रं परामृश्य वीप्स्यमान नञा त्रैकालिकतन्निषेधेनाऽधिष्ठानपरिशेषणलक्षणादेतस्मादादेशनादन्यत्परं उत्कृष्टं स्फुटमित्यर्थः, निर्विशेषवस्तूपदेशनं न ह्यस्तीति हि तदर्थः । न च वीप्स्यमान नञा सर्वनिषेधे ब्रह्मणोऽपि निषेधाऽऽपत्तिरिति भ्रमितव्यम् । निरधिष्ठाननिषेधाऽसंभव्ययात् । "ब्रह्म ते ब्रवाणि" इति प्रतिज्ञाविरोधात्, उत्तरत्र च "अथ नामधेयं सत्यस्य सत्यम्" इति नामनिर्वचनेनोपसंहाराऽसङ्गतेश्च । तथा च सूत्रं—"प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः" इति। प्रक्रान्तमेतावत्त्वं परिच्छिन्नमूर्तामूर्तरूपं प्रतिषेधति श्रुतिः नतु वृथा हि यस्मात्ततः=तदनन्तरं, भूयःपुनरपि नामनिर्वचनेन परमार्थसत्यं ब्रह्म ब्रवीतीति सूत्रार्थः । अथवा न ह्येतस्मादित्यस्याऽन्यथा योजना । नेतिनेतीति स्वकृतमादेशनं श्रुतिः स्वयमेव वर्णयति—न हीति । एतस्मादित्यस्याऽनन्तरं व्यतिरिक्तमित्यध्याहार्यम् । तथा च नेति नेतीत्यत्र द्वितीयेत्थमित्यर्थकनिपातद्वयेन धर्ममात्रपरामर्शात्, नञा तत्प्रतिषेधे एतस्माद्ब्रह्मणो व्यतिरिक्तं न हीति निषेधः पर्यवस्यति । तथाच परिशिष्टं निर्धर्मकं निषिध्यमानात्परं उत्कृष्टं परमार्थसत्यं ब्रह्माऽस्त्येव, न तु तदपि प्रतिषिद्धमित्यर्थः । अस्यां च योजनायां ततः=निषेधस्य प्रपञ्चमात्रविषयत्ववर्णनानन्तरं श्रुतिरेवाऽन्यत्परमस्तीति परिशिष्टं ब्रह्म ब्रवीतीति सूत्रार्थः ॥ तथाच दर्शितमुभयत्रापि श्रुत्या जगन्मिथ्यात्व एव पर्यवसानं स्फुटमिति भावः ॥ २२ ॥

एवं सामवेदेऽपि छान्दोग्ये उपक्रमादिपर्यालोचने स्फुटिवाक्यस्यैवैव गतिः प्रतिभातीति दर्शयति—यदिति ॥

मू० ॥ यत्प्रबोधवशादशेषमिदं जगद्विदितं भवे-

त्तद्विवक्तुमुपक्रमोऽत्र सदेव सोम्यगिरा ततः ।

सृष्टिरीक्षणपूर्विका जगतस्तदैक्यविवक्षया
मृत्तिकादिनिदर्शनानि तथाहि सङ्गतिमाप्नुयुः॥२३॥

"सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति शाण्डिल्यविद्यायामन्यार्थमप्युक्तं सर्वप्रपञ्चस्य ब्रह्ममात्रत्वं स्वप्राधान्येन निरूपयितुं हि षष्ठप्रपाठकाऽवतारः। तत्राऽऽदावेवमाऽऽख्यायिका—पित्राऽऽज्ञया द्वादशवर्षाणि गुरुकुले सर्वा वेदादिविद्या अधीत्य पितुरन्तिकमागतमनूचानमानिनं स्तब्धं श्वेतकेतुं, अधीतास्वपि सर्वविद्यासु आत्मज्ञानमन्तरेणाऽकृतार्थ एवायं, यतो देहाद्यभिमानेन गर्वितः स्तब्ध एवाऽऽस्ते, अतोऽस्याऽभिमानमपनीयाऽऽत्मतत्त्वं कार्तार्थ्यहेतुं बोधयिष्यामीति मन्यमानः पिताऽऽरुणिः किलो वाच। "यन्नु सोम्येदं महामना अनूचानमानी स्तब्धोसि उत तमादेशमप्राक्ष्यो येनाऽश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं भवति" इति। ततस्तदविज्ञानात्प्रशान्तगर्वेण विनीतेन पुत्रेण सप्रणिपातं "कथं नु भगवः स अदेशो भवति" इति पृष्टस्य पितुर्मृदादिनिदर्शनोपन्यासपूर्वकं "सदेव सोम्येदमग्र आसीदेकमेवाऽद्वितीयम्" इति सजातीयादिभेदशून्यसन्मात्रस्वभाव वस्तुनिरूपणार्थैवोपक्रम इत्याह—यदिति। हि=यस्मात्, अत्र=अस्मिन्प्रपाठके यस्य प्रबोधवशादशेषं=कृत्स्नं इदं=बहिःप्रमाणगम्यं जगद्विदितं=तत्त्वतोनिर्ज्ञातं भवेत्। नाऽन्यजिज्ञासाऽवशिष्येत इति यावत्। तत्=तादृशं वस्तु विवक्तुं=आरोपितरूपविवेकेन बोधयितुं दर्शित "सदेव सोम्य" इत्यादि श्रुतिगिरा उपक्रमः स्पष्ट एव। ततः=तस्मात्कारणात्, "तदैक्षत बहुस्यां प्रजायेयेति तत्तेजोऽसृजत" इत्यादिना उत्तरत्र प्रक्रान्ता ईक्षणपूर्विका सृष्टिरपि तदैक्यविवक्षया=एकमेवाऽद्वितीयमित्येकशब्देन एवकारेण अद्वितीयपदेन च प्रतिज्ञातसजातीयादिशून्यत्वोपपादनायैव वर्णयितुं युक्तेत्यर्थः। अन्यथा वर्णने न केवलं प्रतिज्ञाताऽनुपयोगः, दृष्टान्ताऽसङ्गतिश्चेत्याह—तथाहीति। तथाहि सति प्राग्दर्शितानि यथा "सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादीन्यध्यस्तस्याधिष्ठानमात्रं तत्त्वं तद्विज्ञाने च नाऽविदितं वस्तु परिशिष्यत इत्येकविज्ञानेन सर्वविज्ञानोपपादनपराणि मृत्तिकादिनिदर्शनानि=मृत्पिण्ड सुवर्णपिण्ड कृष्णायसोदाहरणानि, सङ्गतिं=प्रकृतदा-

र्ष्यान्तिकसम्बन्धम् , आप्नुयुः=लभेरन् । सविशेषस्यैव तत्त्वतो निरूप्यत्वे यावद्विशेषविशिष्टतत्स्वरूपस्य जन्मसहस्रेणाऽपि ज्ञातुमशक्यत्वात् सामान्यतो ज्ञानस्य च प्रत्युत विशेषजिज्ञासाहेतुत्वेन तदनिवर्तकत्वात्सदेकवस्तुविज्ञानेन सर्वविज्ञानोपपादनाऽसंभवात् विवर्तवादः सृष्टिश्रुतेर्दृष्टान्तश्रुतेश्चाऽभिप्रेत इति भावः। अयमेवाऽस्याः श्रुतेरभिप्राय इति दर्शयति भगवान्सूत्रकारः—"तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यादिना ॥ २३ ॥

उत्तरत्र च यद्बीजोत्पन्नवटशुङ्गफलस्य कारणपरम्परया कल्पितदेहान्तकार्यशुङ्गस्य स्वस्वकारणव्यतिरेकेणाऽसत्त्वपर्यालोचनक्रमेण परमार्थसत्यमूलकारणाऽन्वेषणे ब्रह्मैव तद्विश्रमस्थितीयं सत्पर्यवस्यतीति वक्तुं "तत्रैतच्छुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यतीति तस्य क्व मूलं स्यात् अन्यत्राद्भ्यः एवमेव खलु सोम्याऽन्नेन शुङ्गेनाऽपो मूलमन्विच्छ, अद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ, तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ, सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इत्यादिना उत्पत्तिकालत्रयेऽपि जगतः सद्व्यतिरेकमुक्त्वाऽन्ते "स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इति निर्विशेषसन्मात्रस्वभावस्यैव आत्मत्वदृढीकरणपूर्वकं प्रत्यगैक्योपदेशस्य नवकृत्वोऽभ्यस्यमानत्वाच्च सृष्टिवाक्यस्य नान्यपरत्वसंभावनापीत्यभिप्रेत्याह—सदिति ॥

मू० ॥ सत्प्रसूतमिदं सति स्थितमस्तमेति सति स्वतः
सत्तया परिहीणमित्यखिलं सदेव पृथङ्मृषा ।
कल्पितं हि पृथङ्नसन्मृगतृष्णिकोदकवन्मरो-
स्तत्सदद्वयमेव वस्त्विति सृष्टिवाक्यसमीहितम् ॥ २४ ॥

इदं=जगत् आदौ सद्रूपाद्ब्रह्मणः प्रसूतं=आविर्भूतं, स्थितिकाले च तस्मिन्नेव सति स्थितं, अन्ते च सत्येव अस्तं=अदर्शनं एति=प्राप्नोति। एवं कालत्रयेऽपि ब्रह्मसत्ताऽव्यतिरेकात्स्वतः सत्तया परिहीणं रहितम्, इति=एवं रीत्या अखिलं=सर्वं जगत्, सदेव परमार्थतः। सतः पृथक्क्रियमाणं तु मृषा असदेव "अपागादग्नेरग्नित्वं त्रीणि रूपाणीत्येव सत्यम्" "वाचा-

रम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति कारणाऽनतिरिक्तसत्ताकत्वात्कार्यस्य स्वतो मिथ्यात्वप्रतिपादनादित्यर्थः। तत्र कल्पितस्य तत्पृक्सत्ताशून्यत्वे प्रसिद्धतरं दृष्टान्तमाह—कल्पितं हीति। मरोः=मरुभूमेः चण्डातपसन्तप्तात् पृथक्=मृगतृष्णिकोदकं यथा असत् तद्वत्कल्पितं जगदप्यधिष्ठानसन्मात्रादित्यर्थः। हीति पृथक्सत्त्वे बाध्यत्वाऽयोगादिति हेतुद्योतनार्थः। तत्=तस्मात् छान्दोग्येऽपि सदद्वयमेव परमार्थवस्त्विति सृष्टिवाक्यानां समीहितम्=तात्पर्यमित्यर्थः।

अत्राऽख्यातिवादी प्रत्यवतिष्ठते—मृगतृष्णिकोदकवदिति दृष्टान्ताऽसिद्धिः। भ्रान्त्यात्मकविशिष्टज्ञानाऽनभ्युपगमात्। तत्र हि इदमिति सलिलमिति च द्वौ प्रत्ययौ स्वतो विषयतश्चाऽगृहीतभेदौ। इदमिति हि मरुदेशसंपृक्ता मरीचयो दोषवशादगृहीतमरीचित्वादिविशेषा गृह्यन्ते। सलिलमिति च प्रागनुभूतं सलिलं मरीचिशौक्ल्यस्वाच्छ्यदर्शनोद्बुद्धसंस्कारकं दोषवशादेव प्रमुष्टतत्ताकं स्मर्यते। नच मरीचिबुद्धौ सलिलं गोचरं। अनुभवविरोधादसंनिकृष्टत्वाच्च। एवं सलिलबुद्धावपि न मरीचयः। ज्ञानानां विषयव्यभिचारे सर्वत्राऽनाश्वासप्रसङ्गात्। नच खलु पुरः सत्तामात्रेण, जनकत्वेन वा अर्थानां ज्ञानगोचरता। चक्षूरसयोरपि चाक्षुषत्वाऽऽपातात्। अपितु ज्ञानभास्यत्वेन। नच सलिलप्रत्यये मरीचयो भासन्त इति सांप्रतम्। किञ्च, इन्द्रियाणां यथार्थप्रत्ययजननस्वाभाव्यं चलसं विपर्ययाभ्युपगमे हीयेत। सदोषाणां तेषां मिथ्याप्रत्ययहेतुतेति चेत्। न। दोषाणां कार्यप्रतिबन्धमात्रहेतुत्वेन कार्यान्तराऽप्रयोजकत्वात्। अन्यथा दुष्टात्कुटजबीजाद्वटाङ्कुरान्तरोत्पत्तिप्रसङ्गात्। नच पुरःसलिलाऽप्रतिभासे तदर्थिनस्तत्र प्रवृत्तेः, उत्तरत्र नेदं सलिलमिति बाध्यस्यचाऽनुपपत्तिः। तत्र प्रवृत्तेस्तद्विवेकाऽग्रहमात्रनिबन्धनत्वाद्बाध्यस्य च तत्प्रसञ्जितव्यवहारमात्रगोचरत्वात्। पीतश्शङ्ख इत्यादिस्थले तु ग्रहणयोरिव स्वतो विषयतश्चाऽसंसर्गाऽग्रहात्तथा व्यवहारः। इत्थं च सर्वेऽपि सन्देहविभ्रमत्वेनाऽभिमतप्रत्ययाः यथार्था एव प्रत्ययत्वात्, संमतवदिति मृगतृष्णिकोदकवदित्यदृष्टान्त इति। तदसारम्। विवेकाऽग्रहमात्रेण सलिलार्थिप्रवृत्तेः इदं सलिलमिति सामानाधिकरण्य व्यवहारस्य च विशिष्टग्रहणहेतुकत्वेन निरूढस्याऽनिर्वाहात्।

अग्रहणमात्रस्य सर्वदैव सुलभत्वेन उदासीनपुरुषस्यापि तथाविधस्य पुरः-
प्रवृत्त्याऽऽपत्तेः॥ ननु न विवेकाऽग्रहमात्रात्प्रवृत्तिः, किन्त्वगृहीतविवेकत्वेन
विशिष्टयथार्थज्ञानसदृशाज्ज्ञानद्वयादेवेति चेत्। अत्र भवान्प्रष्टव्यः, किं
विशिष्टैकज्ञानसादृश्यं गृह्यमाणं तयोःप्रयोजकं? उत सत्तामात्रेणेति? आद्येऽपि
इमे ज्ञाने विशिष्टज्ञानसदृशे इति सामान्यतो वा, इमे स्वतो विषयतश्चाऽगृ-
हीतभेदे इति विशेषतो वा सादृश्यग्रहणम्? । न चोभयथापि विशिष्टार्थिन-
स्तत्सदृशे प्रवृत्तिसिद्धिः। नहि सामान्यतो विशेषतो वा गोसदृशो गवय
इति ज्ञानात्,गोप्रत्ययसदृशोऽयं गवयप्रत्यय इति बोधाद्वा गवार्थी गवये प्र-
वर्तते। अगृहीतभेदे इमे ज्ञाने इति तु व्याहतम्। नहि भेदाग्रहे इमे इति,
अगृहीतभेदे इति वा भवति। अतः सत्तामात्रेणेति पक्षएव परिशिष्यते।
तत्र विमतौ विवेकाऽग्रहरूपात् विशिष्टज्ञानसादृश्यात्केवलेन न प्रवृत्तिः सिद्ध्य-
ति। कथं हि तत्र प्रवर्तेत यदि न तदिच्छेत्। अन्यदिच्छन्नन्यत्करोतीति
च व्याहतम्। न चेत्पुरोवर्तिनं जलमिति जानीयात्, कथं तदिच्छेत्।
यदि जलत्वेनाऽज्ञानात्प्रवर्तेत इति ब्रूयाः,अथ जलत्वेनाऽज्ञानात्कुतो नोपेक्षेत,
तथोपादानोपेक्षाभ्यामुभयतःकृष्यमाणो विशिष्टजलारोपे सत्येव प्रवृत्तौ
व्यवतिष्ठते इत्यारोपपक्ष एव भेदाऽग्रहः प्रवृत्तिहेतुः। आरोपिते हि जले तज्जा-
तीयस्य तृषोपशमहेतुतामनुचिन्त्य तज्जातीयतया पुरोवर्तिन्यपि तदनुमाय
तदर्थी तत्र प्रवर्तत इति क्रमः सिद्ध्यति। तथाच प्रयोगः—विवादास्पदं जलादि-
ज्ञानं पुरोवर्तिविषयकं, जलाद्यर्थिनः पुरोवर्तिनि नियमेन प्रवर्तकत्वात्।
यत् यदर्थिनं तथा प्रवर्तयति तज्ज्ञानं तद्गोचरं। यथोभयसंमतं तथ्यं जल-
ज्ञानमिति। तथाहि—अनुभविता क्व जलमिति पृष्टः पुरःप्रदेशमङ्गुल्या नि-
र्दिशति। दृष्टं हि दधिसिद्धार्थकदुग्धैवंबीजानां कदलीकाण्डरूपकार्यान्तरजन-
कत्वं। भस्मकरोगदुष्टजाठराग्नेश्च बह्वन्नपानजरणं तुल्यमिति सदोषैरिन्द्रियै-
र्मिथ्याप्रत्ययजननाऽविरोधः। प्रत्यक्षबाधितविषयं ह्याभासानां याथार्थ्यानु-
मानं वह्निशैत्यानुमानवत्। बाधकत्वेन हि ज्ञानानां स्वतः प्रामाण्यं नाव्यभि-
चारेणेति विपर्ययस्य विषयव्यभिचारेऽपि न सर्वथाऽनाश्वासः। नेदं जल-
मिति बाधाऽनुसारेण बाध्यार्थस्याऽनिर्वचनीयजलस्यैवाऽभ्युपगमात् नाऽत्य-
न्ताऽसद्विषयकत्वमपीति न दृष्टान्ताऽसिद्धिः॥

नन्वस्तु तर्ह्यन्यथाख्यातिः। तथाच गङ्गादौ प्रसिद्धस्यैव जलस्य जल
त्वस्य वा स्मृत्युपनीतस्य पुरोदेशे मरीचिषु वा ग्रहः, तयोश्च देशान्तरे
स्वविशेष्यात्पृथक्सत्त्वाद्दृष्टान्तासिद्धि स्तदवस्थैवेति चेत्। न। तयोरसं-
निकृष्टत्वेनेदमर्थाऽसंभिन्नत्वेन चापरोक्षेण इदमर्थोपरागेण च प्रतिभासाऽनुप-
पत्तेः। तत्र चाक्षुषादिवृत्तिव्याप्तिमन्तरेण तदवच्छिन्नचैतन्ये आवरणभङ्गा-
योगेनाऽनावृतचैतन्यतादात्म्यलक्षणविषयाऽऽपरोक्ष्याऽसिद्धेः। वृत्तिषु च
विषयाऽपरोक्षप्रयुक्तमेवाऽऽपरोक्ष्यं, न वैजात्यरूपं, नियामकाऽननुगमात्।
पर्वतो वह्निमानित्याद्यपरोक्षपक्षकानुमितौ पर्वतं पश्यामि वह्निमेवाऽनुमिनो-
मीत्यनुभवेन आंशिकत्वोपगमाच्च करणनियम्यत्वाऽभ्युपगन्तुरपि करणाऽसं-
प्रयुक्त जलादौ तदसिद्धेश्च॥ नच तत्र दोषनियम्यं तत्। दोषाणामननुगतत्वा-
त्। तेषां भ्रमत्वमात्रप्रयोजकत्वेनाऽऽपरोक्ष्याऽप्रयोजकत्वात्। विशिष्टाऽऽ-
रोपस्थले विशेषणताऽवच्छेदकवैशिष्ट्याऽवगाहनांशे भ्रमस्यापि प्रमात्वा-
ऽऽपत्त्या तद्धेतोर्दोषस्य चक्षुरादिवत्प्रमाणान्तरत्वाऽऽपत्तेश्च। मनो हि यद-
साधारणं कारणमासाद्य बहिर्गोचरां प्रमां जनयति, तदेव प्रमाणान्तरमिति
परैरभ्युपगमात्। अन्यथाख्यातिभक्तेर्जलादेः पुरोवर्तिसंसर्गांशेऽनिर्वाहाच्च।
न ह्यसौ जलादिप्रदेशसंसर्गः। तस्य तत्प्रदेशभानमन्तरेण भानायोगात्।
संसर्गे संसर्ग्यनिरूपितसांसर्गिकविषयताया अप्रसिद्धेः। नापि पुरोवर्तिसं-
सर्गः। तस्य जलाद्यनिरूप्यत्वात्। तदनिरूप्योपि दोषात्तन्निरूप्यत्वेन भासत
इति चेत्, तर्हि संसर्गे जालादिनिरूप्यत्वाऽऽरोपाय सम्बन्धान्तरमन्वे
षणीयं तदवस्थम् अनवस्थितं च। विनैव सम्बन्धं तन्निरूपितत्वभानेऽभ्यु-
पगते तु स एव पुनरुपस्थितोऽख्यातिवादः॥ न च विशिष्टज्ञाने तन्निरूप्य-
त्वलक्षणः संबंधसम्बन्धो भासते इति त्वयाभ्युपगम्यत इति न प्रसिद्धसंसर्ग
ख्याति सिद्धिः। अत एवाऽसत एव संसर्गस्य भानमिति न्यायटीकाकृतः।
न च सोऽपि युक्तः। संसर्गांश इव प्रकार विशेष्यांशयोरपि असद्विषय-
त्वाऽवर्जनेन विज्ञानवादाऽऽपत्तेः। किञ्चाऽनुभविता मृगतृष्णिका नदीमनु-
भूतचर विलक्षण संस्थानवीची प्रकार संनिहित तरु गुलमादि प्रतिबिम्ब
सङ्कुलामिति विततस्वच्छ भास्वर जलामनुभवन्नपूर्वेयमित्येवाऽध्यवस्यति।
पृच्छ्यमानोऽपि तथैवाऽऽचष्टे। उत्तरकालं च समीपोपसृप्तो नेदं जलमि-

ति बाधमनुभवति। न तु गङ्गादावेव इदं जलमिति। प्रतीतिमात्रशरणैर्याव-द्वाधं प्रातिभासिकमनिर्वचनीयमेव सलिलाद्यभ्युपेयम्। एवं च सत्यमि-थ्याशब्दयोर्लोके भिन्नार्थकता, असति बाधे शङ्काविषादिना मरणमूर्च्छा-दिदर्शनं, स्वप्ने देवतानुग्रहादेः फलावाप्तिरित्येवमादीन्यर्थनिमित्तानि का-र्याण्युपपद्यन्ते नान्यथेति बहुधा पराक्रान्तमत्र महद्भिः।

ननु तर्ह्यस्तु स्वसंवेद्यत्वादपरोक्षस्य भावविज्ञानपरिणाम एव मृग-तृष्णिकादिः। तथाहि — यथाप्रत्ययमेव सर्वत्राऽर्थसत्ताऽवधारणमित्यु-त्सर्गो बाधकप्रत्ययबलात्क्वचिदपोद्यते। नेदं सलिलमिति बाधकप्रत्यय-स्य चेदंतामात्रबाधेनोपपत्तेर्न सलिलगोचरता। तस्य धर्मिणो बाधे हि धर्मितद्धर्मसलिलत्वं चेत्युभयं बाध्येत। तत्परमिदंतयाऽऽस्यैका बाध्यत इति कल्पनं। तथा च तज्जलं बहिर्बाधितम् अर्थादान्तरं विज्ञाने व्यवतिष्ठत इति ज्ञानाऽऽकारस्यैव बहिरध्यासः। तस्मात्र न प्रागुक्तदोष इति। तदप्यसारम्। प्रातिभासिकार्थानां विज्ञानाऽऽकारता तदनुभवादुच्येत? उत तद्बाधकप्रत्ययबलात्? न तावदाद्यः। अनुभवो हि इदं काराऽऽस्पदं बाह्यं जलमित्यावेदयति, नान्तरविज्ञानम्। अहं जलमिति हि तदा स्यात्। भ्रान्तविज्ञानं स्वाकारमेव जलादि बाह्यत्वेनाऽध्यवस्यति, नाऽहंत्वेनेति चेत्। न। तर्हि तेन स्वाकारताऽसिद्धिः। नापि द्वितीयः। नेदं जल-मिति प्रत्ययो हि पुरोवर्ति द्रव्यं जलाद्विवेचयति न तु जलस्य ज्ञानाका-रतां गोचरयति। अहमेव जलमिति हि तदा स्यात्। पुरोवर्तिनः प्रतिषेधे-ऽर्थाज्ज्ञानाकारतेति चेत्। संनिधान प्रतिषेधेह्यसंनिधानं स्यात्। अत्यन्त-संनिधानन्त्वस्य प्रतिपन्नात्मता लक्षणं दूरापास्तम्। न च मानान्तरं विज्ञा-नाकारताग्राहकमस्ति। किञ्च॥ यत्तद्विज्ञानाकारे रजते इदमर्थसंवलनं भा-सते तच्चेद्बाह्यं? तर्ह्यन्यथाख्यातिः। अथाऽऽन्तरमेव?। तदेदमर्थस्याप्यान्त-रत्वप्रसङ्गेन बाह्यार्थाऽभ्युपगमहानिरिति नाऽऽत्मख्यातिसिद्धिः।

अस्तु तर्ह्यसत्ख्यातिरेव। आन्तरस्य विज्ञानस्याऽसद्बाह्यार्थप्रकाशन-शक्तिरेवाऽदृष्टान्तसिद्ध स्वप्रत्यय सामर्थ्याऽऽसादितस्वभावोऽविद्येत्यभ्युपग मादिति चेत्। न। येयमसत्प्रकाशनशक्ति, किं पुनरस्याः शक्यं? असदिति चेत्। किमस्याःकार्यं? उत ज्ञाप्यं? नाद्यः। असत उत्पत्त्ययोगात् निरात्मकस्य

आत्मलाभोक्तिव्याघातात्। नापि द्वितीयः। ज्ञानान्तरानुपलब्धेरनवस्थापाताच्च। नोभयमपि। सदसतोः सम्बन्धाऽयोगात्। असदधीननिरूपणत्वं प्रत्यये तत्सम्बन्ध इति चेत्। न। तेनाऽनाहिताऽतिशयस्य तदधीनत्वोक्त्ययोगात्। अतिशयाऽऽधायकत्वे चाऽसत्त्वव्याघातात्। अर्थक्रियाकारित्वस्यैव त्वन्मते सत्त्वात्। असदन्तरेणाऽप्रथमानता प्रत्ययस्यैव स्वभावो, नत्वसता किंचित्क्रियत इति चेत्। विनैव हेतुं प्रत्ययस्याऽसत्पक्षपातोक्तेरुपहासाऽऽस्पदत्वात्। न च प्रत्ययेनाऽसति किञ्चिदाधीयते। तस्याऽऽधारत्वाऽयोगादिति नाऽत्यन्ताऽसतः प्रतिभाससिद्धिः। ननु तर्ह्यस्तु सदसदात्मकमेव सर्वं वस्तु। सत्त्वं तु स्वतः। असत्त्वं तु तस्य परतः। यथाहुः—

"स्वरूपपररूपाभ्यां नित्यं सदसदात्मके।
वस्तुनि ज्ञायते किञ्चिद्रूपं कैश्चित्कदाचन॥" इति॥

न च विरोधः। भावस्याऽसत्त्वं भावान्तर स्वरूपमेवेत्यभ्युपगमात्॥ यथाहुः—

भावान्तरमभावोऽन्यो न कश्चिदनिरूपणात्॥ इति।

तथा च मरीचिकोदकप्रत्ययस्य सदसदात्मक वस्तुगोचरत्वान्नमिथ्याऽर्थावगाहितेति दृष्टान्ताऽसिद्धिरेवेति चेत्। तर्हि किं मरीचिषु तोयप्रत्ययस्तत्त्वगोचरः? तथा सति न विपर्ययः स्यात्, नापि बाध्येत। स्यादेवं यदि मरीचीनतोयात्मकांस्तथैव गृह्णीयात्। तोयात्मनातुगृह्णन् कथमविपर्ययः स्यात् अबाध्यो वेति चेत्। हन्त तर्हि तोयाभावात्मनां मरीचीनां तोयात्मता न सती। अभावस्य प्रतियोग्यभेदाऽयोगात्। नाप्यसती। वस्त्वन्तराऽऽत्मनैवाऽसत्त्वस्य त्वया वाच्यत्वेन तादृशवस्त्वनिरूपणात्। द्वयोर्हि वस्तुनोरिहप्रसक्तिः गङ्गादितोयस्य मरीचीनां च। न तावदाद्यात्मना। गङ्गायां तोयमिति प्रत्ययाऽऽपत्तेः। गङ्गादिगतत्वाऽनुपस्थितौ तोयमित्येव प्रतिभासाऽऽपत्तेः। तदाऽऽत्मना असत्त्वे तद्भिन्नत्वाऽऽपत्तेश्च। नापि द्वितीयाऽऽत्मना। मरीचय इत्येव प्रतिभासाऽऽपत्तेः। तोयमित्यनापत्तेः। सन्मरीच्यात्मना असत्त्वव्याघाताच्च। मरीचीनामप्यन्यात्मना असत्त्वाद्व्याघात इति चेत्। तर्हि यदाऽऽत्मना मरीचीनामसत्त्वम् तोयात्मताया अपि तदाऽऽत्मनैवाऽसत्त्वं स्यान्न मरीच्यात्मना। वस्तुतस्तु मरी-

चीनामपि नाऽसत्त्वसिद्धिः। व्याघातसाम्यादनवस्थानाच्च। नाप्यत्यन्ततुच्छा। अनुभवगोचरत्वाऽयोगात्। इत्थं चेयं न सती, नाऽसती, नापि सदसती इत्यनिर्वचनीयैव मिथ्याऽपरपर्याया अधिष्ठानमात्र सत्त्वाऽधीनप्रतिभासा मरुमरीचिका नदी सिध्यतीति निरूढो दृष्टान्त इति भावः॥२४॥

एवमाथर्वण ब्राह्मणेऽपि सृष्टिप्रपञ्चनं ब्रह्मैक्यपारमार्थ्योपपादनार्थमिति दर्शयन्मुण्डकोपनिषत्तात्पर्यं सङ्गृह्णाति—विद्ययेति।

मू० ॥ विद्यया परयाऽधिगम्यमुदीर्य धर्मविवर्जितं
सूक्ष्ममक्षरतस्ततः प्रभवत्यशेष जगन्मृषा।
तद्धि सत्यमिति स्फुटं परिशोध्य वेदनमात्रत
स्तत्स्वयं भवतीति नित्यमवासमाह तुरीयगीः॥२५॥

तत्र हि छान्दोग्यवदेव "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति प्रश्नमुपक्षिप्य "द्वेविद्ये वेदितव्ये पराचैवाऽपराच" इति प्रस्तुत ऋग्वेदाद्यपरविद्या प्रदर्शनानन्तरं "अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः"॥ इति ज्ञानकर्मेन्द्रियाऽविषयं अकारणकं नीलस्थूलत्वाऽऽदिरूपशून्यं चेतनत्वेऽपिचक्षुःश्रोत्रादिरहितमविनाशि विविधजगदात्मभूतं व्यापकं निरवयवत्वान्निर्गुणत्वान्निर्धर्मत्वाच्चाऽव्ययतो गुणतो धर्मतश्च व्ययशून्यमिति अशेषधर्मविवर्जितं, पृथिव्यादिस्थूलस्य उत्तरोत्तर सूक्ष्मोपादानकत्वात् परमसूक्ष्मं च, प्राग्दर्शिताऽपरविद्यातः परया=ज्ञानविद्यया अधिगम्यं=प्राप्यमिति उदीर्य=उपक्रमे सङ्कीर्त्य तदनन्तरं तस्य नित्यविभुत्वाद्युपपादनाय "यथोर्ण नाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति यथा सतः पुरुषात्केशलोमानि तथाऽक्षरात्संभवतीह विश्वम्" इत्यादिना अक्षरतः=निर्विकारात्। ततः=प्रागनुक्रान्ताद्दृष्टान्तानुरोधेनाऽभिन्ननिमित्तोपादानभूताद्ब्रह्मणः, अशेषजगत् प्रभवति=उत्पद्यते। तच्चाऽक्षरोपादानत्वबलादेव विवर्तरूपमिति श्रुत्या सूचितमेवेत्यभिप्रेत्याह—मृषेति। अत एवाऽग्रे, "परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात्" इति प्रपञ्चितस्याऽपरविद्याविष-

यकर्मफलस्य निस्सारतां प्रतिपाद्य ततो निर्विण्णस्य "येनाऽक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम्" इति खण्डान्ते परविद्याविषयस्याऽक्षरपुरुषस्य कर्मफलविलक्षणां परमार्थसत्यतां श्रुतिर्दर्शयतीत्यभिप्रेत्याह—तद्धीति। हि शब्दोऽवधारणे। तदेव परमार्थसत्यं, कर्माणि तत्फलानि च न तथेति श्रुतेराशय इत्यर्थः। एवमुत्तरखण्डेऽपि तत्सत्यमित्येव प्रस्तुत्य अग्रे विस्फुलिङ्गादिदृष्टान्तेन जीवोपाध्याऽऽविर्भाववर्णनानन्तरम् "एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च" इति जगदुत्पत्तिमुपवर्ण्य "तदेतत्सत्यममृतम्" इति निर्विकारत्वेनैव परमार्थसत्यत्वोद्धोषणात् "सत्यमेव जयति नानृतं" "यत्र तत्सत्यस्यपरमं निधानमिति" तत्समर्थनाच्च। सत्यत्वोपपादनायैव सृष्टिवाद इति सूचनाय वा हिशब्दः। एवं "पुरुष एवेदं विश्वं कर्म तपोब्रह्मपरामृतं। ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्" इति जगदपवादेनोत्तरत्र ब्रह्ममात्र परिशेषणेनाऽपि तस्योक्त एवाऽऽशय इत्याह—स्फुटं परिशेष्येति। किञ्च, "एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य" "स यो ह वै तत्परमं ब्रह्मवेद ब्रह्मैव भवति" इति ज्ञानसमकालमेव सर्वाऽविद्याग्रन्थि निवृत्ति नित्यसिद्ध ब्रह्मभावाप्तिश्रवणाच्च द्वैतस्याऽऽविद्यकत्वे प्रतीच एवाक्षरत्वे चाऽस्याः श्रुतेस्तात्पर्यं निर्णेतुं शक्यमित्यभिप्रेत्याह—वेदनमात्रत इति। वेदिता वेदनमात्रतः=साक्षात्कारादेव तत्=ब्रह्म तदानीं भवत्येव न मृत्वाऽऽन्ते भविष्यतीति "वेद" "भवति" इति वर्तमानाऽर्थक लट्प्रत्ययाभ्यां तुरीयगीः=चतुर्थवेदरूप। मुण्डकश्रुतिः वेदितुः स्वरूपभूतत्वेन नित्यप्राप्तं=अज्ञानादप्राप्तप्रायं तदपनयेन नित्याऽवाप्तमाह। ततोऽपि दर्शिताऽर्थसिद्धिरिति भावः॥ २५॥

माण्डूक्यश्रुतावप्येवैव तात्पर्यगतिरिति दर्शयति—भूतभावीति॥

मू०॥ भूत भावि भवज्जगत्परमं च सत्प्रणवात्मकं<br>
पादशः प्रविभज्य निह्नुत वाच्य वाचक भेदकम्।<br>
पूर्वं पूर्वमथोत्तरत्र विलाप्य तुर्यमलक्षणं<br>
स्वात्मरूपमथर्वणश्रुतिरभ्यधाच्छिवमद्वयम्॥ २६॥

"ओमित्येतदक्षरमिदं सर्वम्" इत्योङ्कारार्थत्वात्सर्वस्य जगत ओङ्कारात्मत्वं प्रस्तुत्य तस्योपव्याख्यानं "भूतं भवद्भविष्यदिति सर्वमोङ्कार एव यश्चाऽन्यत्त्रिकालाऽतीतं तदप्योङ्कार एवे"ति निह्नुत वाच्यवाचकभेदकं न्यक्षाऽभिधेयाऽभिधानभेदं यथा स्यात्तथा भूतं=अतीतकालसम्बन्धि, भावि=अनागतकालसम्बन्धि भवत्=वर्तमान कालसम्बन्धिचेति जगत्=कृत्स्नं चेतनाऽचेतनकार्यजातं तस्मात्परमं=उत्कृष्टं सत्=सच्छब्दवाच्यं कारणं चेति सर्वमपि प्रणवात्मकं ओङ्काराऽभिधमेवेति प्रस्तुतार्थं प्रपञ्च्य "सर्वं ह्येतद्ब्रह्मे"ति प्रणवात्मकत्वेन कल्पितं कार्यकारणरूपं सर्वं परमार्थतो ब्रह्मैवेति प्रपञ्चरूपापनयेनाऽधिष्ठानमात्रतां परिशेष्य "अयमात्मा ब्रह्मे"ति महावाक्येन प्रत्यगात्मतत्त्वस्यैव परिशेषित ब्रह्मत्वं सर्ववेदान्ततात्पर्यविषयीभूतं प्रदर्श्य तदेव प्रविलापनप्रक्रिययापि व्युत्पादयितुं "सोऽयमात्मा चतुष्पात्" इत्यादिना प्रणवात्मकमेव सप्रपञ्चमात्मानं कार्षापणमिव प्रणवमात्रातदर्थैकीकरणेन पादशश्चतुर्धा प्रविभज्य, अथ=अनन्तरं विश्ववैश्वानरात्मकमाद्यमकारपादं तैजसहिरण्यगर्भात्मकोकारपादे,तं च प्राज्ञाऽव्याकृताऽऽत्मकमकारपादे,तं चाऽर्धमात्रालक्ष्ये निष्प्रपञ्चे तुरीयपादे इति क्रमेण पूर्वपूर्वपादमुत्तरोत्तरस्मिन्विलाप्य=बुद्ध्या तद्व्यतिरेकेणाऽसत्यलक्षणां निःस्वरूपतां सम्पाद्य तदनन्तरं "अदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा सविज्ञेयः।" इति। तुर्यं=चतुर्थपादं "चतुरश्छयतावाद्यक्षरलोपश्चे"ति यत्। अलक्षणं=अलिङ्गं अद्वयं=द्वैतशून्यं शिवं=स्वप्रकाशपरमानन्दरूपं स्वात्मनः परमार्थसत्यस्वरूपं ज्ञेयत्वेन अथर्वणऋषेर्वेदस्य वा सम्बन्धिनी माण्डूक्यश्रुतिः अभ्यधात्=स्पष्टमुक्तवतीति सर्वश्रुतीनां निर्विशेष एव गतिसामान्यात्तात्पर्यमिति भावः। अत्र यद्यपि "नान्तः प्रज्ञं न बहिः प्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं नप्रज्ञं नाप्रज्ञम्" इति तैजसादेर्विश्वादेर्जाग्रत्स्वप्नान्तरालाऽवस्थायाः प्राज्ञादेश्च तुरीयपादएव निषिध्यमानत्वात्तत्रैव प्रविलापनमित्यक्षरात्प्रतीयते, तथापि मात्रापादैक्यकल्पनस्य दृष्टार्थत्वाऽनुरोधात्

अकारः पीड्यमानः सन्नुकारं प्रतिपद्यते"

इत्यादिशौनकीयस्मृत्यनुरोधात्पञ्चीकरणतद्वार्तिकादिसंप्रदायानुसाराच्च मात्राक्रमेणैव प्रतिविलापने श्रुतेस्तात्पर्यमिति सूचनाय पूर्वं पूर्वमुत्तरत्रेत्युक्तमिति बोध्यम् ॥ २६ ॥

इत्थं प्राधान्येन चतुर्णामपि वेदानां प्रसिद्धतरोपनिषत्सु सृष्टिवाक्यप्रसङ्गेन तात्पर्यं निर्णीय प्रतिवेदं शाखानां बहुत्वात्प्रातिस्विकरूपेण सर्वतद्वर्णनस्य ग्रन्थविस्तराऽऽपादकत्वात्पुनरुक्तप्रायत्वाच्च दर्शितदिशैव तत्रापि तात्पर्यं सुग्रहमित्यतिदेशेन सर्वोपनिषदां गतिसामान्यं सूचयन्प्रपञ्चितं तटस्थलक्षणमुपसंहृत्य तत्फलं स्वरूपलक्षणव्यवस्थितिरिति दर्शयति—इत्थमिति ॥

**मू० ॥ इत्थमेव ततस्ततः श्रुतसृष्टिवाक्यकदम्बकं**
**प्रक्रियाद्यभिशीलनेन सदद्वयेन समानयेत् ।**
**युक्तिभिः श्रुतिभिश्च सैष तटस्थलक्षणसङ्ग्रह-**
**स्तत्फले खलु लक्ष्यसत्त्वपरिच्छिदात्रयवारणे ॥ २७ ॥**

ततस्ततः=तासुतासु शाखासु ब्रह्मविद्याप्रकरणे श्रुतं सृष्टिवाक्यानां कदम्बकं=बृन्दं प्रक्रियाद्यभिशीलनेन=तत्रत्योपक्रमादिपरिशीलनेन । पूर्वपूर्वाचार्यसंप्रदायसिद्धयुक्तिभिः समानप्रकरणस्थसंवादिश्रुत्यन्तरैः चकाराद्विद्वत्संवादाऽऽत्मानुभवोपबृंहणादिभिश्च, सदद्वयेन=अद्वितीयसन्मात्रस्वभावेन परमात्मना समानयेत्=संभाजयेत् तात्पर्येण सङ्घटयेदिति यावत् । सः="हेतुत्वं लक्षणं यत" इत्यारभ्य प्रस्तुतः एषः=एतावत्कालं प्रपञ्चितो ब्रह्मणस्तटस्थलक्षणस्य सङ्ग्रहः=तात्पर्यवर्णनसङ्क्षेपः समाप्त इति यावत् ॥ युक्तिभिः श्रुतिभिश्चेत्येतदत्रापि सम्बध्यते । सैष इति "सोऽचि लोपेचेत्पादपूरणम्" इति सुलोपः । तत्फले तस्य=वर्णितस्य जगद्विवर्तोपादानकारणत्वरूपतटस्थलक्षणस्य फले=प्रयोजने द्वे । के ते इतितत्राह—लक्ष्येति । लक्ष्यस्य=ब्रह्मणः, सत्त्वं=परमार्थसत्यता, परिच्छिदात्रयस्य=त्रिविधपरिच्छेदस्य वारणं चेति द्वे बोध्यतया फले इत्यर्थः । खल्विति प्रसिद्धौ । तथाच जगतो ब्रह्माऽधिष्ठानकत्वाद्ब्रह्मणः सत्यत्वं, ब्रह्मातिरिक्तसत्यवस्त्वपरिशेषाच्च त्रिविधपरिच्छेदराहित्यलक्षणमानन्त्यं च तटस्थ-

लक्षणोपदर्शनफलमिति भावः। इदं चोपादानत्वमात्रफलम्। कर्त्रभिन्नोपादानत्वस्य तु कर्तृत्वबललब्धचेतनत्वनिर्वाहक चिद्रूपत्वसिद्धिः, चेतनदारोरोत्पत्तेरानन्दहेतुकत्वनियमे आनन्दरूपत्वसिद्धिश्चोक्तलक्षणफले बोध्ये॥२७॥

इत्थमुपायभूतं तटस्थलक्षणं सविस्तरपरीक्षणेन व्यवस्थाप्य तदुपेयं "सत्यं ज्ञानमनन्तं ब्रह्म। आनन्दो ब्रह्मेति व्यजानात्। विज्ञानमानन्दं ब्रह्म" इत्यादिवाक्यतात्पर्यविषयं ब्रह्मणः स्वरूपलक्षणमाह—सच्चिदिति॥

मू० ॥ सच्चिदद्वयसौख्यरूपममुष्य वास्तवलक्षणं
नाऽनृतेऽस्फुरणेऽसुखे पुरुषार्थतेति तदात्मना।
वारणीयविधाप्रकल्पितभेदलब्धपदैः पदै-
र्नैकरस्यहतिस्तथैव हि साधु पूर्वमवादिषम् ॥ २८ ॥

अमुष्य="ब्रह्मविदाप्नोति परम्" इत्यादिना ज्ञेयत्वेन प्रकृतस्य ब्रह्मणः, सच्चिदद्वयसौख्यरूपं=सत्यज्ञानाऽऽनन्दस्वरूपं, वस्तुन इदं वस्त्वेव वा वास्तवं=परमार्थवस्तुस्वरूपं असत्याद्यारोपितरूपव्यावृत्तस्य परिचायकत्वाल्लक्षणं=स्वरूपलक्षणमित्यर्थः। "सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रे हि सत्यादिपदानि विशेषणार्थानि। ब्रह्मपदं च विशेष्यसमर्पकम्। ब्रह्मण एव वेद्यतया प्रस्तुतत्वेन प्राधान्यात्। तत्र "गुणानां च परार्थत्वादसम्बन्धः समत्वात्स्यात्" इति न्यायेन परस्पराऽनन्वितानां सत्यादिपदानां प्रत्येकं ब्रह्मपदसम्बन्धे सत्यं ब्रह्म, ज्ञानं ब्रह्म, अनन्तं ब्रह्मेति त्रिभिः सम्बध्यमानं ब्रह्मपदमनृतादिव्यावृत्ते वस्तुविशेषेऽवतिष्ठते। सत्यादिपदान्यपि ब्रह्मपदार्थव्यावर्तनेन कृतकार्याणि ब्रह्मपदलक्ष्यवस्तुन्येवाऽवतिष्ठन्त इति सर्वपदानामेकप्रातिपदिकार्थमात्रवृत्तित्वाद्वाक्यस्याऽखण्डार्थत्वम्। न च नीलस्थूलमुत्पलमितिवत् सत्यत्वादिविशिष्टतत्तत्पदवाच्यार्थत्रयसंसृष्टं ब्रह्मेत्येव वाक्यार्थः किं न स्यादिति वाच्यम्। तथा सत्यद्वितीयार्थकाऽनन्तपदाऽसङ्गतनात्। "अग्राह्यमलक्षणम्" "एकमेवाऽद्वितीयं" "यत्र नान्यत्पश्यति" इत्यादि धर्ममात्रप्रतिषेधपरश्रुत्यन्तरविरोधाच्च॥ न चैवं

"संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्।
न शैत्येन नचौष्ण्येन वह्निः क्वापि विशेष्यते॥"

इति न्यायाद्ब्रह्मणि सत्यत्वादिविशिष्टसंसर्गबाधात् तदुपलक्षितस्वरूपस्य चाऽसाधारणस्याऽव्यभिचारात्सत्यादिविशेषणवैयर्थ्यमिति वाच्यम्। विवक्षितव्यावर्तकत्वाऽबाधेनाऽऽद्यदोषाऽभावात्। संभवस्य व्यावृत्त्युपयोगितयैव विशेषणतोपपादकत्वात्। कथमन्यथा शाखाग्रे चन्द्र इति वाक्ये चन्द्राऽसंसृष्टस्य शाखाग्रस्य वैयधिकरण्येन वा चन्द्रविशेषकत्वं, शैत्यं तु वह्निव्यावृत्त्युपयोगीति दृष्टान्तवैषम्यात्। एवं लक्षणाऽऽत्मकविशेषणेषु विशेष्यतावच्छेदकधर्मव्यभिचारोऽप्यनावश्यक इति द्वितीयदोषस्याऽप्यभावात्। अन्यथा गौः सास्नादिमतीति वाक्येऽपि गोत्वस्य सास्नादिमत्त्वाऽव्यभिचारेण लक्षणपदवैयर्थ्याऽऽपादनाऽऽपत्तेः॥ किञ्च। असौ व्यभिचारोऽव्याप्त्यापादकत्वाल्लक्षणस्य विरोध्येव, न तस्य विशेषणत्वेऽनुकूल इत्यव्यभिचारोऽत्र गुण एव, न दोषः। किञ्च। यत्र प्रसिद्धं किञ्चिदुद्दिश्यान्यद्विधातुं उद्देश्येऽतिप्रसङ्गवारणाय श्रोतुस्तत्सम्बद्धत्वेन प्रसिद्धविशेषणोपादानं,तादृशस्थल एव व्यभिचारस्य विशेषणोपयोगः। यथा—नीलमुत्पलमानयेति विधेयाऽऽनयनोद्देश्ये उत्पले नीलमिति विशेषणं,उत्पलत्वस्य नैल्याऽव्यभिचारे व्यर्थं स्यादिति। यत्र तु विशेषणस्वरूपमेव तत्राऽज्ञातं ज्ञाप्यमानत्वाद्विधेयं, प्रसिद्धविशेषणमुखेन विशेष्यस्वरूपमेव वा तथा, तत्र न व्यभिचारोपयोगः। यथा 'शङ्खः पाण्डुरः' इति, 'गोसदृशो गवयः' इति च। कथमन्यथा उद्देश्यतावच्छेदकव्यापकत्वमौत्सर्गिकं विधेये भासत इति शास्त्रविदां प्रवादः। कथं वा ग्रहं संमार्ष्टीत्यत्र ग्रहैकत्वस्य विवक्षितत्वे वाक्यभेदाऽऽपादकत्वमित्यूह्यम्।

अथवा। न वास्तवावेव संभवव्यभिचारौ विशेषणाऽर्थवत्त्वोपपादकौ किन्तु भ्रान्त्यादिसंभावितावपि। उष्णोदकमाहर शीतोदकमाहरेति विशेषणार्थदर्शनात्। तौ चात्र सर्वव्यावृत्तलक्षणवाक्याऽखण्डार्थनिर्णयात्प्राक् ब्रह्म सत्यज्ञानानन्दरूपमन्यादृशं वेति संशयसंभाव्यमानावापातदर्शिनां स्त एव। लक्षणेन व्यावृत्तवस्तुपरिच्चये च परं व्यावर्तेते इति सन्तुष्यताम्॥ नन्वेवं ब्रह्मपदाऽनतिरिक्तार्थकत्वात्सत्यादिपदानां लक्षणार्थत्वाऽनुपपत्तिः। अवकाशरूपमाकाशमितिवदप्रसिद्धस्य प्रसिद्धार्थकपदोपस्थाप्यतया स्वव्यावर्तकत्वेनैकस्यैव लक्ष्यलक्षणरूपत्वेन तदुपपत्तेः। न चैवं विशेष्यस्य

ब्रह्मणो जगद्विलक्षणस्य परमार्थसत्यस्य निर्विषयज्ञानस्य त्रिविधपरिच्छेद-शून्यवस्तुनश्चाऽप्रसिद्धौ

"मृगतृष्णाऽम्भसि स्नातः शशशृङ्गधनुर्धरः ।
एष वन्ध्यासुतो याति खपुष्पकृतशेखरः ॥"

इति वाक्यादिवाऽप्रसिद्धपदार्थकादस्माद्वाक्यात् बोधाऽनुपपत्तिरिति वाच्यम् । सर्वतो व्यावृत्तसाधारणरूपेण संसारदशायामप्रसिद्धावपि बृहधात्वर्थाऽनुगमानुरोधादात्मत्वाच्च सामान्यतोऽर्थस्य प्रसिद्धत्वेन मानान्तराऽबाधितविषयत्वेन च वैषम्यात् । सत्यादिपदानामप्यबाध्येऽर्थे लोकप्रसिद्धत्वेन तथैव ब्रह्मणि प्रवृत्तौ द्वैतमात्रप्रतिषेधबलादेव व्यावहारिकसत्यवैलक्षण्यपर्यवसानेन पूर्वं तथाप्रसिद्धेरनुपयोगात्। सर्वज्ञानस्यापि सर्वविषय प्रतिषेधे निर्विषयत्वेन पर्यवसानबोधोपपत्तेः न तथा प्राक्प्रसिद्ध्यपेक्षा । अनन्तपदस्यापि प्रसिद्धाऽन्तत्रयप्रतिषेधकत्वान्नाऽप्रसिद्धार्थकतेति विषमो दृष्टान्तः । वाक्यार्थभूतस्याखण्डवस्तुनः स्वाभाविकरूपेणाऽप्रसिद्धिस्तु अनधिगतार्थे प्रमाणभूतवेदवाक्यस्य प्रामाण्येऽनुकूलैव न प्रतिकूला । व्यावृत्तरूपस्य प्रागेव प्रसिद्धौ लक्षणवाक्यवैफल्याऽऽपत्तिश्चेति न कश्चिद्दोषः। जगदुपादानत्वात्परिणामित्वे अनृतोपादानत्वादनृतत्वे वा ब्रह्मणः प्राप्ते तद्वारणाय सत्यमिति विवर्ताधिष्ठानत्वाऽबाध्यत्वयोः प्रदर्शनाय । परिणामविवर्तयोर्मृच्छुक्त्यादिजडेष्वेव दर्शनात्तद्वज्जडत्वप्रसक्तिवारणाय ज्ञानमिति । ज्ञातिर्ज्ञानं । भावे ल्युट् । ततो लौकिकघटादिज्ञानवदेव व्यावहारिकत्वाऽन्तवत्त्वयोः प्राप्तावनन्तमिति देशादिपरिच्छेदवारणाय । तद्बलादेव हि सत्यपदस्य पारमार्थिकसत्यपर्यवसानं । आनन्त्यमेव हि पूर्णता, सैव भूमेत्युच्यते। छान्दोग्ये—"यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति सभूमा" इति दर्शनादिक्रियाकारकफलादिद्वैतमात्रप्रतिषेधाऽवधौ सुखैकरसे भूमशब्ददर्शनात्। नच तत्राऽन्यदर्शनादिकमेव प्रतिषिध्यते,न तत्कारकफले नवा स्वात्मदर्शनमिति भ्रमितव्यम् । कर्तृकर्मतयोरेकत्र विरोधादेव द्रष्टृगोचरदर्शनाऽप्रसक्तेः । अन्यदर्शनमात्रनिषेधे चाऽभिप्रेते "यत्र न पश्यति न शृणोति" इत्याद्युक्त्यैव सिद्धेऽन्यपदत्रयवैयर्थ्यप्रसङ्गात् । तद्बलादेव त्रिपुटीनिषेधसिद्धेः। एवमपि लौकिकघटदुःखादिज्ञानसाम्यप्राप्तमस्पृह-

णीयत्वं द्वेष्यत्वं च निवारयितुं "यो वै भूमा तत्सुखं" "आनन्दो ब्रह्मेति व्यजानात्" इत्यादिश्रुतिसिद्धमानन्दात्मकत्वादिरूपमपि विशेषणं लक्षणे आवश्यकम्।

"आनन्दादयः प्रधानस्य" इत्यधिकरणे आनन्दादिभावरूपविशेषणानां "अक्षरधियां त्वविरोधः" इत्यधिकरणे अस्थूलाद्यभावरूपविशेषणानां च शाखन्तरोक्तानामवश्योपसंहर्तव्यताव्यवस्थापनादित्यभिप्रेत्य सौख्य रूपमित्युक्तम्॥ न च केवलमानन्दरूपत्वविशेषणेनैवेष्टसिद्धिः। परमपुरुषार्थताया स्तावताप्यलाभादित्युपदर्शयन्व्यतिरेकमुखेनाऽपि विशेषणत्रयसार्थक्यमुपपादयति—नेति। अनृते=मिथ्याभूते। अस्फुरणे=अनपरोक्षे। असुखे=सुखभिन्ने च वस्तुनि। पुरुषार्थता=मुमुक्षुपुरुषाऽभिलषणीयता परमपुरुषार्थता वा न संभवतीति हेतोः ब्रह्मणः तदात्मता=सत्यादिस्वरूपता उच्यते श्रुत्येत्यर्थः। अयं भावः—न सुखमित्येव पुरुषार्थः। शत्रुसुखस्य स्वपुरुषार्थत्वाऽदर्शनात्। किन्तु स्वस्य अपरोक्षं सुखमेव स्वपुरुषार्थः। तस्यापि बाधितत्वे परिच्छिन्नत्वेवा मानोरथिकसुखवद्विषयसुखवद्वा न परमपुरुषार्थत्वं, सर्वविरक्तस्य स्पृहणीयत्वं वा। नित्यसुखस्यापि कादाचित्कस्फुरणत्वे साधनाऽधीनाऽभिव्यक्तिकत्वाद्विषयसुखाऽविशेषः। स्फुरणस्यापि नित्यत्वे सम्बन्धभेदकल्पनवैयर्थ्यगौरवाभ्यां सुखस्याऽपरिच्छिन्नसत्यस्वप्रकाशरूपत्वकल्पनमेवोचितमिति परमपुरुषार्थवस्तुविशेषपरिचयार्थमेव सत्यादिविशेषणोपादानमिति॥ नन्वेकरसं ब्रह्मेति मुहुर्ब्रवीषि, सत्याद्यनेकरसतां च विशेषणैः प्रतिपादयसि, यदि च लक्षणया विशेषणपदानामेकरसवस्तुमात्रार्थकतां ब्रूषे, तर्हि द्वितीयादिपदवैयर्थ्यमित्यादिशङ्कायास्तु नाऽवसरः। प्रागेव परिहृतत्वादित्याह—वारणीयेति। वारणीयाः=व्यावर्तनीयाः, याः प्रपञ्चेप्रसिद्धाः असत्त्वजाड्यपरिच्छेदद्वेष्यत्वोपेक्ष्यत्वादिलक्षणाः विधाः=प्रकाराः, ताभिर्निमित्तभूताभिर्व्यावर्त्यवस्तुनि प्रकल्पिता=उपचरिता ये भेदास्तेभ्यो लब्धपदैः=प्राप्ताऽवकाशैः सत्यज्ञानादिपदैः वास्तवस्य एकरसस्य हतिः=क्षतिर्नास्त्येव। हि=यस्मात्, यथा=उक्तप्रकारेणैव साधु=सोपपत्तिकं यथास्यात्तथा पूर्वं="सच्चित्सौख्यैकरस्येऽपि" इति श्लोके अवादिपं=अभिहितवानस्मीत्यर्थः॥ २८॥

तटस्थलक्षणवल्लब्धमपि स्वरूपलक्षणं युक्त्यन्तरैरपि स्थूणानिखनन्यायेन दृढीचिकीर्षुः सत्यत्वादित्रयं क्रमेण त्रिभिःश्लोकैः श्रौतलौकिकहेतुभिः समर्थयिष्यन् प्रथमं सत्यत्वं तथा समर्थयते—सत्यत्वमिति ॥

सत्यत्वं तस्य सौक्ष्म्यान्नभस इव जगन्नीलिमाधारऽऽभावा-
दव्यावृत्तेरवृत्तेरखिलदृशितया सर्वथाबाऽधितत्वात् ।
निस्सङ्गत्वाऽविरोधात्सकलगततयाऽऽत्मत्वतः साक्षिभावा-
दन्यद्रष्टुर्निषेधात्स्फुटवचनशतैः स्वानुभूत्या च सिद्धम् ॥

तस्य=ब्रह्मणः सत्यत्वमेतेभ्यो हेतुभ्यः सिद्धमिति सम्बन्धः। तानेवाह—सौक्ष्म्यादित्यादिना। सूक्ष्मं=पटुकरणैरपि दुर्लक्ष्यं तस्य भावः सौक्ष्म्यं। निरुपपदं हि सूक्ष्मपदमौपचारिकपदधपदुत्कर्षकाष्ठामवलम्बते। सा चाकाशादिस्थूलपृथिव्यन्तस्य उत्पत्तिक्रमविपरीतेन पर्यालोच्यमाना ब्रह्मण्येव विश्राम्यति। स्थूलसूक्ष्ममूर्तेभ्योऽपि सूक्ष्मतमाव्यक्ताद्वैतत्वेन वासनागुणादिसंवलितत्वेन च स्थूलमायायास्तदधिष्ठानस्य चिदेकरसस्य परमसूक्ष्मत्वात्। प्रायशो लौकिकःश्रौतश्च वायो भ्रान्तिकाललक्ष्यस्य तत्कालदुर्लक्ष्याऽधिष्ठानाऽवधिकः प्रसिद्धः। 'नेदं रजतं' 'नभो न नीलं' 'अपागादग्नेरग्नित्वम्' इत्यादि यथा तथैव हि श्रुतिः "अन्नेन सोम्य शुङ्गेनाऽपो मूलमन्विच्छ" इत्यादिना क्रमेणाऽविशिष्टे मूलभूते सति "स य एषोऽणिमा" इति परमसूक्ष्मतां प्रदर्श्य "तत्सत्यं स आत्मा" इति तादृशस्यैव परमार्थसत्यतां दर्शयतीति भावः॥ यदि सौक्ष्म्येनाऽधिष्ठानतां निगमय्य सत्यता साध्यते, तर्हि कृतं परम्परान्वेषणेन, जगदधिष्ठानत्वेनैव साक्षात्तत्साधनसंभवादित्यभिप्रेत्याह—नभस इवेति। नभः पश्चे गच्छतीव दृष्टसंनिहितदेशादन्यत्र दूरैकदृश्यत्वादिति जगदिति नैल्यविशेषणम्। यथा नभस आध्यासिकनैल्याधारत्वात्तदपेक्षया सत्यत्वं,एवं सकार्यमाया नीलिमाऽधिष्ठानत्वात् ब्रह्मणो जगद्विलक्षणसत्यतेत्यर्थः। किञ्च रज्जुसर्पभूप्रदरजरल्लताखण्डछायादिभ्रमिकनानाकल्पनासु अनुवर्तमानस्य नद्यवप्राऽवलम्बितमूलस्य व्यावर्तमानरज्ज्वाद्यपेक्षयेव व्यावृत्तसर्ववस्तुषु सत्त्वेनाऽनुवर्तमानत्वादपि तस्य परमार्थसत्यता सुसाधेत्याशयेनाह—अव्यावृत्तेरिति॥ अनेन रज्ज्वादिवदेव व्यावृत्तेः जगद्रूपस्य

मिथ्यात्वमपि दर्शितमेव॥ ननु दूरान्माषराशावखण्डनीलशिलाध्यासे व्यावृत्तमाषाणां सत्यत्वम्, अनुवर्तमानशिलायां मिथ्यात्वमिति वैपरीत्यमपि दृष्टमिति व्यभिचार इति चेत्—न। तत्राऽन्वयव्यतिरेकाभ्यां राशेरेवाऽधिष्ठानत्वात्। तस्मिंश्च पूर्वोत्तरकालाऽनुवृत्ते शिलाया एव व्यावर्तमानत्वात् माषेष्वपि बाधोत्तरकाले शिलाऽनुवृत्त्यदर्शनान्मिथ्यात्वव्यापकव्यावृत्तत्वव्यतिरेकस्य त्रैकालिकाऽनुवृत्तत्वस्य च सत्यत्वसाधकत्वाऽक्षतेः॥ ननु रजताद्यारोपाधिष्ठानस्य शुक्त्यादेः सिद्धान्ते मिथ्यात्वादधिष्ठानत्वमव्यावृत्तत्वं च सत्यत्वव्यभिचार्येव, व्यावहारिकसाधारणसत्यताव्याप्यत्वोक्तौ तु ब्रह्मणि पारमार्थिकसत्यत्वाऽसिद्धिः। यदि त्वधिष्ठानान्तरशून्यत्वे सत्यधिष्ठानत्वं तादृशमव्यावृत्तत्वं वा तद्व्याप्यमुच्येत, तर्हि कृतं विशेष्येण,तावन्मात्रस्यैव व्याप्यत्वसंभवादित्यभिप्रेत्याह—अवृत्तेरिति॥ वृत्तिः आधेयता तच्छून्यत्वादित्यर्थः। नेदमत्र नेदमिदमित्याधारे कस्मिंश्चिन्निषेधाद्धि रजतादिर्मिथ्येत्यध्यवसीयते। न तु निराश्रयं ब्रह्म तथाऽध्यवसातुं शक्यम्। धर्म्यनुल्लेखिनिषेधाऽयोगात्तदधिष्ठानस्य चाऽप्रसिद्धेरिति भावः॥ अथवा॥ अवृत्तेरिति षष्ठ्यन्तं पक्षविशेषणं। तथा च तयोर्व्यावहारिकसाधारणसत्यत्वमात्रव्याप्यत्वेऽपि अवृत्तित्वविशिष्टपक्षधर्मताबलात् पारमार्थिकसत्यत्वासिद्धिरिति भावः॥ नन्वस्तु ब्रह्मणोऽप्याधारस्तत्रबाधश्चेत्याशङ्क्याह—अखिलदर्शितयेति॥ सर्वार्थप्रकाशकचिद्रूपतयेत्यर्थः।

अयंभावः—ब्रह्मणोऽप्याधारस्तत्र बाधश्च सिध्यन् द्रष्ट्रन्तरस्य मानान्तरेण सिध्येत्॥ न च ब्रह्मव्यतिरिक्तो द्रष्टाऽस्ति "नान्योतोऽस्ति द्रष्टा" इत्यादिना चेतनधात्वन्तरस्य प्रतिषेधात्। तत्तत्प्रमाणजन्यवृत्त्यवच्छिन्नब्रह्मचैतन्यस्यैव सर्वार्थप्रकाशमानत्वेन तद्व्यतिरिक्तस्य तयोः साधकस्याऽभावाच्च। ब्रह्मण एव तदुभयसाधकत्वोक्तौ च बाधकालावस्थायिनो बाधानुपपत्तेर्बाधोक्तिव्याघातात् "स भगवः कस्मिन्प्रतिष्ठितः इति स्वे महिम्नि यदि वा न महिम्नि इति अन्योह्यन्यस्मिन्प्रतिष्ठित" इति तदाधारनिषेधाच्च। पूर्वहेत्वसिद्धिशङ्कानिवर्तकस्याप्यस्य स्वातन्त्र्येणापि सत्यत्वव्याप्यत्वाद्धेत्वन्तरत्वं। विनापि मानं व्यसनितयैव ब्रह्मणोऽप्याधारकल्पनेऽनवस्था च स्यादिति तस्यैव सर्वाऽऽधाराऽऽधेयपरम्पराविश्रान्तिस्थानतोचितेति स-

र्यबाधाऽवधित्वमपि तस्यैव युक्तं। तेनापि सत्यता सिद्धेत्यभिप्रेत्याह—सर्व-बाधाऽवधित्वादिति॥ ननु शुक्तिरजतादिबाधस्य शुक्त्याद्यवधिकत्वात् नष्ट-घटादेर्बाधाऽप्रसिद्धेश्च कथं ब्रह्मणः सर्वबाधाऽवधित्वमिति चेत्। न। शु-क्त्याद्यवच्छिन्नचिन्निष्ठाऽज्ञानस्यैव रजताद्याऽऽकारपरिणामितया तादृशचित एव प्रातिभासिककार्यबाधाऽवधित्वात् "ब्रह्मैवेदं सर्वं" "सर्वं खल्विदं ब्रह्म" "नेह नानास्ति किञ्चन" इति श्रुतयो हि ब्रह्मण एव सर्वबाधाऽवधित्वं दर्श-यंति। अविद्यातत्कार्ययोरेक एव बाध इति प्रागुपपादनाच्च। मूलाऽविद्याबा-ध एव नष्टघटस्यापि बाध इत्यभ्युपगमात्। यदि तु "अपागादग्नेरग्नित्वं त्री-णिरूपाणीत्येव सत्यम्" इति श्रुत्यक्षराऽवलम्बेन शुक्त्यादेरपि रजतादिबा-धाऽवधित्वमुच्येत तदा सर्वेषां बाधानां अवधित्वात्=परम्पराविश्रान्तिस्था-नत्वादित्यर्थो योध्यः। इत्थंच नष्टघटबाधाप्रसिद्धावपि न क्षतिः॥ अथ-वा॥ अस्तु सर्वपदं बाध्यस्यैव विशेषणं। अवधित्वं तु परम्पराविश्रान्ति-स्थानत्वमेवेत्यदोषः। नष्टघटादेश्च निरन्वयनाशाऽनभ्युपगमात्कारणे तिरो-हितस्यैव बाधप्राक्काले सत्त्वात् ब्रह्मज्ञानेन बाधोपपत्तिरित्यदोषः। बाधात्मि का वृत्तिः स्वसम्बद्धं स्वविरोधिनं बाधेत। नचाऽसङ्गस्य सर्वान्तरस्य ब्रह्मणस्तत्सम्बन्धस्तद्विरोधो वाऽस्तीति अतोऽपि सत्यत्वसिद्धिरित्यभि-प्रेत्याह—निरसङ्गत्वाऽविरोधादिति॥ निस्सङ्गत्वसहितादविरोधादिति क-र्मधारयः समाहारद्वन्द्वो वा। निस्सङ्गत्वादविरोधाच्चेत्यर्थः। अप्रसिद्धप्र-सञ्जनाऽयोगादपि तद्बाधाऽप्रसक्तेः सत्यतेत्याशयेनाह—अखिलगततयेति। अभावप्रत्ययो हि बाधः नच सर्वगतस्याऽभावः प्रसिद्धो यत्प्रत्ययोऽस्य बाधः स्यादित्यर्थः। बाध्यबाधतत्प्रमातॄणां प्रत्यगात्मत्वादपि न बाधप्रस-क्तिः। स्वात्मनः केनाप्यपमर्दितुमशक्यत्वात्ततोऽप्यस्य सत्यता सिद्धिरि-त्याशयेनाह—आत्मत्वत इति॥ बाधपरिशेषितं हि रूपं बाध्यस्याऽऽत्मा। न च तस्मिन्भस्मनीव घटैर्बाधस्य व्यापारः संभवति। नवा स्वात्मनि। बाधस्यैव तदा बाधापत्तेः। स्वात्मनि क्रियाविरोधात्। नापि प्रमातुः। आत्मनि निष्प्रमातृकबाधाऽसिद्धेरिति भावः॥ एवं "बुद्धेः साक्षी मनसः साक्षी सर्वस्य साक्षी" इत्यादिश्रुतिषु ब्रह्मणः सर्वसाक्षित्वमाम्नायते। नच बाधकालाऽसतस्तदुत्तरभाविनश्चाऽर्थं प्रति साक्षितासंभवः। नच निस्सा-

क्षिकं किञ्चित्सिध्यतीति तस्य सत्यतैवेत्यभिप्रेत्याह—साक्षिभावादिति ॥ ननु जीवा एव तद्बाधादिसाक्षिणः सन्तु, तत्राह—अन्येति ॥ "नान्योऽतोऽस्ति द्रष्टा नान्यदतोऽस्ति द्रष्टृ" इत्यादिना चेतनधात्वन्तरप्रतिषेधात् "तत्त्वमसि" इत्यादिजीवानामपि परमार्थतो ब्रह्मैक्यबोधनात्साक्षिबाधे जगदान्ध्याऽऽपत्तेर्बाधसाक्षिचेतनधातुपरिशेषे तस्यैव ब्रह्मत्वात् न तस्य बाधसंभावनापीति तस्य सत्यैकरूपत्वमित्यर्थः। न केवललिङ्गैरेवाऽस्य सत्यतासिद्धिः, अपित्वाऽऽगमानुभवाभ्यामपीत्याह—स्फुटवचनशतैः स्वानुभूत्याचेति। "तदेतत्सत्यं" "तत्सत्यं स आत्मा" इत्यादिभिः स्फुटैः श्रुतिवचनशतैः विद्वदनुभवैश्चेत्यर्थः। अथवा—स्वानुभूत्या आगोपालाङ्गनं प्रसिद्धेनाऽहमित्याऽऽत्मप्रतिभासेन च ब्रह्मणः सत्यत्वं सिद्धम्। विमर्शे प्रतीच एव ब्रह्मत्वात्, ब्रह्माऽसत्त्वे प्रतीचोऽप्यसत्त्वप्रसङ्गात्। तथाच श्रुतिः—"असन्नेव स भवति असद्ब्रह्मेति वेद चेत्" इति "को ह्येवाऽन्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" इति चेत्यर्थः ॥ ३० ॥

एवं ब्रह्मणश्चिद्रूपत्वमपि दृढीकुर्वन्नाह—आत्मत्वादिति।

**आत्मत्वादीक्षितृत्वादखिलवशितया शास्त्रयोनित्ववादात्**
**कामाऽभिध्योपदेशात्कशितपनमुखद्योतिभारूपतोक्तेः।**
**साक्षादेवाऽपरोक्षादसुकृतसुकृताऽऽध्यक्ष्यसाक्षित्ववादात्**
**सर्वज्ञ ज्ञादिशब्दात्स्फुटवचनशतैश्चापि सच्चित्स्वभावम् ॥**

एकादश हेतुभिः सत्=सद्रूपत्वेन निश्चितं ब्रह्म, चित्स्वभावं=चैतन्यैकस्वरूपमिति सम्बन्धः। तत्राऽऽदौ सर्ववादिनां लौकिकानां च चेतनधर्मत्वेन प्रसिद्धमात्मत्वमेव विमर्शे ताद्रूप्यसाधनक्षममित्याऽऽशयेनाऽऽह — आत्मत्वादिति। श्रुतिषु च सर्वत्र ब्रह्मण्याऽऽत्मशब्दप्रयोगात् जडस्याऽऽत्मत्वनिरासाच्चेति भावः ॥ "भूतात्मा चेन्द्रियाऽऽत्मा च" इत्यादिवदाऽऽत्मशब्दस्य श्रुतिषु गौणत्वं मन्दमतिभिरित्याशङ्क्येतेत्यत आह—ईक्षितृत्वादिति। "तदैक्षत बहुस्यां प्रजायेय" इत्यादौ श्रुतस्य ईक्षितृत्वस्य चैतन्यनिर्वाह्यत्वात्तदन्यांऽशकल्पने प्रमाण प्रयोजनयोरभावाच्चि-

न्मात्रपरिशेष सिद्धेरिति भावः। तथा च "सर्वस्य वशी सर्वस्य ईशानः" "एतस्यैवाऽक्षरस्य प्रशासने गार्गि सूर्या चन्द्रमसौ विधृतौ तिष्ठतः" "भीषाऽस्माद्वातः पवते" इत्यादि श्रुतं सर्वजगन्नियन्तृत्वमपि निष्कर्षे चिद्रूपत्वे पर्यवस्यतीत्यभिप्रेत्याह—अखिलवशितयेति॥ अखिलं=जगत् वशयितुं=स्वायत्तयितुं शीलमस्याऽस्तीत्यखिलवशी तद्भावेनेत्यर्थः। शक्तिमांश्चेतनो हि राजादिरन्यान्वशयति, तत्र स्वतोऽशक्तस्यापि प्रशस्य स्वेतरकोशबलादि शक्तिमत्सान्निध्यानुरूप्यमेव नियन्तृत्वं दृष्टं नत्वचेतनस्य। शक्तस्याऽपि परप्रशासान्निध्येन तथेति मायाशक्तिभिरपि जगन्नियमनसंभवात्-स्थूलादिवाक्यैः प्रतिषिद्धशक्त्यादिधर्मकस्याऽक्षरस्य श्रुतं नियन्तृत्वं चिदेकरसत्वे पर्यवसितमिति भावः॥ एवं सर्वाऽर्थावबोधकत्वात्सर्वज्ञकल्पस्य वेदस्य पुरुषनिःश्वासवदनायासेनाऽऽविर्भावयितृत्वमपि तस्य सार्वज्ञ्यमुखेन सर्वार्थप्रकाशक्षमचिद्रूपत्वे पर्यवसितमित्याऽऽशयेनाह—शास्त्रयोनित्वादादिति॥ अथवा "नौपनिषदं पुरुषं पृच्छामि" "नावेदविन्मनुते तं बृहन्तम्" इत्यादि वेदैकवेद्यत्ववादादित्यर्थः। तथा चाऽन्यादृशस्य नैयायिकेश्वरवदनुमानादिगम्यत्वाऽऽपत्तेः वेदैकवेद्यत्वं प्रमाणान्तराऽगम्यचिदेकरसत्वे पर्यवसितमिति भावः॥ एवं "सोऽकामयत बहु स्यां प्रजायेय" इत्यादिना श्रुतौ कामशब्दोदिताऽवश्यबाह्याऽर्थगोचरसृष्टिसंकल्पलक्षणाऽभिध्यानोपदेशादपि तस्य तथात्वमित्याह—कामाऽभिध्योपदेशादिति॥ पूर्णकामस्य सुखतत्साधनरागलक्षणकामाऽसंभवादभिध्येत्युक्तम्॥ एवं "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः। तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुतं सूर्यादिसर्वाऽवभासकत्वं भौतिके तेजस्यप्रसिद्धं तस्य चित्प्रकाशाऽऽत्मकत्वे पर्यवस्यतीत्यभिप्रेत्याह—शशीत्यादि॥ शशी=चन्द्रः तपनः=सूर्यः मुख्यमिव प्रधानं येषां अग्निविद्युत्तारकादितेजसां तानि द्योतयितुं शीलं यस्य तथाविधभारूपत्वोक्तेरित्यर्थः।

किञ्च॥ "यत्साक्षादपरोक्षाद्ब्रह्म" इति अन्यनिरपेक्षप्रत्यक्षता तस्य श्रूयते, सा च चैतन्यस्यैव। विषयाऽपरोक्षस्य चैतन्यसापेक्षत्वेनाऽतथात्वात्। अतोऽपि तस्य चिद्रूपताऽवगतिरित्याह—साक्षादेवेति॥ एवं "कर्माध्यक्षः स-

र्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते" "एष ह्येवाऽसाधु कर्म कारयति तं यमधो निनीषते" इति सर्वकर्मसु प्रेरकत्वफलप्रदातृत्वसाक्षित्वानि तस्य श्रूयन्ते। तान्यपि प्रत्येकं चिद्रूपतायां पर्यवसितानीत्याऽऽशयेनाऽऽह—असुकृतेत्यादि। असुकृतं=सुकृतभिन्नं देहयात्रानुकूलं अविहिताऽनिषिद्धं दुष्कृतं च, सुकृतं=पुण्यं तयोः आध्यक्ष्यं=साधनस्वरूपाऽऽश्रयपरिपाकफलादिपरिज्ञानस्वातन्त्र्यं, साक्षित्वं=विशेषाऽनुपादानात्सर्वस्य साक्षाद्द्रष्टृत्वं तयोः वादात् = व्यक्तं प्रतिपादनादित्यर्थः। अखिलवशित्वाऽऽदिभिः-सार्वज्ञ्याऽऽक्षेपद्वारा चिद्रूपत्वं साधितं। "यः सर्वज्ञः सर्ववित्" "ज्ञः कालकालो गुणी सर्वविद्यः" इत्यादिसाक्षात्तच्छ्रुतिभिरपि चिद्रूपता स्वध्यवसानेत्यभिप्रेत्याह—सर्वज्ञज्ञादिशब्दादिति॥ एवं पर्यवसानगत्या चिद्रूपत्वे साधितेऽपि मन्दमतीनां तत्र कर्तृप्रत्ययादिश्रवणाद्विवक्षितविवेकांशो न सुबोध इतिकण्ठोक्तिरप्यस्तीत्याह—स्फुटवचनशतैरिति॥ परश्शतैः "सत्यं ज्ञानमनन्तं ब्रह्म" "नित्यं विज्ञानमानन्दं ब्रह्म" "चिन्मात्रोऽहं सदाशिवः" "चिदेकरसो ह्ययमात्मा" "प्रज्ञानं ब्रह्म" इत्यादि श्रुतिवचनैः "आह च तन्मात्रं" "चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः" इत्यादि सूत्रवचनैः,

"चैतन्यमात्मनो रूपं यत्तत्पश्यन्ति सूरयः"।
"तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्"

इत्यादिस्मृतिवचनैश्च स्फुटतरैः चकारात् विद्वदनुभवैश्च सत्=ब्रह्म चित्स्वभावं सिद्धमित्यर्थः। अपिशब्दो हेतुसमुच्चये॥ ३१॥

एवमानन्दरूपतामपि प्रमाणैर्दृढयन्नाह—सौख्येति॥

सौख्योत्कर्षोऽवधित्वान्निखिलसुखकणाऽम्भोनिधित्वश्रुतिभ्यो
मुक्तप्राप्यत्ववादान्निरवधिपरमाऽऽनन्दभूमात्मकत्वात्।
सर्वप्रत्यक्त्ववादान्निधि निलय वधू साम्यवादात्सुषुप्ता
वानन्दे ब्रह्मतोक्तेरपि च रसतया तत्सदाऽऽनन्दरूपम्॥

अत्राप्येतैर्हेतुभिः तत्=प्रस्तुतं ब्रह्म आनन्दरूपमिति सम्बन्धः । तान्दर्शयति—सौख्येति ॥ सातिशयपरम्पराणां हि पदार्थानामवश्यं उत्कर्षपरमावधिरस्त्येव । यथा न्यायनये परिमाणोत्कर्षपरमावधिराकाशादिः । यथा वा स्थौल्याद्युत्कर्षे लौकिकदृशापि महापृथिवी । प्रकाशोत्कर्षेऽपि सूर्यः। सुखमपि तथाविधमेव प्रसिद्धम् । तत्परम्पराऽवधिश्च श्रुत्या हिरण्यगर्भाऽन्ते उत्कर्षपरम्परामुपवर्ण्य "यतो वाचो निवर्तन्ते" इति ब्रह्माऽऽनन्द एव प्रतिपाद्यते । न च तत्र ब्रह्मण आनन्द इति षष्ठ्या तादृशाऽऽनन्दधर्म्येव ब्रह्म इत्यनानन्दरूपं तत्प्रतिपादितमिति भ्रमितव्यम्। उपक्रमगताऽऽनन्त्यविरोधात् "यदेष आकाश आनन्दो न स्यात्" इति सामानाधिकरण्यनिर्देशविरोधाच्च षष्ठ्याः राहोः शिर इतिवदविवक्षितार्थत्वस्याऽऽचार्यैर्व्यवस्थापनात् । "एषोऽस्य परम आनन्दः" इति श्रुत्यन्तरमप्येवं समञ्जसमिति भावः । तथा मात्रा तद्गतोल्लेखिसमानस्वभावता दृष्टा। यथा—अग्निविस्फुलिङ्गयोः । विषयसुखानि च सर्वभाण्युपजीव्यानि शीकरा इव समुद्रस्य ब्रह्ममात्राः श्रूयन्ते । "एतस्यैवाऽऽनन्दस्याऽन्यानि भूतानि मात्रामुपजीवन्ति" इति। अतोऽपि तस्याऽऽनन्दरूपत्वं स्वध्यवसानमित्याशयेनाह—निखिलेति । विषयसुखानां निरवयवब्रह्मसुखमात्रारूपत्वमौपाधिकमिति तु प्राक् प्रपञ्चितमेव। परमपुरुषार्थत्वश्रुतेरपि तस्य तथात्वमित्याह—मुक्तेति। "ब्रह्मवेद ब्रह्मैव भवति" "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्" "यदा ह्येवैष एतस्मिन्नदृश्ये ऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति" इत्यादिश्रुतिषु ब्रह्मभाव एव मुक्तप्राप्यः पुरुषार्थभूतः प्रतिपाद्यते। न च सातिशयसुखविरक्तानां निरतिशयसुखाऽतिरिक्तः पुरुषार्थो भवतीति अतोऽप्युक्तसिद्धिः। उत्कृष्टसुखार्थिनां हि तत्प्रतिकूलनिकृष्टसुखे जिहासा, तदनुकूलेषु क्लेशबहुलेष्वपि श्रवणमननयमनियमप्राणनिरोधादिषु प्रवृत्तिश्चोपपद्यते। अन्यथा तदुभयाऽनुपपत्तिः तद्बोधकशास्त्राऽप्रामाण्यं च स्यादिति भावः ॥ एवं "यत्र नाऽन्यत्पश्यति नाऽन्यच्छृणोति नाऽन्यद्विजानाति स भूमा, यो वै भूमा तत्सुखं, नाल्पे सुखमस्ति" इति श्रुत्या निरस्तत्रिविधाऽवधिनिरतिशयाऽऽनन्दत्वेनोपवर्णितभूमाऽऽत्मस्वरूपत्वादपि तत्सिद्धिरित्याह—निरवधीति॥ किञ्च । प्रत्यगात्मैव परमप्रेमास्पदत्वेन सर्वा-

नुभवसिद्धः । तथाविधत्वं त्वानन्दस्यैव नान्यस्येत्युपपादितम्, उपपादयिष्यते च । ब्रह्मण एव हि सर्वशरीरे प्रत्यगात्मभावेन स्थितिः श्रुतिस्मृत्यादिप्रसिद्धेत्यतोऽप्युक्ताऽर्थसिद्धिरित्याह—सर्वप्रत्यक्त्ववादादिति । "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः" "सर्वव्यापी सर्वभूतान्तरात्मा" "यदेवेह तदमुत्र यदमुत्र तदन्विह" इत्यादि परःशतश्रुतिषु

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।"
"अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ॥"
"शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥"

इत्यादिस्मृतिषु, "अवस्थितेरिति काशकृत्स्नः ।" "आत्मेतितूपगच्छन्ति ग्राहयन्ति च" इत्यादिसूत्रेषु ब्रह्मण एवाऽविकृतस्य प्रत्यक्त्वेन स्थितेर्व्यक्तमुक्तत्वादित्यर्थः। तथा "तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो नविन्देयुः। एवमेव इमाः सर्वाः प्रजा अहरहर्ब्रह्म गच्छन्त्य एतं ब्रह्म लोकं न विन्दन्ति अनृतेन हि प्रत्यूढाः" इति छान्दोग्ये हिरण्यनिधिसाम्यवादात् "तद्यथा श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्यपक्षौ सल्लयायैव ध्रियते एवमेवाऽयं पुरुष एतस्मा अंताय धावति यत्र सुप्तो न कञ्चन कामं कामयते नकञ्चन स्वप्नं पश्यति" इति बृहदारण्यके सुखविश्रान्तिस्थानसँल्लयशब्दितनीडगृहसाम्यवादात्, तत्रैव "तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किञ्चन वेद नान्तरम्"। "तद्वा अस्यैतदाप्तकाममात्मकाममकामं रूपं शोकान्तरम्" इति प्रियवधूसाम्यवादाच्च सुषुप्तौ जीवेन स्वाऽप्ययस्य ब्रह्मण आनन्दरूपतेत्याह— निधिनिलयवधूसाम्यवादादिति ॥ निधिः=निखातो धनसञ्चयः, निलीयतेऽस्मिन्पक्ष्यादिरिति निलयः= नीडं, वधूः=जाया, एतैः साम्यप्रतिपादकश्रुतिवादादपि सुखाऽऽत्मतासिद्धिरिति भावः॥ किञ्च॥ सुषुप्तौ जीवाऽप्ययाऽऽधारे "स यो मनुष्याणां राद्धः समृद्धो भवति" इत्यादिना सर्वाऽऽनन्दोत्कर्षकाष्ठात्वेन प्रतिपादिते "स एव ब्रह्मलोकः सम्राडिति होवाच याज्ञवल्क्यः" इति श्रुत्या लोक्यत इति लोको ब्रह्मैव लोको ब्रह्मलोक इति व्युत्पत्त्या ब्रह्मत्वोक्तेरपि तस्य तथात्वमित्याह—सुषुप्तावानन्दे ब्रह्मतोक्तेरिति॥ व्यधिकरणे सप्तम्यौ। तथा तैत्तिरीयाणामुपनिषदि यद्रसलाभादधिकारी आनन्दीभवति तादृशरसत्वेन

प्रतिपादनादपि तस्याऽऽनन्दरूपतेत्याह—रसतयेति॥ "रसो वै सः रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति" इति हि तत्र श्रूयते। अपिशब्दात् "को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्" "आनन्दो ब्रह्म" "नित्यं विज्ञानमानन्दं ब्रह्म" "विज्ञानमानन्दं ब्रह्म" "आनन्दो ब्रह्मेति व्यजानात्" इत्याद्याः कण्ठोक्त्यैव तस्य निगतिशयाऽऽनन्दरूपत्वाऽभिधायिन्यः समुच्चीयन्ते। चकारो हेतुसमुच्चये ॥ ३२ ॥

॥ इति तत्पदार्थव्युत्पादनसङ्क्षेपः॥

अखण्डवाक्यार्थज्ञानोपयोगितया शोधितत्पदार्थस्वरूपलक्षणं पूर्वपरिच्छेदे चार्वाकादिमतनिरासमुखेन देहेन्द्रियादिभ्यः परिशोध्य दर्शितं त्वंपदार्थेऽपि दर्शयति—सचिदिति।

सचित्सौख्यैकरस्यं निगदितमिह यद्ब्रह्मणो लक्षणं त-
त्प्रत्यक्त्वेऽपि ज्ञेये सममखिलदृशस्तस्य बाधाद्ययोगात्।
मुख्यप्रेमाऽऽस्पदत्वादुपधिविभिदया वस्तुभेदाद्यसिद्धे-
र्ब्रह्मांऽशत्वप्रवादात्तनुकरणदृशः स्वप्रकाशत्वतश्च ॥ ३३ ॥

इह=अस्मिन् तत्पदार्थपर्यालोचनपरग्रन्थसन्दर्भे। ब्रह्मणो यत्सचित्सौख्यैकरस्यं लक्षणं निगदितं=प्रपञ्चितम्। तज्ज्ञेये=ज्ञेयसंगिनि प्रत्यक्त्वे=प्राक्देहादिविज्ञानान्तेषु उत्तरोत्तरं प्रत्यक्त्वादात्मत्वेन प्रसक्तेषु ततोऽप्यान्तरस्वप्रकाशात्मत् तत्त्वतः प्रत्यगात्मत्वेन व्यवस्थापिते तत्साक्षिण्यपि समं=अविशिष्टं। तत्कुत इत्यत्राह—तस्येति॥ अखिलमवस्थात्रयं पश्यतीत्यखिलदृक्, तथाविधस्य तस्य बाधस्य आदिपदात् मायविकाराणां चाऽयोगात्। बाधादेस्तद्विषयस्य चाऽवस्थान्तर्गतत्वेन तदधीनसिद्धिकत्वेन मोक्षश्रुतिप्रामाण्येन च तस्य सत्यस्याबाध्य सिद्धेरिति भावः॥ एवमस्याऽऽनन्दरूपतापि प्रसिद्धेत्याह—मुख्यप्रेमाऽऽस्पदत्वादिति। अपारार्थ्यं चेह मुख्यत्वं, विषयादिविधानन्तु तादर्थ्येनैव प्रेमेति "प्रेयान्यः सद्नधनात्मजप्रियादेः" इत्यत्र प्रपञ्चितमेव। श्रुतिरपि "न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति, आत्मनस्तु कामाय सर्वं प्रियं भवति" इति प्रतीच एव तादृशप्रेमाऽऽस्पदतां सर्वाऽनुभवसिद्धामनुवदन्ती सुखस्वभावतां दर्शय-

तीति भावः॥ एवमस्याऽऽनन्त्यमपि विमर्शे सिद्ध्यतीत्याह—उपधिविभिदयेति। उपधिः=छद्म, मिथ्याभूतं सकार्यमज्ञानं तत्प्रयुक्तया विभिदया=दैशिकादिपरिच्छित्या प्रत्यग्वस्तुनो भेदादेः=द्वैताल्पत्वकादाचित्कत्वानामसिद्धेः। उपाधिप्रयुक्तधर्माणां वस्त्वसंस्पर्शित्वादुपाधीनां च मिथ्यात्वादानन्त्यसिद्धेरित्यर्थः॥ ननु मास्तु मायिकेन जगताऽस्य सद्वयत्वं, ब्रह्मणा तु स्यादित्याशङ्क्याऽऽह—ब्रह्मांशत्वप्रवादादिति। "यथा अग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवाऽस्मादात्मनः सर्व एवाऽऽत्मानो व्युच्चरन्ति"। "ममैवांशो जीवलोके जीवभूतः सनातनः"। "अंशो नानाव्यपदेशात्"। "अन्यथाचापि दाशकितवादित्वमधीयत एके" इति श्रुतिस्मृतिसूत्रेषु जीवस्य सचिदद्वयब्रह्मांशत्वप्रवादान्निरंशस्य मुख्यांशाऽसंभवात् घटाऽऽकाशे महाकाशांऽशतावदुपाध्यनुविधायि तत्कीर्तनस्य ऐक्ये पर्यवसानाद्भेदाऽसिद्धेरिति भावः॥ अंशांऽशिभावोक्त्यापि अग्निविस्फुलिङ्गयोरिव प्रत्यग्ब्रह्मणोः स्वरूपलक्षणसाम्यं दृढीकृतं बोध्यम्। एवमस्य चिद्रूपतापि सिद्धेत्याह—तन्विति। तनुः=शरीरं करणानि=इन्द्रियाणि च पश्यति अपरोक्षयतीति तनुकरणदृक् तस्येत्यर्थः। एतदपि "बाह्यार्थान्करणगणेन" इत्यत्र व्युत्पादितमेव। अथवा॥ ईश्वरस्य सर्वदा सर्वज्ञत्वाद्स्तुज्ञानस्वरूपत्वं, जीवस्य त्विन्द्रियाऽधीनजन्यार्थप्रकाशकत्वात्कथं नित्यज्ञानस्वरूपतेत्याशङ्क्याह—तन्विति। तथाचाऽज्ञानाऽवृतबाह्यार्थप्रकाशस्य चाक्षुषादिवृत्तिसापेक्षत्वात् इन्द्रियाऽधीनत्वेऽपिदेहेन्द्रियाऽन्तःकरणप्रकाशस्य तदधीनत्वात्स्वयंज्योतिष्ट्वश्रुत्याऽऽनुगुण्याच्च प्रतीचोऽपि स्वप्रकाशनित्यचिद्रूपतासिद्धेरिति भावः॥

इत्थं हेतुभिः प्रतीचोऽपि सिद्धं ब्रह्मसमानस्वरूपलक्षणत्वं स्थिरीकर्तुं दर्शितहेतूपपादनेन त्रिभिः श्लोकैः प्रत्येकं सच्चिदानन्दरूपतां स्थूणानिखननन्यायेन द्रढयति—स्वाप्नार्थैरिति॥

स्वाप्नार्थैर्बाध्यमानैरयमपि सह यद्बाध्यमानो न दृष्टो
बाधद्रष्टा स्वयं सन्कथमिव कलयेदात्मबाधं दृगात्मा।
दृग्भेदे यन्नमानं यदपि न च समा दृग्दृशोर्गोचरो वा
यच्चाऽसौ निर्विकारस्तदयमनवधिः प्रत्यगात्मा सदात्मा ॥

यत्=यस्मात्कारणात्। जागरे बाध्यमानैः=स्वप्नदृष्टपदार्थैः सह, अयं=स्वप्नसाक्षी प्रत्यगात्माऽपि बाध्यमानो न दृष्टः। किन्तु योऽहं स्वप्नमपश्यं स एवाऽहं जागर्मीति प्रत्यभिज्ञानादबाधित एव दृष्ट इत्यर्थः। तथा च बाधपरिशेषे नबाधप्रसक्तिरिति तस्य सत्यतेति भावः॥ बाधकाऽव्याप्यत्वादबाध्यत्वमुक्तं, ग्राहकाऽभावादपि तदाह—बाधद्रष्टेति। यत्=यस्मात् दृगात्मा=दृग्रूपः प्रत्यगात्मा स्वयमन्येषां बाधस्य द्रष्टा सन् आत्मनः=स्वस्य बाधं कथञ्चिय कलयेत्=जानीयात्। बाधकाले असतो ग्राहकत्वाऽसंभवादित्यर्थः॥ दृगन्तरमेव तद्ग्राहकमस्त्वित्याशङ्क्याह—दृग्भेदे इति। विषयकरणभेदाधीन एव लोके दृग्भेदप्रतिभासो न स्वतः। स च दर्पणाधीनमुखभेदप्रतिभासवन्नदृग्भेदसिद्धिक्षमः॥ न च दृशामगृह्यता तद्भेदः सुग्रहः। न च स्वप्रकाशादृशो मानव्याप्यता। मानफलाऽनाधारत्वात्। तत्रैवा-अनवस्थापातादिति भावः॥ अथवा दृग्भेदेइति। यद्यस्माद्दृशो भेदे=नानात्वे उच्छेदे वा मानं=प्रमाणं नास्ति। चक्षुराद्ययोग्यत्वात्॥ न च पुरुषभेदात्तत्संभवः "नान्योऽतोऽस्ति द्रष्टा" इत्यादिना दृगतिरिक्तद्रष्टृपुरुषप्रतिषेधात्। "एष हि द्रष्टा श्रोता" इत्यादिना विज्ञानात्मन एव पुरुषत्वोक्तेः॥ न च विषयप्रतिभासव्यवहारव्यवस्थया दृशः पुरुषस्य वा भेदसिद्धिः। तदैक्येऽपि चक्षुरादिद्वारभेदेन रूपरसादिप्रतिभासव्यवस्थावदन्तःकरणभेदादेव व्यवस्थोपपत्तेः। एवं दृगुच्छेदेऽपि मानाऽभावः। प्रतियोग्यनुल्लेखिमानेन उच्छेदाऽसिद्धेरिति भावः। दृगन्तराऽभ्युपगमेऽपि न पूर्वदृग्बाधसिद्धिः। तस्यापि प्रतियोगिग्रहणाऽसामर्थ्येन बाधाऽसाधकत्वादित्यभिप्रेत्याह—यदपीति। तत्र हेतुगर्भं विशिनष्टि—समेति। यत्=यस्मात् एकादृक् अपरस्या दृशेः गोचरः=विषयः न भवति प्रदीपद्वयवत्समत्वेन परस्परप्रकाश्यत्वाऽयोगादितिभावः॥ ननु प्रतीचोऽबाधादुच्छेदो नसिध्यतु, बाल्यजागरादिविकाराऽऽस्पदत्वात्तुघटादिवत्परिच्छिन्नत्वेन तत्सेत्स्यतीत्याशङ्क्यप्रतिषेधति—यचेति॥ असौ=प्रत्यक्। यत्=यस्मात् निर्विकारः=बाल्यजागरादेरौपाधिकत्वेन मिथ्यात्वेन चाऽऽत्मधर्मत्वाऽभावात्। "अशीर्यो न हि शीर्यते असङ्गो न हि सज्यते असितो न व्यथते नरिष्यति" इति श्रुतेः "अविकार्योऽयमुच्यते" इति स्मृतेश्चेतिभावः॥ तत्=तस्मात्।

अनवधिः=अपरिच्छिन्नः अयं=सर्वाऽनुभवसिद्धः प्रत्यगात्मा सदात्मा=परमार्थसत्यस्वरूप इत्यर्थः॥ तथाच श्रुतिः-"अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्"। "नैव स्त्री न पुमानेष नैव चाऽयं नपुंसकः"॥ "न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्नबभूव कश्चित्। अजो नित्यः शाश्वतोऽयं पुराणो नहन्यते हन्यमाने शरीरे" इति ॥ ३४ ॥

एवमवस्थाभेदसाक्षित्वं प्रपञ्चयंश्चिद्रूपतामप्यस्य द्रढयति—यदिति।

**यद्बाल्यादिष्ववस्थास्वहमहमिति भात्येकरूपो विभिन्ना**
**स्वध्यक्षंजागृदर्थानिव निजमहसा यच्च सुप्तोऽपि वेत्ति।**
**यच्चाऽहङ्कारमोषेऽप्यपरिमुषितचित्सुप्तिसौख्यादिसाक्षी**
**द्रष्टुर्दृष्टेरलोपे श्रुतिरपि तदसौ प्रत्यगात्मा दृगात्मा॥३५॥**

अत्राप्येतैर्हेतुभिः प्रत्यगात्मा=दृगात्मा अपरोक्षज्ञानस्वरूप इति सम्बन्धः। यत्=यस्मात् विभिन्नासु=वैधर्म्यशालिनीषु बाल्ययौवनाद्यवस्थासु। योऽहंबाल्ये पित्राद्यन्वभूवं सएवाऽहं यौवने स्त्रीपुत्राद्यनुभूय वृद्धो नप्तृप्रनप्तॄननुभवामि इत्यनुभवनीयविषयदेशकालाऽवस्थावैचित्र्यव्यावृत्त्योरप्यनुभविता अहमहमि त्येकरूप एवाऽनुवर्तमानो विभाति=प्रत्यभिज्ञावृत्तौ स्फुरति तच्चिद्रूप इत्यर्थः॥ ननु करणादिसंवलितस्यैव बाल्याद्यनुभवितृत्वात्करणाद्यधीनैव तथाप्रत्यभिज्ञा न वास्तवचिद्रूपताप्रयुक्तेत्याशङ्क्याह—अध्यक्षमिति॥ यत्=यस्मात्, सुप्तः=उपरतकरणग्रामोऽपिसन्, निजमहसा=स्वयंज्योतिषा, स्वप्ने—जागृदवस्थाऽनुभूत गजादिसदृशान् वासनामय पदार्थान्, अध्यक्षं=प्रत्यक्षमेव, वेत्ति=जानाति। तथा च तत्र करणानामुपरतत्वात् "अहमनुभवामि" इत्यपरोक्षप्रत्ययस्य चाऽविशिष्टत्वान्नकरणाऽधीना तथाप्रत्यभिज्ञा। नापिकरणानामापरोक्ष्यप्रयोजकता। तत्रैव व्यभिचारादित्यात्मैव अपरोक्षचिद्रूपः तत्साक्ष्यवश्यमभ्युपेय इति भावः।

ननु स्वप्ने अहङ्कारसंवलितत्वादहङ्कारप्रयुक्तैव बाल्यस्वप्नादिप्रत्यभिज्ञाऽस्त्वित्याशङ्क्याह—यच्चेति॥ यत्=यस्मात्, अहङ्कारस्य मोषे=लयेऽपि अपरिमुषिता=अवनष्टा चित्= स्वरूपचैतन्यं यस्य स तथाविधोऽसौ सुप्तेः=

सुषुप्तेः तत्कालस्वरूपसौख्यस्य आविद्यकाज्ञानस्य च साक्षी=साक्षाद्द्रष्टा भवतीति शेषः। तथा च 'सुखमहमस्वाप्सं नकिञ्चिदवेदिषमि'ति प्रत्यभिज्ञायां सुषुप्तिकालाऽस्मृतेरहङ्कारस्याऽपि न प्रयोजकत्वेत्यवस्थात्रयसाक्ष्यात्मैव तथाऽभ्युपेय इति भावः॥ ननु सुषुप्तौ ज्ञानमेव नाऽस्ति, ज्ञानसामान्यहेतोस्त्वङ्मनोयोगस्य तदानीमनभ्युपगमात्पुरीतन्मनोयोगस्य प्रतिबन्धकत्वाद्वा। जीवस्य नित्यज्ञानसद्भावे तु नास्ति प्रमाणमिति प्रलपन्तं निरस्यन्नाह—द्रष्टुरिति॥ सर्वव्यवहारद्रष्टुरात्मनः स्वरूपभूतदृष्टेः, अलोपे=अविनाशे "यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्' इत्यादिश्रुतिरस्त्येवमानं। ज्ञानशून्यत्व एव तु प्रत्युत नाऽस्ति मानं। सुषुप्तेरेवाऽप्रसिद्ध्याऽऽपत्तेरितिभावः॥ अपि शब्दः सुप्तोत्थितस्य सुखमहमस्वाप्समित्याद्यनुसन्धानमपि तत्र प्रमाणमिति समुच्चयार्थः॥ तत्=तस्मात् प्रत्यगात्मनश्चिद्रूपत्वं निरूढमिति भावः॥ ३५॥

तथैव परम प्रेमास्पदत्वमपि प्रपञ्चयन्प्रतीच आनन्दरूपतामपि स्थिरीकरोति—यत्रेति॥

यत्राऽऽत्मान्यदब्रुवाणं प्रियमिति तव तद्रोत्स्यतीति ब्रवीति
प्राज्ञेनैक्यं सुषुप्तौ निगदति च यदाऽऽनन्दसंविन्मयेन।
इच्छा यत्स्याऽनुकूले त्रिजगति विदिता स्वप्रतीपे जिहासा
यच स्यां सर्वदेति स्पृहयति तदसौ प्रत्यगात्मा सुखात्मा॥

यत्=यस्मात् श्रुतिः "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा" इति आत्मनः परमप्रेमाऽऽस्पदत्वमुक्त्वा तत्स्थिरीकरणाय "सयोऽन्यदात्मनः प्रियं ब्रुवाणं ब्रूयात्प्रियं रोत्स्यति" इति वाक्यशेषे आत्माऽन्यत्प्रियमस्ति तथा विधमिति ब्रुवाणं पुरुषं प्रति तव तत्प्रियम नात्मवस्तु रोत्स्यति=नङ्क्ष्यतीति प्रतिब्रूयात् आत्मैकप्रियवादी इति ब्रवीति व्यक्तंवदति। चकारात् "आत्मानमेव प्रियमुपासीत"."आत्मनस्तु कामाय सर्वप्रियं भवति" इत्यादि श्रुत्यन्तरस्य तथैव सर्वाऽनुभवस्य च सङ्ग्रहः। सुषुप्तौ प्रतीचो निरतिशयाऽऽनन्दरूपत्वेन प्रसिद्धब्रह्मस्वरूपेण ऐक्यप्राप्ति

श्रुतेरपि वस्तुतस्तत्स्वभावतेत्याह—प्राज्ञेनेति॥ यत्=यस्माच्च, सुषुप्तौ आनन्दसंविन्मयेन=परमाऽऽनन्दाऽऽत्मकज्ञानप्रचुरेण प्राज्ञेन=ईश्वरेण सह तस्मिन्नुपाध्यप्ययेन सम्पन्नस्य प्रतीचः ऐक्यं=अत्यन्ताऽभेदं चकारात्तदानीमौपाधिकसर्वदुःखनिवृत्तिं च निगदति=व्यक्तं वदति श्रुतिः "सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति" इति, "तीर्णो हि तदा सर्वाञ्छोकान्हृदयस्य भवति" इति च। तथा यत्=यस्मात् त्रिजगति=तात्स्थ्यात्ताच्छब्द्यं त्रैलोक्यस्थप्राणिष्वित्यर्थः। स्वाऽनुकूले=स्वोपकारके वस्तुनि, इच्छा=रागः, स्वप्रतीपे=स्वप्रतिकूले च जिहासा=द्वेषश्च विदिता=सर्वानुभवप्रसिद्धा। ततोऽप्यस्य तथात्वं। सुखोपयुक्ते हि वाञ्छा, सुखविरोधिनि च लोके जिहासा प्रसिद्धेत्युक्तम्। अनपाये इच्छादर्शनादपाये द्वेषदर्शनाच्च तथात्वमित्याह—यच्चेति॥ यत्=यस्माच्च अहं "सर्वदैवस्यां मा कदाचिदपि माभूवम्" इति सर्वोऽपि स्पृहयति। सुखाऽनपाये हि तथा प्रीतिः, तदपाये द्वेषश्च लोके प्रसिद्ध इति ततोऽप्यस्य सुखरूपत्वमित्यर्थः। चकारादौदासीन्याऽवस्थायामात्माऽऽनन्दाऽनुभवस्य सर्वसिद्धस्य सङ्ग्रहः॥ यथाहुः—

"न काऽपि चिन्ता मेऽस्त्यद्य सुखमासे इति ब्रुवन्।
औदासीन्ये निजानन्दभानं वक्त्यखिलो जनः॥" इति॥

इत्थं प्रतीचः सुखाऽऽत्मत्वं निरूढमिति भावः॥ ३६॥

एवं पूर्वपरिच्छेदे निर्णीतमपि प्रतीचः सच्चिदाऽऽनन्दरूपत्वं, तत्पदार्थेन सह लक्षणैक्यव्यवस्थापनाय पुनः प्रपञ्चितं। अद्वयत्वमपि तस्याऽवस्थात्रयस्य द्रष्टृदृश्य साक्षिसाक्ष्याऽवध्यवधिमत् दुःखिप्रेमास्पदत्व लक्षण तापनीयोपदर्शित चतुर्विधाऽन्वय व्यतिरेकैर्मिथ्यात्वनिर्णयात्सिद्धमेवेति तत्त्वंपदार्थयोः शोधितयोरखण्डैकरस्येनाऽन्वये योग्यताऽवधारणे असंभावनारूपप्रतिवन्धकाऽपगमान्महावाक्यानामखण्डोऽर्थः सुप्रवोध इत्याह—इत्थमिति॥

**मू०॥ इत्थं मीमांस्यमाने श्रुतिगुरुवचनै र्युक्तिभिश्चाऽनुभूत्या**
**शश्वज्जीवेशतत्त्वे निपुणमधिगते वस्तुतो लक्षणैक्ये।**

निष्प्रत्यूहं निजार्थं समधिगमयितुं तत्त्वमस्यादिवाक्या-
न्याद्यन्ताऽवेक्षणाद्यै रधिगतहृदयान्यञ्जसैव क्षमन्ते ॥

इत्थं=दर्शितप्रकारेण, श्रुतिगुरुवचनैः=श्रुतिवाक्यैः गुरूणां व्याख्या-वचनैः, युक्तिभिः=बादरायणाद्याऽऽचार्यपरम्परोपदर्शितयुक्तिभिः, अनु-भूत्या=स्वानुभवेन, चकारात् विद्वत्सतीर्थ्यसंवादपरिशीलनादिना च, श-श्वत्=निरन्तरं मीमांस्यमाने=विचार्यमाणे "गुपिज् कित्वद्भ्यः सन्" इत्यतः सन् इत्यनुवर्तमाने "मान्बध" इत्यादिना मानेर्जिज्ञासायां सनि कर्मणि शानच्। जीवेशयोः=जत्यग्जगत्कारणयोः तत्वे=वास्तवस्वरूपे विषये, वस्तु-तः=परमार्थतः, लक्षणैक्ये=स्वरूपलक्षणाऽभेदे, निपुणं=निरूढं यथा स्यात्त-था अधिगते=निश्चिते सति, आद्यन्ताऽवेक्षणाद्यैः=उपक्रमोपसंहारपरिशी-लनादिभिः, अधिगतहृदयानि=निश्चिततात्पर्यकाणि तत्त्वमस्यादिमहावा-क्यानि=अञ्जसा=शीघ्रमेव परमतात्पर्यविषयीभूतं निजार्थं=स्वप्रतिपाद्यमख-ण्डार्थं, समधिगमयितुं=सम्यक्बोधयितुं सकार्याऽविद्योच्छेदक्षममात्मतत्त्वा-ऽपरोक्षज्ञानं जनयितुमित्यर्थः॥ क्षमन्ते=समर्थानि भवन्त्येव। पटुतराणां सा-धनानां प्रतिबन्धकाऽपाये कार्ये क्षेपाऽयोगादितिभावः ॥ ३७ ॥

पदेभ्यःप्रतीयमानाऽर्थेषु विवक्षितवाक्यार्थबोधोपयोगाऽनुपयोगाभ्यां कतमोपादानं कतमहानमिति विमृश्य विशेषोपादानाय आदौ प्रकरणप्रद-र्शनपूर्वकं तत्त्वंपदवाच्यलक्ष्यार्थान् असिपदार्थं च दर्शयति—प्रागिति॥

प्राक्सर्गाद्यत्सदासीदसृजदथ च यत्तेज आदि प्रविष्टं
जीवस्तस्मिन्यदासीद्यदखिलमनृतं नामरूपं वितेने ।
तत्सत्तच्छब्दवेद्यं त्वमिति निगदितः श्वेतकेत्वाऽऽख्यजीवो
वाक्यार्थं नित्यसिद्धं गमयदसिपदं वर्तमानं ब्रवीति ॥३८॥

"सदेव सोम्य" इत्युपक्रमात् सर्गात्=जगत्सृष्टेः प्राक् यत्सदेव वस्तु आसीत्। अथ=अनन्तरं च यत् वियद्वायुसर्गोत्तरं तेजआदि=तेजोऽवन्नाऽऽ-ख्यं असृजत् । तस्मिन्=स्वसृष्टभूतवर्गे देहाकारपरिणते, प्रविष्टं सत् प्रा-णधारणोपाधिना प्रथमजो हिरण्यगर्भाख्यो जीव आसीत् । तथाविधं च

भूत्वा यत् अखिलं=समस्तं अनृतं=वाचारम्भणमात्रं स्वतस्त्वपरमार्थभूतं नामरूपात्मकं जगत्, वितेने=वितस्तार। तत्=तादृशं सद्वस्तु, तत्त्वमसिवाक्यस्थतच्छब्देन वेद्यं=प्रतिपाद्यं, सर्वनाम्नस्तच्छब्दस्य उपस्थितधर्मवत्परोक्षार्थे शक्तत्वादुपस्थितजगत्कारणत्वादिविशिष्टरूपेण शक्त्या, पारमार्थिकसद्रूपेण तु लक्षणयेत्यर्थः। युष्मच्छब्दस्य बुद्धिस्थधर्मवत्सम्बोध्यचेतन वाचित्वात् त्वंपदेन श्वेतकेत्वाख्यः=देहेन्द्रियाऽहङ्कारादिविशिष्टो जीवः शक्त्या, लक्षणया तु अवस्थात्रयसाक्षिचिन्मात्रस्वरूपः प्रत्यगात्मा निगदित इत्यर्थः। असीति पदं तु सत्तार्थकाऽसधातूत्तरवर्तमानत्वाऽऽश्रयादिबोधकलणमध्यमपुरुषान्तत्वात् तत्त्वंपदसङ्घटनलभ्यं वाक्यार्थं साध्यविलक्षणत्वान्नित्यसिद्धं गमयत्=बोधयत् सत् वर्तमानं=प्राप्तसिद्धत्वे सत्यसमाप्तस्थितिकत्वरूपवर्तमानताऽऽस्पदं ब्रवीति=व्यक्तं वदतीति पदार्थानां स्थितिरित्यर्थः॥ ३८॥

पदार्थस्थितिं प्रदर्श्याऽनभिमतेष्वन्वयप्रकारेषु दोषोद्घाटनपूर्वकं निर्दुष्टमभिमतं प्रकारं परिशेषयति—बाधेति॥

मू०॥ बाधाऽध्यासविशेषणैक्यविषयं नाम्नोश्चतुर्धा मतं
सामानाधिकरण्यमाद्यमिह न व्यर्थोऽग्रमा स्याच्छ्रुतिः।
ध्यानाद्यश्रवणादनित्यफलतादोषाच्च नाऽध्यासधीः
तादात्म्यं न विरुद्धयोरिति बलाद्वस्त्वैक्यपक्षस्थितिः॥

न तावदत्र महावाक्ये पदानां वैयधिकरण्येन सङ्घटनप्रसक्तिः। नामाऽर्थयोरभेदेनैवाऽन्वय इति व्युत्पत्तेः। अतः सामानाधिकरण्येनैव घटनं वाच्यम्। भिन्नप्रवृत्तिनिमित्तकत्वे सति एकार्थप्रतिपादकत्वं हि शब्दानां सामानाधिकरण्यम्। तच्च लोके नाम्नोः=समानविभक्तिकप्रातिपदिकयोः, चतुर्धा=चतुर्विधं विदुषां मतं=संमतमित्यर्थः॥ चातुर्विध्यमेव विभज्य दर्शयन्विशिनष्टि—बाधेत्यादिना॥ पूर्वोत्पन्नमिथ्याप्रत्ययस्य उत्तरेण यथार्थप्रत्ययेन विषयाऽपहारो बाधः। यथा—यत्र मन्दाऽन्धकारे अपरिशीलितचर स्थाणुचक्षुः संप्रयोगे चोरभ्रमात् "चोरोऽयम्" इति भीत्या क्रोशन्तं कंचित्प्रति निर्ज्ञातस्थाणुरन्य आह—'चोरोऽयं स्थाणुः' इति। तत्र चोरत्वेन

प्रतीतिमनूद्य स्थाणुविधाने पूर्वोत्पन्नचोरबुद्धिविषयस्य स्थाणुबुद्ध्या अपहारात् बाधविषयं पदयोः सामानाधिकरण्यं। अतस्मिंस्तद्बुद्धिरध्यासः। स द्विविधः दोषज आहार्यश्चेति। तत्राऽऽद्यो भ्रान्तिज्ञानरूपः। द्वितीयस्तु भेदादिग्रहेऽपि इच्छया क्रियमाणत्वान्मानसक्रियारूपः। स त्रिविधः—शास्त्रकृतः साङ्केतिको गौणश्चेति। तत्राऽऽद्यो द्विविधः—संपदुपास्तिः प्रतीकोपास्तिश्चेति। तत्राऽऽरोपाधिकरणं बुद्ध्या स्वेनरूपेण तिरोभूय आरोपणीयाऽऽत्मनैव सम्पाद्याऽनुसंधानलक्षणा आद्या। यथा—गुरौ मनुष्य बुद्धि परित्यागेन देवताबुद्धिः। यथा वा पञ्चाग्न्यादिविद्यासु द्युपर्जन्यपृथिवीपुरुषयोषिदादिषु आहवनीयादिबुद्धिः। आरोप्यविशेषितस्याऽऽरोपाऽधिकरणस्य प्राधान्येनोपास्तिः द्वितीया। यथा—"य एवाऽसौ मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे" "य एवाऽसौ तपति तमुद्गीथमुपासीत" इति। अत्रहि "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्युद्गीथाऽवयवस्य ओङ्कारस्यैवोपास्यत्वेनोपक्रमात्प्रतीकस्य प्राधान्यमिति। लिप्यादावयंककार इत्यादिवृद्धसङ्केतकृतत्वात् साङ्केतिकः। सिंहो माणवक इत्यादौ मुख्यार्थ गुणयोगनिमित्तत्वाद्गौणः। एषुचाऽन्यत्राऽन्यतादात्म्याऽध्यासनिमित्तत्वादध्यासविषयं पदयोः सामानाधिकरण्यं। यत्र ह्येकपदोत्पन्नसामान्यबुद्धिः पदान्तरेणाऽविवक्षितांशव्यावर्तनेन स्वार्थसंसृष्टे विशेषेऽवस्थाप्यते, यथा—'नीलमुत्पलं, दण्डी पुरुषः' इति तत्र विशेषणविषयं सामानाधिकरण्यम्। एवम् "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्यत्रापि सर्ववेदव्याप्योङ्कारःउद्गीथपदेन उद्गीथावयवोङ्कारे व्यवस्थाप्यत इति विशेषणविषयमेव सामानाधिकरण्यम्। यत्र तु पदानि तात्पर्याऽविषयवाच्यार्थांऽशपरित्यागेन परस्पराऽर्थविरुद्धांऽशपरित्यागेन वा असंसृष्टवस्तुमात्रपराणि तत्रैक्यविषयं सामानाधिकरण्यं। यथा–'प्रकृष्टप्रकाशश्चन्द्रः, सोऽयं देवदत्तः' इति च। उपपादयिष्यते च उभयत्रापि वस्तुमात्रपरत्वम्। दर्शितेचाऽस्मिन्सामानाधिकरण्यचातुर्विध्ये आद्यं बाधविषयं सामानाधिकरण्यं इह=एषु तत्त्वमसीत्यादि महावाक्येषु न संभवति। तथाहि सति श्रुतिः= मोक्षोपायोपदेष्ट्री, व्यर्थोद्यमा=व्यर्थः=पुरुषार्थशून्यः उद्यमः=तात्पर्येण प्रवृत्तिलक्षणः उद्योगो यस्याः तथाविधा स्यात्=भवेत्। बाधायां सामा-

नाधिकरण्यं हि प्रकृते ब्रह्मबाधेन जीवपरिशेषणाज्जीवबाधेन ब्रह्मपरिशेषणाद्वा। आद्ये, निर्दुःखनिरतिशयाऽऽनन्दस्वरूपब्रह्मण एव परमपुरुषार्थरूपत्वेन तद्बाधे ज्ञानफलाऽपरिशेषात् व्यर्थोद्यमत्वम्॥ द्वितीये तु जीवस्य मोक्षभाजः तत्त्वतोऽप्यपरिशेषात्स्वीयपुरुषार्थाऽनुपयुक्ते मोक्षशास्त्रे कस्यापि प्रवृत्तिरेव न स्यात्। प्रत्युत स्वात्मघातिनि तस्मिन्प्रद्वेष एव स्यादित्युभयथापि श्रुतेर्व्यर्थोद्यमत्वमित्यर्थः।

अध्यासपक्षं निरस्यति—ध्यानादीति। "वाचं धेनुमुपासीत "मनो ब्रह्मेत्युपासीत" "आदित्यो ब्रह्मेत्यादेशः"इत्यादिष्विव यद्यत्रोपास्त्यादिपदेन ध्यानादिकं विधेयमश्रोष्यत, तदा वाक्यस्य विधेयैकनिष्ठत्वात्पदार्थैक्ये तात्पर्याऽभावादाध्यासिकैक्येनापि ध्यानसिद्धेः मुख्यार्थसङ्कोचाऽयोगात् अध्यासेनैव सामानाधिकरण्यमुपपाद्येत। नचात्र ध्यानादि श्रूयते, वाक्यस्य वस्तुमात्रतात्पर्यस्योपपादितत्वाच्च। ध्यानादिकल्पनेश्रुतहान्यश्रुतकल्पनादोषप्रसङ्गात्। अतो नाऽध्यासस्य धीः=बुद्धिः, अत्रयुक्तेत्यर्थः॥ ननु "तमेवैकं जानथ आत्मानं" "आत्मेत्येवोपासीत""मन्तव्यो निदिध्यासितव्यः" इत्याऽऽत्मविद्याप्रकरणेऽपि क्वचिद्ध्यानादिश्रवणमस्त्येवेत्याशङ्क्याह—अनित्यफलतादोषाच्चेति॥ ध्यानस्य मानसक्रिया विशेषरूपत्वात्क्रियाफलानां चाऽनित्यत्वनियमादित्यर्थः। क्वचिद्ध्यानादिश्रवणं तु "द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यत्र दर्शनोद्देशेन साधनानां विहितत्वात् तदेकपरत्वविधानार्थं, न तु महावाक्यस्य स्वातन्त्र्येण ध्यान विधिपरत्वप्रापकमिति भावः॥ चकारोऽप्रसिद्धाऽसाधारणस्वरूपस्याऽन्यत्राऽऽरोपयितुमशक्यत्वात् महावाक्यादेकत्वप्रसिद्धौ तावतैव वाक्यस्य चरितार्थत्वेन अध्यास परत्वप्रयोजनयोरभावादिति युक्त्यन्तरसमुच्चयार्थः। विशेषणपक्षं निरस्यति—तादात्म्यमिति॥ तत्त्वं पदवाच्ययोः असंसारित्वसंसारित्वरूपविरुद्ध धर्मवैशिष्ट्यात् विरुद्धयोस्तावत् तादात्म्यं नसंभवति। अन्यतरपदलक्षणापक्षस्य प्रत्याख्यास्यमानत्वात् पदद्वयलक्ष्ययोरपि स्वरूप लक्षणैक्यव्यवस्थापनात् भेदकारणाऽभावाच्च अत्यन्ताऽभिन्नयोः अत एव भेदसहिष्णव भेदलक्षण तादात्म्यविरुद्धयोः तादृशं तादात्म्यं न संभवतीत्यर्थः॥

ननु उपहितशुद्धयोरस्त्येव तादात्म्यं, यथा—घटाकाशो महाकाश

पयेति। तथा कार्यकारणोपाध्योस्तादात्म्यात् तदुपहितयोरपि जलतरङ्गाऽऽकारयोरिव तादात्म्यमस्त्येवेति त्वंपदवाच्यार्थस्य तत्पदलक्ष्येण तत्पदवाच्येन वा सहाऽन्वये न कश्चिद्दोषः॥ विरोधश्च किञ्चिज्ज्ञत्वादिकृतोऽत्यन्तैक्यमात्रविघाती न तादात्म्यस्य। अन्यथा अल्पत्वमहत्त्वाभ्यां विरोधात्समुद्रतरङ्गयोरपि अतादात्म्याऽऽपत्तेरिति चेत्। न। "वाचारम्भणं विकारो नामधेयम्" "एकमेवाऽद्वितीयमेतदात्म्यमिदं सर्वम्" इत्यादिना उपाध्यनृतत्वोपपादनपूर्वकस्य अभेदोपदेशस्य औपाधिकभेदघटिततादात्म्यपरत्वाऽयोगात्, उपाधिनिरासे तत्प्रयुक्तभेदस्यापि निरस्तत्वात्। तथा वाक्यार्थज्ञानस्य पुरुषार्थाऽनिर्वाहकत्वात् "एकधैवाऽनुद्रष्टव्यम्" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति। एवं धर्मान्पृथक् पश्यंस्तानेवाऽनुविधावति" "नाऽत्र काचन भिदाऽस्ति।" "उदरमन्तरं कुरुते अथ तस्य भयं भवति" "सर्वं तं परादाद्योऽन्यत्राऽऽत्मनः सर्वं वेद" इति अनेकशो भेदांशदर्शनस्य प्रतिषिद्धत्वात् अनर्थाऽनुबन्धित्वकीर्तनाच्चेति गत्यन्तराऽभावात् चतुर्थकल्प एवाऽवतिष्ठत इत्यभिप्रेत्याह—इतिबलादिति। इति दर्शितपरिशेषादुपक्रमादितात्पर्यलिङ्गबलाच्च वस्त्वैक्यपक्षस्य=अखण्डैकरसवस्तुमात्रप्रतिपादनविषयं सामानाधिकरण्यमिति कल्पस्य प्रकृते स्थितिः=प्रतिष्ठितत्वमित्यर्थः॥ ३९॥

अखण्डैक्यमेव महावाक्यार्थ इत्युक्तम्। तत्किं तत्त्वंपदवाच्यार्थयोः? उत वाच्यलक्ष्ययोः? अथलक्ष्ययोरेव? इति संशयः। लक्षणापक्षेऽपि सा किं गङ्गायां घोष इत्यत्रेवाऽत्यन्तजहत्स्वार्था?, उत यष्टीः प्रवेशयेत्यत्रेव स्वार्थविशिष्टाऽर्थान्तरविषया?, उत सोऽयं देवदत्त इत्यत्रेव जहदजहत्स्वार्था? इति विप्रतिपत्तिः। यदापि तृतीया तदापि सा किं तत्पदस्यैव? उत त्वंपदस्यैव? अथ उभयोरपि? इति संशये विमृश्य निर्दोषं पक्षं व्यवस्थापयति—अभिधेयमत्रेत्यादिश्लोकत्रयेण॥

**अभिधेयमत्र पदयोरसङ्गतं न विरुद्धधर्मियुगमैक्यमेति यत्।**
**उपयोग मूलघटनाद्ययोगतो न परस्परार्थघटितेऽपि लक्षणा ॥**

अभिधेयमिति। अत्र=अस्मिन्महावाक्ये तत्त्वंपदयोः अभिधेयं=वाच्यं तेजोऽबन्नादि सर्वप्रपञ्चोपादानकर्तृ श्वेतकेत्वाख्यदेहादिसंवलित-

चेतनं च परस्परं असङ्गतं=न यथोक्तप्रकारेणान्वययोग्यम् । तत्कुतः? यत्=यस्मात् विरुद्धं=निरवच्छिन्नवृत्तिक परस्पराऽत्यन्ताऽभावव्याप्यधर्मविशिष्टं धर्मियुगं=वस्तुद्वयं, ऐक्यं=अभेदं नैति=न प्राप्नोति। तद्धर्माणां च सार्वज्ञ्य किञ्चिज्ज्ञत्व, नित्यमुक्तत्व बद्धत्व, सुखैकरसत्व दुःखित्व, सर्वनियन्तृत्व पारतन्त्र्यादीनां परस्परविरुद्धत्वादित्यर्थः । तथा च तयोस्तादात्म्यमपि स्वरसतो दूरे, किमङ्ग! पुनरत्यन्तैक्यमिति भावः। अस्तु तर्ह्यन्यतरपदस्य लक्षणा,सापि प्रतीतस्य मुख्यार्थस्य विनाबाधकं त्यागाऽयोगादजहत्स्वार्थैव । तत्राह—उपयोगेति। अत्र पदयोः परस्पराऽर्थघटिते=एकपदार्थविशिष्टाऽपरपदार्थे लक्षणा न संभवति । कुतः ? उपयोगस्य मूलघटनादेश्चाऽयोगतः । साक्षात्परम्परया वा पुरुषार्थपर्यवसानमुपयोगः, मूलघटना=उपक्रमाऽऽनुकूल्यं, आदिपदात् तात्पर्यलिङ्गाऽन्तराऽऽनुकूल्यसङ्ग्रहः। तेषामयोगतः=अभावादित्यर्थः॥ अथवा। उपयोगः=आकाङ्क्षा मूलं=लक्षणाबीजं तात्पर्यं, घटना=लक्षणानिर्वाहकः सम्बन्धविशेषः । आदिपदात् लक्षणाफलं तेषामयोगतः असंभवादित्यर्थः। तथाहि—न तावत्तत्पदस्य यष्टिपदस्य यष्टिधरेष्विवजगत्कारणवति लक्षणा । तद्धि जगद्रूपमेव किञ्चित्स्यात्? जीवो वा? आद्ये समानविभक्तिकपदयोर्भेदेनाऽन्वये असामर्थ्यात् अभेदस्य च बाधितत्वेन निराकाङ्क्षत्वम् ॥ द्वितीये वैशिष्ट्यनियामकसम्बन्धविशेषाऽपरिचयादव्यवस्था । न तावत्सम्बन्धसामान्येन यत्किञ्चित्सम्बन्धेन वा सर्वकारणवानहमिति वाक्यार्थोऽत्राऽभिप्रेतः। तथा निश्चयेऽपि पुरुषार्थाऽदर्शनात्,तस्य स्वाऽज्ञानसंसाराऽविरोधित्वेन मोक्षोपयोगस्य कल्पयितुमप्यशक्यत्वात् ॥ न चाऽदृष्टद्वाराऽग्रे तत्कल्पनं, "ब्रह्म वेद ब्रह्मैव भवति" "तथा विद्वान्पुण्यपापाद्विमुक्तो निरञ्जनः परमं साम्यमुपैति" "अभयं वै जनक प्राप्तोसि" "तरति शोकमात्मवित्"

"ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥"

इत्यादि श्रुतिस्मृतिभिर्ज्ञानस्याऽज्ञाननिवर्हणलक्षणदृष्टद्वारैव इहैव पुरुषार्थहेतुत्वनिर्णयात् । अत एव न सम्बन्धविशेषेणापि सोऽभिप्रेतः। लक्षणानियामक तादृशसम्बन्धविशेषाऽपरिचयाच्च ॥ नचांऽशांशित्व,

नियम्यनियामकत्व,स्वस्वामित्वादि सम्बन्धविशेषेणैव तद्धेशिष्ट्यबुद्ध्या इष्ट सिद्धिः। अंशांऽशित्वस्य निरस्तत्वात्। कर्मकाण्डप्रामाण्याऽनुरोधेन "सर्व स्य वशी सर्वस्येशानः" "एष सेतुर्विधरणः" इत्यादि श्रुत्या च कर्मफलदातुः सर्वनियन्तुः स्वामिन ईश्वरस्य ज्ञातत्वेन आ गोपालाङ्गनं प्रसिद्धत्वेन च तथा तद्बोधनाय सपरिकरं नवकृत्वः तत्त्वमसीत्युपदेशाऽनपेक्षणात्। न च तादृशस्वामिकोऽहमिति ज्ञानमात्रात्पुरुषार्थो दृश्यते। तदुत्तरकालमप्याऽऽस्तिकानां तदनुग्रहाय तपःक्लेशसंयमादियत्नदर्शनात्। पुराणाऽऽख्यायिकासु च बहुशः साक्षात्कृतेश्वराणामपि तमेवेश्वरं गुरूकृत्य तदनुमत्या श्रवणमननादिना पश्चात्तत्त्वनिर्णयेन मुक्तिश्रवणाच्च। इत्यमेव त्वंपदस्याऽपि जीवचति लक्षणाप्रसक्तिर्निरसनीया। अद्वितीयवस्तूपक्रमः, एकविज्ञानात् सर्वविज्ञानप्रतिज्ञा, कार्यमात्रस्य वाचारम्भणत्वोपपादनं,अविकृतस्यैव ब्रह्मणो जीवभावेन उपाध्यनुप्रवेशश्रवणं च नैकतरस्मिन्नपि पक्षे उपपद्यत इति ॥ ४० ॥

माभूत्तर्ह्यजहत्स्वार्था। जहत्स्वार्थैव तु सा अत्राऽन्यतरपदयोरुभयोर्वाऽस्तु। तत्राह—नचेति ॥

मू० ॥ नच गाङ्गतीरमिव वाच्यसङ्गि वा<br>
प्रथितं तृतीयमिह योग्यमन्वये।<br>
पदयो र्नचैकतर भागलक्षणाऽ<br>
ध्यवसानलिङ्ग मुपपद्यतेऽपि वा ॥ ४१ ॥

यथा 'गङ्गायां घोषः' इति वाक्ये पदद्वयवाच्यार्थाऽपेक्षया तृतीयं तीरं गङ्गापदवाच्यप्रवाहेन सङ्गि=संयुक्तं तात्पर्यविषयीभूतघोषाऽऽधारताऽन्वये योग्यं प्रसिद्धं, तथेह महावाक्ये तत्त्वंपदद्वयाऽन्यतरवाच्यार्थेन सङ्गोऽस्याऽस्तीति सङ्गि प्रसिद्धतरसम्बन्धेन सम्बद्धं वाच्यार्थद्वयाऽपेक्षया तृतीयं षड्विधलिङ्गाऽवगताऽखण्डवस्तुगोचर तात्पर्यविषयाऽऽत्यन्तिकैक्यविषयेऽन्वये योग्यं=निर्वाहकं किञ्चिद्वस्तु न प्रथितं=न प्रसिद्धं। चकारस्तादृशलक्षणानिर्वाहक शक्यसम्बन्धविशेषस्याऽप्यप्रसिद्धिसमुच्चयार्थः॥ ननु तर्ह्यन्यतरपदस्यैव जहदजहत्स्वार्थाख्यभागलक्षणाऽस्तु, ननु

पदद्वयस्यापि। सर्वलाक्षणिकवाक्यस्य अननुभावकत्वादित्याशङ्क्याह—पदयोरिति॥ तत्त्वं पदयोरेकतरस्य=तत्पदस्य त्वंपदस्यैव वा अस्यैव नियमेन भागलक्षणेत्यध्यवसाने=निर्णये,लिङ्गं=असाधारणं गमकं नचाऽस्ति। सर्वतात्पर्यलिङ्गानां निर्विशेषैकनिष्ठत्वस्य उपपादितत्वात्। न केवलं गमकाऽभावः, अपित्वनुपपद्यमानत्वमपीत्याह—उपपद्यतेऽपिवेति॥ तथाहि—यदि तत्पदार्थएव सा, तर्हि यदि चिदंशो हीयेत तदा चैतन्यघटितसार्वज्ञ्यादिधर्माणां पृथगनवस्थानात् मृदादिवदचेतनं जगदुपादानं शिष्येत, नचेतनं जगदुपादानं शिष्येत।नच तस्य चेतनजीवाऽभेदो,नवा जगदनुपादानजीवोपाध्यभेद इति नान्वयोपपत्तिः॥ एवं जडांशहाने चैतन्यपरिशेषेऽपि शुद्धस्य तस्य उपाधिकलुषजीवेन अभेदाऽनुपपत्तिः। नच चैतन्यांशएवाऽभेदान्वयोऽस्त्विति युक्तम्। तस्य पदार्थैकदेशत्वात्। पदार्थः पदार्थेनैवाऽन्वेति नतु पदार्थैकदेशेनेति व्युत्पत्तेः। नच नीलो घट इत्यत्र घटत्वपरिहारेण शुद्धघटएव योग्यतया नैल्याऽन्वयवत् विशेषणोपाधिपरित्यागेन प्रत्यक्चैतन्यांशएवाऽभेदेन तस्याऽन्वयोऽस्त्विति शङ्क्यम्। अन्योन्यतादात्म्याऽध्यासेन संवलितरूपस्यैव अन्योन्यविनिमयाऽध्यस्तकर्तृत्वभोक्तृत्वादिधर्मविशेष्यतया चैतन्यमात्रस्यविशेष्यत्वाभावात्। एतेन "विनैव लक्षणां विशेष्यमात्राऽभेदेन महावाक्याऽन्वयोपपत्तिः" इति परिभाषाकृदुक्तिः प्रत्युक्ता॥ तथाऽन्वयबोधस्याऽविरोधेन संसाराऽनिवर्तकत्वाच्च। नच त्वंपदवाच्यमेव तत्पदलक्ष्यचिति अन्वेतु, दण्डिपुरुषस्य शुद्धपुरुषेणेव संवलितस्य शुद्धेन तादात्म्यादिति वाच्यम्। निर्धर्मितावच्छेदकसंसर्गशाब्दबुद्ध्ययोगात्। अखण्डार्थतायाः त्वंपदार्थबाधमन्तरेण दुरुपपादत्वात्प्रागुक्तदोषाऽऽपत्तेः। स्वयंज्योतिष्ट्वव्यवस्थापनेन अवस्थात्रयधर्माऽनन्वागतत्वादिना च कृतस्य त्वंपदार्थशोधस्य वैयर्थ्याऽऽपत्तेश्च। अत एव न त्वंपदमात्रलक्षणयापि निर्वाहः। तत्राप्येकतरांशयोः प्रत्येकं जगत्कारणत्वादिविशिष्टेन सहाऽभेदान्वये अयोग्यत्वात्। पदार्थैकदेशेऽन्वयाऽसंभवेन च चैतन्यमायाभ्यामप्यभेदान्वयाऽघटनात्। मायाशबलस्यैव सार्वज्ञ्यजगत्कारणत्वादिधर्मान्प्रति विशेष्यत्वेन चिन्मात्रस्य मायामात्रस्य वा अविशेष्यत्वात्। वाचारम्भणश्रुत्या "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यादिसूत्रैश्च कृतस्य तत्पदार्थशो-

धस्य वाक्यार्थबोधाऽनुपयोगेन वैयर्थ्याऽऽपत्तेः । तथा बोधेऽपि प्रतीच्ब्रह्ममात्रेण ब्रह्मणो वा प्रत्यङ्मात्रेणाऽपरिशेषात् परिच्छेदकपारोक्ष्यादि संसारभ्रमाऽनिवृत्तेः, पुरुषार्थपर्यवसानाऽभावाच्चेति भावः ॥ ४१ ॥

अस्तु तर्हि "निरञ्जनः परमं साम्यमुपैति" "मुक्तः शिवसमो भवेत्" इत्यादिश्रुतिस्मृतिभिर्जीवस्य ब्रह्मसदृशं मुक्तिदशायां प्रतिबन्धकनिवृत्तौ अभिव्यक्तं उत्पद्यमानं वा रूपान्तरं, तत्पदस्य च तस्मिन् गौणी वृत्तिः। इत्थं च त्वं ब्रह्मसदृशोऽसीति महावाक्यार्थोऽस्तु पुरुषार्थपर्यवसायीति कस्यचित्कल्पनामाशङ्क्य प्रतिषेधति—नन्विति ॥

मू० ॥ ननु मानसिद्धमपरं परोपमं
निजरूपमस्य नच भाविनोऽस्तिता ।
श्रुतहानिरश्रुतगतिश्च नोचिते
त्युचिता द्वयोरपि हि भागलक्षणा ॥ ४२ ॥

अस्य=जीवस्य परोपमं=जगत्कारणेश्वरसदृशं अपरं=प्रसिद्धरूपाद्भूपणश्चान्यत् सांसारिकरूपेणाऽऽवृतं निजं=वास्तवं रूपं तु श्रुत्याद्यन्यतमेन मानेन न सिद्धं, येन त्वदुत्प्रेक्षितोऽर्थः संभाव्येतेत्यर्थः । प्रत्युत "नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता" "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" "नात्र काचन भिदा ऽस्ति" "स एव इह प्रविष्टः आनखाग्रेभ्यः" "आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति" इत्यादिश्रुतिस्मृतिसंकलस्य तत्प्रतिषेधकत्वादितिभावः ॥ ननु मास्तु प्राक् सिद्धं तादृशरूपान्तरं । मुक्तिसमकालं तूत्पद्यताम् । तत्र च मानं श्रुतिस्मृती दर्शिते । एवं भाविनीं च वृत्तिमाश्रित्य तदभेदोऽस्योपासनाय गौण्या उपदिश्यताम् । तत्राह— नचेति ॥ भाविनः=मुक्तिकालोत्पत्तिकत्वेन त्वया कल्प्यमानस्याप्युपदेशकाले न च अस्तिता=विद्यमानता नच । असीति वर्तमानार्थकलटो ऽसङ्गतनादित्यर्थः। "समानतीर्थेवासी" "समानोदरे शयित ओचोदात्तः" इत्यादिव्याकरणसूत्रे लोकवेदयोस्तदुदाहरणेषु 'अनयोः समा जातिः, समं गोत्रं, समं कुलं, समो ग्रामः' इत्यादिव्यवहारेषु च ऐक्येऽपि समानादिशब्ददर्शनात्, त्वदुदाहृतश्रुतौ "यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति

नामरूपे विहाय" इति प्रागुपन्यस्तदृष्टान्ताऽऽनुगुण्यात् परमं साम्यमित्याऽऽत्यन्तिकाऽभेदद्योतकपरमपदस्वारस्यात्, भेदप्रतिषेधकश्रुतिस्मृतिसहस्राऽनुरोधाच्च साम्यपदस्य ऐक्याऽर्थकत्वे स्मृतेस्तन्मूलिकायाः तत्समानार्थकत्वे च निश्चिते अनन्तकोटितादृशरूपाऽन्तरकल्पनं, आवरणात्पत्त्यादिकल्पनं,सर्वशाखागतेष्वभ्यस्यमानेषु महावाक्येषु ब्रह्मबोधकपदस्य लक्ष्यमाणगुणसम्बन्धनिमित्तक जघन्यतमगौणीवृत्तिकल्पनं, लडादिव्यत्ययकल्पनं च काशकुशाऽवलम्बनप्रयुक्तं सर्वथाऽनुचितमिति ध्वनयन्नाह—श्रुतहानिरिति ॥ श्रुतस्य=मुख्यवृत्त्या प्रतीतस्य प्रकरणित्वात्स्वप्राधान्येन उपदेशाऽर्हस्य ब्रह्मणो वर्तमानकालस्य हानिः=त्यागः, अश्रुतस्य=रूपान्तरस्य कालान्तरस्य च गतिः=अवगतिश्च कल्पयितुं नोचिता प्रामाणिकानामित्यर्थः। किञ्च ॥ कल्पितेऽपि रूपान्तरे त्वंपदस्य तत्र कथमन्वयः? मुख्यार्थस्य तद्भेदविरोधात्। तादृशसविशेषरूपस्य प्रसिद्धरूपाऽघटकत्वेन भागत्यागलक्षणयाऽखण्डाऽन्वयाऽयोगाच्च। बाधायां सामानाधिकरण्ये च सांसारिकरूपस्य मिथ्यात्वाऽऽपत्तिः, प्रागुक्तदोषश्च। निर्विशेषस्य च तद्गतभूयोधर्मवत्त्वरूपसादृश्याऽनिरूपकत्वात् अद्वितीयत्वाऽन्वयाऽनभ्युपगमाच्च नाऽन्वयोपपत्तिरपीति भावः॥ अतः परिशेषात् पदद्वयाऽर्थभागत्यागलक्षणापक्ष एव ज्यायानिति सैद्धान्तिकं पक्षं दर्शयति—इत्युचितेति ॥ इति=उक्तहेतोः द्वयोरपि पदयोः विरुद्धाऽविरुद्धांऽशत्यागोपादानाभ्यां जहदजहत्स्वार्थाख्या भागत्यागलक्षणैवोचितेत्यर्थः। हिशब्दः तात्पर्याऽनुगुणत्वात्सोपपत्तिकत्वाच्च युक्ततमत्वद्योतनार्थः ॥ ४२ ॥

पदद्वयाऽर्थेऽपि हेयांऽशविवेचनेन उपादेयांऽशं दर्शयन् सदृष्टान्तमखण्डार्थे पदसमन्वयं दर्शयति—अपहायेति ॥

मू० ॥ अपहाय धर्मनिचयं विरोधिनं
तनुबुद्धिसाक्षि सदनन्तचिद्घनम् ।
उपलक्ष्य सोऽयमिति वाक्यवत्ततो
घटयेदखण्डविषये पदद्वयम् ॥ ४३ ॥

पदद्वयाऽर्थयोः परस्पराऽभेदविरोधिनं तात्पर्यविरोधिनं च कारण-

कार्योपाधिद्वयम्, तत्प्रयुक्तसर्वज्ञत्व किञ्चिज्ज्ञत्व नियन्तृत्व नियम्यत्वाऽऽदि-धर्माणां निचयं=वृन्दं चेत्यर्थः। अपहाय=प्राग्दर्शितशोधनप्रकारैरपहाय मिथ्यात्वनिश्चयेन परित्यज्य, तनुः=शरीरं, बुद्धिः=अन्तःकरणं चेति स्थूलसूक्ष्मोपाधिद्वयस्य, तनुः=विलयेनाऽतिसौक्ष्म्यं आपन्ना बुद्धिः यस्मिन् सौषुप्ताऽऽज्ञाने तस्य च साक्षिणं नित्याऽपरोक्षचिन्मात्रं त्वंपदेन, सदनन्त-चिद्घनं=सर्वप्रपञ्चाऽपवादाऽवधिभूतं अद्वितीयाऽऽनन्दचिदेकरसं तत्पदेन, उपलक्ष्य=लक्षणया उपस्थाप्य, ततः=तदनन्तरं 'सोऽयं देवदत्तः' इति वाक्ये तदिदंपदवाच्यतदेतद्देशकालविशिष्टाऽर्थयोः विरुद्धदेशकालविशेष-णपरित्यागेन तदुपलक्षितव्यक्तिलक्षणोत्तरं नादिदं पदद्वयाऽऽत्मकं वाक्यं अखण्डे देवदत्तव्यक्तावेव तत्त्वमिति पदद्वयं अखण्डविषये=असंसृष्टाऽप-रिच्छिन्नाऽऽनन्दबोधाऽद्वयप्रत्यगाऽऽत्मैकवस्तुनि अवधारितदर्थपर्यवसाये, घटयेत्=सङ्गमयेत्। तथाघटितं हि महावाक्यं पुरुषार्थपर्यवसायि सप्रपञ्च-मूलाऽज्ञानोच्छेदक्षमं अखण्डाऽऽत्मगोचरं ज्ञानं जनयिष्यतीति भावः॥४३॥

ननु यद्येकमेव वस्तु पदद्वयेनाऽपि लक्ष्यते तदेव च वाक्यार्थः, तर्हि तत्त्वंपदयोः एकतरवैयर्थ्यम्। न ह्येकेन पदेन लक्षणयाऽखण्डपदार्थ-स्मृतिसंभवेऽपि तस्य शाब्दबुद्धिजनने पदान्तरस्याऽप्यपेक्षणान्न वैयर्थ्य-मिति वाच्यम्। असिपदसमभिव्याहारमात्रेणापि तदन्यथासिद्धेः। नच पदान्तरेण विरुद्धार्थाऽनुपस्थितौ अन्वयाऽनुपपत्तिरूपबीजाऽभावेन लक्षणैव न स्यादिति वाच्यम्। सदेवेत्यादैतदात्म्यमिदंसर्वमित्यन्त सन्दर्भपर्या-लोचनाऽधिगततात्पर्याऽनुपपत्त्यैव शुद्धे लक्षणायाः सुवचत्वादित्याशङ्कां परिहरन् पदद्वयोपादानप्रयोजनमाह—परोक्षेति॥

मू० ॥ परोक्षाऽनवाप्तत्वबुद्धिं परस्मि-
न्नपूर्णत्व दुःखित्व मोहं प्रतीचि।
निहन्तुं निजाऽलौकिकं चाऽऽत्मतत्त्वं
पदे वक्तुमन्योऽन्यतः साऽभिलापे ॥ ४४ ॥

परस्मिन्=ब्रह्मणि परोक्षत्वं=अप्रत्यक्षत्वं अनवाप्तत्वं=अलब्धत्वं चेति श्रोतॄणां बुद्धिम्=भ्रान्तिज्ञानं, तथा प्रतीचि=प्रत्यगात्मनि स्वस्मिन्नित्यर्थः

अपूर्णत्वं=अनवाप्तकामत्वं परिच्छिन्नत्वं वा, दुःखित्वं=अनादिकालादारभ्य नैरन्तर्येण जन्ममरणादिदुःखभोक्तृत्वं। नित्ययोगे इनिः। इति मोहं=भ्रमं तन्मूलमज्ञानं वा, निहन्तुं=निश्शेषमुन्मूलयितुं, तथा निजं=सर्वप्रपञ्चाऽवस्थावाधाऽवधिभूतं अत एव अलौकिकं=लोकप्रसिद्धाऽप्रसिद्धविलक्षणं, आत्मनस्तत्त्वं=वास्तवस्वरूपं वक्तुं=असन्दिग्धाऽपरोक्षतया बोधयितुं,तत्त्वं पदे द्वे अपि अन्योन्यतः=परस्परं साभिलाषे=सापेक्षे, नाऽन्योन्यसाहाय्यमन्तरेण शक्नुत इत्यर्थः। अयंभावः—मुमुक्षोः सर्वाऽनर्थनिदान जीवभाव निवृत्त्या स्वप्रकाश परमानन्दाऽद्वय ब्रह्मभाव प्रापणाय हि महावाक्य प्रवृत्तिः,नतु गिरि समुद्रादि वर्णनपर काव्यवत् औत्सुक्यमात्र परिहाराय "तरति शोकमात्मवित्" "रसꣳ ह्येवाऽयं लब्ध्वाऽऽनन्दीभवति" इत्यादि श्रुतिशतेभ्यः॥ इत्थं च त्वंपदाऽभावे मध्यमपुरुषाऽसंभवात् तदस्तीत्येव वाक्यं स्यात्। तेन चोपक्रान्ताऽद्वितीय ब्रह्म सद्भावमात्र बोधे तदसत्त्वाऽऽपादकाऽज्ञान निवृत्तावपि तद्भानाऽऽपादकाऽज्ञानाऽनिवृत्तेः तत्पारोक्ष्याऽनवाप्तत्वभ्रमाऽनिवृत्त्या नाऽभिलषितसिद्धिः॥ किञ्च॥ एवं सति ब्रह्मसद्भावस्य "सत्यं ज्ञानमनन्तं ब्रह्म" इत्याद्यवान्तरवाक्यैः "तत्सत्यम्" इत्यन्त प्रकृत सन्दर्भेण च सिद्धतया महावाक्यवैयर्थ्यं च। एवं तत्पदाऽभावे त्वमसि श्वेतकेतो इत्येतावन्मात्रेण सम्बोध्यश्वेतकेतु जीव सद्भावाऽवगमेऽपि तस्याऽपरिच्छिन्नाऽऽनन्दरूप ब्रह्मभावाऽनवगमात् अपूर्णत्व दुःखित्वादि संसारभ्रमाऽनिवृत्तेः अभिलषिताऽसिद्धिः, वाक्यस्य ऐकात्म्यपरसन्दर्भाऽसङ्गतिश्च स्यादिति उपाधिद्वयोपलक्षिताऽखण्ड प्रत्यग्ब्रह्म बोधाय पदद्वयमप्यावश्यकमिति॥ अथवा॥ ननु यत्पदस्य यस्मिन्नर्थे यत्पदव्यतिरेक प्रयुक्ताऽभिमतस्वार्थाऽन्वयाऽननुभावकत्वं, तत्पदस्य तेन पदेन सह साकाङ्क्षत्वं। आकाङ्क्षा च सर्वत्र शाब्द बोधे हेतुरिति सर्वसंमतम्। नच तत्त्वंपदयोरेकार्थ लक्षकयोः साऽस्ति। अखण्ड वस्तुनो भेदाऽभावेन भिन्नप्रवृत्तिनिमित्ताऽघटितत्वेन च भेदेनाऽभेदेन चाऽन्वयाऽभावात्। लाक्षणिक पदानामननुभावकत्वस्य स्वाभाविकत्वेन पदान्तर व्यतिरेकाऽप्रयुक्तत्वात्। एवमेकपदार्थे अपरपदार्थसंसर्गवत्त्व रूप योग्यतापि नाऽखण्डैकार्थे संभवतीत्याशङ्क्याह-परोक्षेति॥ तत्त्वंपदे स्वार्थयोः परोक्षत्वाऽपूर्णत्वादिभ्रमं

धारयितुं तात्पर्यविषयाऽपूर्वार्थं बोधयितुं चाऽन्योन्यतः साभिलाषे=साकाङ्क्षे इत्यर्थः। तथा च न त्वदभिहितमाकाङ्क्षालक्षणं साधु। प्रकृष्टप्रकाशादिवाक्यस्थ पदाकाङ्क्षाऽव्यापनात्। किन्तु यत्पदस्य यत्पदव्यतिरेकप्रयुक्त श्रोतृजिज्ञासोच्छेदकशाब्दबुद्ध्यजनकत्वं, प्रकृततात्पर्यविषयाऽर्थशाब्दबुद्ध्यजनकत्वं वा, तत्पदस्य तेन साकाङ्क्षत्वमित्येव लक्षणमुचितमिति भावः॥ नचा सर्वलाक्षणिकपदं वाक्यमननुभावकमेवेति नियमे प्रमाणमस्ति। "वायुर्वै क्षेपिष्ठा देवता" इत्याद्यर्थवादवाक्येषु सर्वेषां पदानां अखण्डप्राशस्त्यलक्षकत्वेऽपि साकाङ्क्षत्वस्य अनुभावकत्वस्य च भाट्टसंमतत्वात्॥ अन्योत्त्यादिकाव्येऽप्रकृतशाब्दबुद्धेः सर्वपदलक्षणाधीनायाः सर्वानुभवसिद्धत्वाच्च। अत एव योग्यतापि न त्वदुक्तलक्षणा युक्ता, किन्तु तात्पर्यविषयाऽबाधरूपैव युक्तेति दिग्विजयः॥ ४४ ॥

अखण्डविषये पदद्वयं सहप्रयोगेदित्युक्तम। किं तदर्थेऽखण्डत्वं? किंवा वाक्ये अखण्डार्थकत्वम्? इत्याऽऽशङ्क्य, तदुभयलक्षणोक्तिमुखेन परिहरन् तत्प्रसिद्धिमुदाहरणेन वारयति—असंसर्गीति ॥

मू० ॥ असंसर्गिसत्यार्थता स्यात्पदाना-
मनन्यार्थतावाऽप्यखण्डार्थताऽत्र ।
प्रसिद्धा ह्यसौ चन्द्रमात्रप्रबोधात्
प्रकृष्टप्रकाशः शशीत्यादिवाक्ये ॥ ४५ ॥

अत्र=अस्मिन्शास्त्रे दर्शिताआकाङ्क्षादिमत्पदानां सम्बन्धिनी अखण्डश्चासौ अर्थश्च अखण्डार्थः तद्भावःअखण्डार्थता असंसर्गिसत्यार्थता= अन्यसंसर्गाऽघटिताऽबाधितवस्तुस्वरूपतेत्यर्थः। विशिष्टवारणाय अन्यसंसर्गाऽघटितेति। सर्वं लक्षणवाक्यमखण्डार्थकमिति मते सम्बन्धिद्वयाऽऽश्रितो वैशिष्ट्यबुद्धिहेतुः सम्बन्धो वाक्यार्थ इति वाक्यार्थभूतसंसर्गे अव्याप्तिवारणाय अन्येति। गोः सास्नादिमती इति वाक्यार्थे नानागोव्यक्तिषु, 'त इमेभ्रातरः' इति प्रत्यभिज्ञावाक्यार्थे नानाभ्रातृव्यक्तिषुचाऽव्याप्तिवारणाय संसर्गेति। अध्यस्तरजतादिस्वरूपवारणाय सत्येति। सत्यत्वं चात्र व्यावहारिकसाधारणं ब्रह्मज्ञानेतराऽबाध्यत्वरूपं विवक्षितम्। यदितु

गवादिलक्षणवाक्ये प्रत्येकं गवामन्याऽघटितत्वात् संसर्गेति व्यर्थमिति शङ्क्येत, तदा एकदेशप्ररूढा वृक्षा वनमित्यादि लक्षणवाक्यार्थ उदाहार्यः। एकैकवृक्षस्य वनव्यवहाराऽविषयत्वात् एकदेशस्थितेः उपलक्षणत्वेऽपि तस्य वृक्षान्तरघटितस्वरूपत्वात्। यदि त्वेकदेशस्थितिवत् वृक्षान्तरसाहित्यमप्युपलक्षणम्, अखण्डवृक्षा एव तु वनमित्युच्येत तदाप्याह—अनन्यार्थतावेति। बहुव्रीहिघटितकर्मधारयात् तल्। अन्याऽघटितवस्तुत्वं अखण्डत्वमित्यर्थः। एवंचाऽध्यस्तरजतादिव्यक्तिमात्रस्यापि केनचिदखण्डत्वाऽभ्युपगमेऽप्यदोषः। वस्तुपदं तु शून्यवारणाय। नन्वन्याऽघटितं वस्त्वेवाऽप्रसिद्धं, सर्ववस्तूनां जातिगुणादिघटितत्वादित्याशङ्क्याह—प्रसिद्धेति। असौ=ईदृश्यखण्डता, 'प्रकृष्ट प्रकाशः शशी' इत्यादि चन्द्रादिस्वरूपमात्रपरे वाक्ये श्रुते सति प्रसिद्धा=चन्द्राद्यर्थे सर्वानुभवसिद्धेत्यर्थः॥

ननु चन्द्रादिस्वरूपमपि प्रकर्षप्रकाशचन्द्रत्वादिघटितमेव तत्र बुध्यताम्, तत्राह—चन्द्रमात्रेति। जिज्ञासातात्पर्ययोरनुरोधेन चन्द्रमात्रस्यैव तत्र बुद्ध्यमानत्वात्। "यत्परः शब्दः स एव शब्दार्थः" इति न्यायात्। नच प्रकर्षादिघटितरूपात् अन्यच्छुद्धं चन्द्रस्वरूपं नास्त्येवेत्यपलपितुं शक्यम्। तथा सति चन्द्रपदेन तादृशरूपस्यैव अवश्यं बोधनीयतया प्रकृष्टादिविशेषणपदवैयर्थ्याऽऽपत्तेः। तद्व्यावर्तनीयविशेष्यचन्द्रस्वरूपाऽभ्युपगमे तु तदेव उपलक्षणत्यागे शुद्धं प्रसिद्धमिति भावः। इयंचाऽखण्डार्थस्वरूपलक्षणपरत्वेन योजना। अन्यादृशलक्षणपरत्वेऽपि पदानां सम्बन्धिनी असंसर्गिसत्यार्थता=संसर्गाऽगोचरशाब्दप्रमागोचरता अन्याऽगोचरशाब्दधीविषयता वा अखण्डार्थता। यथा प्रकृष्टप्रकाशादिवाक्यजन्यशाब्दधीगोचरे चन्द्रस्वरूपे सा प्रसिद्धेति योज्यम्। एतदेव लक्षणद्वैविध्यमभिप्रेत्योक्तं कल्पतरौ—

"अविशिष्टमपर्यायाऽनेकशब्दप्रकाशितम्।
एकं वेदान्तनिष्णाता अखण्डं प्रतिपेदिरे" ॥ इति ॥

तत्राऽविशिष्टमिति स्वरूपाऽभिप्रायेण, असंसृष्टं अन्याऽघटितं चेत्यर्थात्। अपर्यायाऽनेकशब्दप्रकाशितमेकमितितु तदन्यलक्षणाऽभिप्रायेण, अपर्यायाऽनेकशब्दजन्यैकमात्रगोचरशाब्दधी विषयत्वमित्यर्थपर्यवसानादिति

बोध्यम् । स्वामिनस्तु—आरण्यपदेनैव अन्याऽघटितस्वरूपस्य सुलभत्वात् न पृथगसंसर्गनापेक्षेत्यभिप्रेत्य अर्जुनमिश्रितचन्द्रिकानुरोधेन सांसर्गिकविषयतामनुभूय शाब्दधीविषयत्वं स्वजनकस्मृतिगोचराऽन्याऽविषयकशाब्दधीविषयत्वं चेति निष्कृष्टलक्षणद्वयमुपवर्ण्य तात्पर्यगत्या तदुभयसंगतिरनेन इमं श्लोकमुदाजहुः । अनयोराद्यलक्षणे शाब्दधीरित्युपादानं प्रकृताभिप्रायेण, निर्विकल्पकप्रत्यक्षविषयस्य अतिप्रसक्तत्वात् । इच्छादीनां च सांसर्गिकविषयताशून्यत्वाऽसंभवेनाऽव्यावर्तकत्वात् ॥ द्वितीये तु यत्र स्रगादिस्मरणाऽनन्तरं तदेकया,नवेत्यनयोः स्वजनकस्मृतिगोचराऽन्याऽविषयकत्वात् तद्विषये स्रगादिविनिर्दिष्टेऽतिव्याप्तिवारणाय धीपदम् । पुनः पुनः स्मरणेन दृढतरसंस्कारप्रभवैः स्मृतेरपि स्मृतित्वेन द्वितीयादिस्मरणे स्वजनकस्मृतिगोचराऽन्याऽविषयकेऽतिव्याप्तिवारणाय शाब्दपदम् । घटाद्यादिपदार्थानां संगृहीतत्वमनेऽपि न क्षतिः । पारिभाषिकाऽखण्डत्वस्य तत्रापि सत्वे बाधकाऽभावात् ॥ न च लघुभूतत्वात् आद्यमेव लक्षणमस्तु किं द्वितीयेनेति वाच्यम् । गुरुणापि लक्ष्यमितेनानुभविकत्वेनाऽऽदरात् । इतरभेदाऽनुमितिव्यक्तीनां धूमप्रागभावप्रदर्शकत्वात् । विषयताविशेषस्यैव लक्षणत्वेन स्वजनकेत्यादेस्तत्परिचायकत्वेन प्रत्युत लघुतरत्वाच्चेति ॥

वाक्यस्य अखण्डार्थकत्वव्युत्पादनपरत्वेनापि अयमेव श्लोको योज्यते । वाक्यघटकसमस्तपदानां असंसर्गिमत्यार्थता=अनन्यपुरुषघटितत्रिपदबहुव्रीहित्वम् । अन्यसंसर्गाऽघटिताऽबाधितार्थप्रतिपादकता अनन्यार्थता । त्रिपदबहुव्रीहिः बहुव्रीहिघटितबहुव्रीहिर्वा तत् । अन्याऽघटितवस्तुप्रतिपादकता वा अथाऽखण्डार्थकवाक्येषु अखण्डार्थता । अखण्डार्थकता हि= यस्मात्प्रकृष्टप्रकाशादिवाक्ये अस्मिन् चन्द्रमात्रस्य प्रयोगात्प्रसिद्धेत्यर्थः । अत्र आद्यलक्षणे 'दण्डीपुरुषः' इति वाक्येऽतिव्याप्तिवारणाय अघटितान्तम् । समवन्धलक्षणवाक्येऽव्याप्तिवारणाय अन्येति । 'गौः सास्नादिमती' इति वाक्येऽव्याप्तिवारणाय संसर्गेति । बाधितार्थकवाक्यवारणाय अबाधितेति । पर्यायपदवारणाय वाक्यत्वमित्यपि बोध्यम् । द्वितीयेऽपि 'दण्डीपुरुषः' इत्यादिवाक्यवारणाय अन्याऽघटितेति । 'खपुष्पं शशशृङ्गम्' इत्यादिवाक्यवारणाय वस्तुपदमित्यादि बोध्यम् ॥

अथवा ॥ असंसर्गिसत्यार्थता= सांसर्गिकविषयताशून्याऽबाधितार्थकतेत्यर्थः। तथाच सांसर्गिकविषयताशून्यशाब्दप्रमाजनवाक्यत्वं अखण्डार्थकत्वमिति फलितम् ॥ 'दण्डीपुरुषः' इति वारणाय शून्यान्तम्। समूहातिरिक्ताऽखण्डसमूहाऽभ्युपगन्तॄणां पदसमूहात्मकस्य नीलोत्पलादिवाक्यस्य विषयविधया तदेवेदं वाक्यमिति प्रत्यभिज्ञात्मकप्रत्यक्षजनकत्वात् तद्वारणाय शाब्देति ॥ नच वनराश्यादिषु अखण्डसमूहस्य कैश्चिदभ्युपगमेऽपि वर्णपदाऽतिरिक्ताऽखण्डपदवाक्ययोः वैयाकरणेतरैरनभ्युपगमात् न तत्प्रत्यभिज्ञाप्रसक्तिरिति वाच्यम्। सर्वं लक्षणवाक्यं अखण्डार्थकमेवेत्यभ्युपगन्तॄणां अद्वैतसिद्धिकारादीनां मते वर्णसमूहः पदं पदसमूहो वाक्यमिति पदवाक्यलक्षणवाक्ययोः अखण्डार्थकत्वस्य अखण्डपदवाक्ये अनभ्युपगम्य निर्वोढुमशक्यत्वात् ॥ मतान्तरे तु शाब्देत्युपरञ्जकमेव। अदेवदत्ते देवदत्तोऽयमिति भ्रममूलके 'सोऽयं देवदत्तः' इतिवाक्ये अध्यस्तदेवदत्तस्वरूपमात्रबोधकेऽतिव्याप्तिवारणाय अबाधितविषयकत्वरूपप्रमात्वनिवेशः। तादृशप्रमायां पदानामपि स्वार्थस्मृतिद्वारा जनकत्वं प्रत्येकमप्यस्तीति वाक्यत्वमिति। यदि तु वनदेवतापत्यादिपदार्थानां संसृष्टैकस्वभावत्वं नातिरिक्तत्वमिति मतम् तल्लक्षणवाक्येषु अखण्डार्थकत्वव्यवहारश्चास्ति, तदा तेष्वव्याप्तिवारणायाह—अनन्यार्थता वेति। पदानामनन्यार्थता=एकपदार्थाऽनतिरिक्ताऽर्थकतेत्यर्थः। तथाच एकपदाऽर्थानतिरिक्तगोचरशाब्दधीजनकवाक्यत्वं तदिति फलितम्। दशदाडिमादिवाक्यवारणाय शाब्दधीजनकमिति। नीलोत्पलादिवाक्यवारणाय गोचरान्तम्। पदार्थत्वं च वृत्त्या पदजन्यशाब्दधीहेतुस्मृतिविषयत्वं, अतः पदार्थाऽतिरिक्तस्याऽप्रसिद्धेः एकेति। प्रकृतवाक्यघटकैकपदं पदविशेषणम्। तेन प्रमेयपदार्थाऽतिरिक्ताऽप्रसिद्ध्या असंभवतादवस्थ्यं नाऽऽशङ्कनीयम्। शाब्दधीहेतुस्मृतिविषयत्वोक्त्या च भाट्टमते वाक्यार्थस्य सर्वपदलक्ष्यत्वेऽपि तत्स्मृतेःशाब्दबुद्ध्यहेतुत्वान्नाऽखिलवाक्येष्वतिव्याप्तिः। एतेनाऽन्विताऽभिधानवादे अन्वयस्य शक्यत्वनिबन्धनोऽपि दोषः प्रत्युक्तः। एकपदेन एकपदमात्रजन्यस्मृतिविषयत्वमिति तु न विवक्षणीयम्। प्रकृते असंभवाऽऽपत्तेः। नीलोत्पलादिवाक्यस्यापि सङ्केते नियतोद्बोधकविधया क्वचित् अ-

खण्डोपत्यादिस्मारकत्वसंभवात् शाब्देति। यत्तु केनचित्कलशपदस्य कश्चिदर्थोऽस्तीति निश्चित्य तत्स्वरूपजिज्ञासया 'कः कलशः' इति पृष्टे 'घटः कलशः' इत्यनेन उत्तरिते वाक्ये अखण्डघटमात्रबोधकता अनुभवसिद्धा, तैर्थिकानां च तथाखण्डार्थत्वव्यवहारो नास्ति, तथा पूर्वलक्षणे अत्र चाऽपर्यायपदघटितत्वेनापि वाक्यं विशेषणीयम्। एतदेवाऽभिप्रेत्य उदाहृतकल्पतरुश्लोके "अपर्यायाऽनेकशब्दप्रकाशितम्" इत्युक्तम्। अन्यैस्तु एतादृशस्थले अखण्डार्थकत्वं इष्टाऽऽपत्तिरित्यभिप्रेत्य तन्नोपात्तमिति बोध्यम्॥ इदमेव लक्षणद्वयमुक्तं तत्त्वदीपिकाकारैः—

"संसर्गाऽसङ्गिसम्यग्धीहेतुता या गिरामियम्।
उक्ताऽखण्डार्थता यद्वा तत्प्रातिपदिकार्थता॥" इति

इदं च सर्वं ज्ञायमानशब्दस्यैव शाब्दधीकरणत्वमित्यभ्युपगच्छतां भाट्टादीनां मतमाश्रित्योक्तम्। क्षणिकशब्दवादिकणभक्षाऽक्षचरणादिमते अतीताऽनागतशब्दानां शाब्दबुद्धिजनकत्वाऽसंभवेऽपि यावत्तद्व्यवहारकालाऽनुच्छित्तिकाऽऽनुपूर्वीक नित्यवर्णसमुदायात्मक शब्दवादे तावदनभिव्यक्तस्यापि स्मृत्याद्युपस्थापितस्य तस्य शाब्दधीजनकत्वे बाधकाऽभावादिति। शब्दज्ञानस्यैव करणत्वमिति नवीन नैयायिक मतमभ्युपेत्याऽपि अनयोर्लक्षणयोर्निष्कर्षः स्वामिभिरखण्डार्थवादे प्रपञ्चितः। तथाहि—सांसर्गिकविषयताशून्य निरूपितजनकतावच्छेदकं यत्पदोत्तरत्वप्रकारक यत्पदविशेष्यक ज्ञानत्वं तत्पदोत्तरत्वविशिष्ट तत्पदत्वं अखण्डाऽर्थकत्वम्। अवान्तरवाक्यं सत्यादिपदानां चिन्मात्र लक्षकत्वोपपादनाय भवति उक्तविधशाब्दधीजनकतावच्छेदकं सत्यादिपदोत्तरत्वप्रकारक ज्ञानादिपदविशेष्यक ज्ञानत्वमिति लक्षणसमन्वयः। एवं महावाक्येष्वपि योज्यम्। अत्र लक्षणघटकजनकता वस्तुगत्या शाब्दत्वावच्छिन्ननिरूपिताऽपि न तेन रूपेण निवेशिता। गौरवात्, फलाभावाच्च। तथाचोक्तविषयताशून्यं घटादिकमिति तज्जनक दण्डाद्यतिव्याप्तिवारणाय यत्पदेत्यादि। संसर्गपरवाक्यवारणाय निरूपितान्तम्। अपत्यदेवतादि संसृष्टैकस्वभावपदार्थानां लक्षणवाक्येष्वव्याप्तिवारणाय स्वजनक स्मृतिगोचराऽन्यविषयकनिरूपित जनकताऽवच्छेदकं यत्पदोत्तरत्वप्रकारक यत्पदविशेष्यक ज्ञान-

त्वं तत्पदोत्तरत्वविशिष्ट तत्पदत्वमिति वा लक्षणमस्तु। स्वपदं प्रकृतशाब्दधीपरं तज्जनिका या पदार्थस्मृतिः तद्गोचराऽन्यविषयिणी सैव शाब्दधीः तज्जनकतावच्छेदकं सत्यादिपदोत्तरत्वप्रकारक ज्ञानादिपदविशेष्यक ज्ञानत्वमिति लक्षणसमन्वयः। विशिष्टपर वाक्यजन्य शाब्दबुद्धेः तज्जनकस्मृति गोचरैकपदार्थाऽन्यपदान्तरार्थ संसर्गविषयकत्वात् नाऽतिप्रसङ्गः। अखण्डाऽर्थस्याऽपि कुतश्चिदन्यत्वादसंभवः स्यात्। अतः स्वजनकस्मृतिगोचरेति। सर्वस्यैव पदार्थाऽऽदिपदात् स्मृतिसंभवेन स्मृतिगोचराऽन्याऽप्रसिद्धिनिबन्धनाऽसंभववारणाय स्वजनकेतिस्मृतिविशेषणम्। नचैवं पदार्थसामान्यलक्षणवाक्ये अव्याप्तिः। व्यावृत्तवस्तुबोधस्यैव लक्षणफलत्वेन व्यवहारमात्राङ्ग पारिभाषिकलक्षणवाक्यानां अखण्डार्थत्वाऽभावेऽप्यदोषात्। नीलोत्पलादिवाक्यस्य यदि स्वसमानविषयक स्मृतिजन्योत्पलादिमात्रगोचरस्मृतौ नियतोद्बोधकविधया जनकत्वं प्रसिद्धं तदा अन्याऽविषयकेत्येतदुत्तरं शाब्देत्यपि देयमेवेति। यदि तु सत्यादिवाक्यानां महावाक्यानां चाऽखण्डार्थकत्वे कस्य चिन्मन्दमते विप्रतिपत्तिः स्यात् तदा स इत्थं प्रयोगेन प्रतिबोधनीयः। उक्तवाक्यानि सांसर्गिकविषयताशून्य प्रमाजनकानि स्वघटकैकपदार्थाऽतिरिक्तगोचरशाब्दप्रमाजनकानि वा तादृशाऽर्थमात्रतात्पर्यकत्वात् प्रकृष्टप्रकाशश्चन्द्र इति वाक्यवदिति। एतदेवसूचयन् दृष्टान्तप्रसिद्धिं दर्शयति—प्रसिद्धेति। 'प्रकृष्टप्रकाशश्चन्द्रः' इति वाक्ये आदिपदात् सोऽयं देवदत्त इति प्रत्यभिज्ञाऽभिलापकवाक्ये घटाऽऽकाशो महाकाश इत्यौपाधिकभेदभ्रमनिरासके आकाशैक्यपरवाक्ये च असौ उक्तहेतुसमानाधिकरणा अखण्डार्थता प्रसिद्धेत्यर्थः। तत्राऽनुभवं प्रमाणयति—चन्द्रमात्रेति। एवं देवदत्तमात्र प्रबोधादाकाशमात्र प्रबोधादित्यपि बोध्यम्॥ ४५॥

तादृशव्युत्पत्त्यभावादनुभवे विप्रतिपद्यमानं प्रकृष्टप्रकाशादिवाक्ये साध्यसाधनवैकल्यमाशङ्कमानं वाक्यप्रवृत्तिप्रकारव्युत्पादनेन समाधत्ते—प्रकर्षेति।

मू०॥ प्रकर्षप्रकाशत्वचन्द्रत्वयोग-
व्यवच्छेदभेदादयो नैव दृष्टाः।

न वा शाब्दधीरस्त्यजिज्ञासितेऽर्थे
तनो वाक्यतश्चन्द्रमात्रप्रबोधः ॥ ४६ ॥

यद्वा चन्द्रशब्दार्थश्चन्द्रः स चाऽस्मिन् ज्योतिर्मण्डलेऽस्तीति प्रमाणाऽन्तरेण निश्चित्य प्रत्यक्षेण च नभसि परस्परविधर्मकं ज्योतिर्गणं तत्र विजातीयं प्रकृष्टप्रकाशं मण्डलं चाऽपश्यन्नस्य कश्चिदन्यं पृच्छति—अस्मिन् ज्योतिर्मण्डले कश्चन्द्र इति ? तत्राऽन्यः प्रकृष्टप्रकाशश्चन्द्र इति तस्मै चन्द्रं बोधयतीति हि वाक्यप्रवृत्तिः। तत्र जिज्ञासुना प्रकृष्टपदस्य प्रवृत्तिनिमित्तं प्रकर्षः, प्रकाशपदस्य प्रकाशत्वं, चन्द्रपदस्य चन्द्रत्वं चेत्येतानि वा, एषां धर्मिणि योगः=संसर्गः, धर्मिणां वा परस्परं संसर्गः, एषां धर्माणां व्यवच्छेदः=चन्द्रेतराऽवृत्तित्वम्, एतद्धर्मान्तरस्य वा चन्द्राऽवृत्तित्वं, भेदःचन्द्रे इतरेभ्यः इतरेषु वा चन्द्रात्। आदिपदाच्चन्द्रादिपदशक्तिः चन्द्रलक्षणानि च गृह्यन्ते, एतेनैव पृष्टाः, यतः एतद्यन्ताःप्रागेव निश्चिताः। लक्षणमपि लक्ष्ये ज्ञाते न जिज्ञासितं निष्फलत्वात्। अज्ञाते तु लक्ष्यमेव जिज्ञासितं प्रश्नार्हं चेति तस्यैव प्रश्नो युक्त इत्यर्थः। पदार्थतावच्छेदकविशिष्टे पदसम्बन्धाऽग्रहे हि प्रश्नवाक्यप्रयोगस्यैवाऽनापत्तिः उत्तरवाक्यावबोधाऽनापत्तिश्चेति तेषां प्राङ् निश्चितत्वमवश्यं वाच्यम्। नचैषां प्राक् परोक्षेण निश्चयेऽपि प्रत्यक्षीकरणाय प्रश्न इति युक्तम्। किं शब्दस्य एकवचनान्तस्य जिज्ञासितैकवस्तुमात्र बोधनसमर्थत्वेन चन्द्रपदसामानाधिकरण्येन च प्रश्नवाक्यस्य चन्द्रेतरबोधनाऽसामर्थ्यात् अन्यादृशप्रश्नवाक्य प्रयोगाऽऽपत्तेः। उत्तरवाक्यस्य च परमते प्रत्यक्षजननाऽसमर्थत्वेन अप्रयोगापत्तेः। शास्त्राऽपरोक्षवादेऽपि अयं चन्द्र इति साङ्गुलिनिर्देशवाक्येनाऽपि जिज्ञासानिवृत्तिदर्शनाऽनुरोधात् तस्याश्चन्द्रमात्रविषयत्वकल्पनौचित्यात् प्रत्यक्षेणैव विषयविशेषस्य तत्र प्रकर्षप्रकाशत्वेतरधैजात्यभेद तद्वैशिष्ट्यानां निश्चितत्वेनाऽजिज्ञासितत्वाच्च। अत एव पदार्थानां संसर्गोऽपि न जिज्ञासितः। तदेषां कः संसर्ग इति प्रश्नाऽऽपत्तेश्च। एवं व्यवच्छेदभेदयोरप्यशब्दार्थत्वात् प्रश्नोत्तरवाक्याऽननुगुणत्वात् प्रत्यक्षीकृतत्वाच्चाऽप्रश्नार्हता उपपादनीया॥ नन्वेवं सति चन्द्रस्वरूपमपि प्रत्यक्षीकृतमेवेति न प्रश्नार्हं स्यादिति चेत्। सत्यम्। तथापि तदुत्तरकालमपि चन्द्रं नजानामीति तद्-

ज्ञानाऽनुभवात् जिज्ञासाप्रश्नयोर्दर्शनाच्च प्राक्तनचन्द्रप्रत्यक्षस्याऽनिर्द्धारणात्मकत्वात्। श्रीमन्नृसिंहाऽऽश्रमस्वामिभिः एककोटिकसंशयस्यापि युक्तिभिः समर्थिततत्वेन कोट्यन्तराऽनवगाहनमात्रेण निश्चयत्वाऽसिद्धेः। न च तर्हि प्रकृष्टप्रकाशादिपदार्थतद्धर्मेष्वपि अनिर्धारणात्मकमेव प्रत्यक्षं वृत्तमिति तेषां प्रश्नार्हताऽस्त्विति वाच्यम्। चन्द्रं नजानामीत्यज्ञानाऽनुभवोल्लेखवत् तदुत्तरं प्रकृष्टप्रकाशादिपदार्थं न जानामीत्यज्ञानाऽनुभवोल्लेखयोरदर्शनेन वैषम्यात्। न च क्वचन्द्रत्वमिति नजानामीति चन्द्रत्वेऽप्यज्ञानाऽनुभवोऽस्तीति वाच्यम्। चन्द्र एव चन्द्रत्वमिति प्रागेव परोक्षतो निश्चयात्। प्रकृष्टप्रकाशव्यक्तौ इतरवैजात्यस्यैव चन्द्रत्वेन तस्य प्रत्यक्षीकृतत्वात्। अत्र इतरवैजात्यं न जानामीत्यननुभवाच्च। निर्धारितव्यक्तिधर्मतया चन्द्रत्वाऽज्ञानं तु असाधारणचन्द्रस्वरूपानिर्धारणप्रयुक्तमेवेति तस्यैव प्रश्नविषयत्वम्॥

नन्वेवं सति कथं विशेषणानां व्यावर्तकत्वप्रसिद्धिः? व्यावृत्त्यबोधे कथं वा विशेषणादि सार्थक्यमिति चेत्। शृणु। सर्ववाक्येषु जातिशक्तिवादे पदात् जातेरेव प्रथममुपस्थितौ जातेर्व्यक्त्याऽऽक्षेपमन्तरेण व्यवहाराऽनङ्गत्वात् विनिगमकाऽभावेन सर्वव्यक्त्याऽऽक्षेपप्रसक्तौ,प्रकरणादिनेव विशेषणेन स्वसंवलितव्यक्तिः, उपाधिना स्वावच्छिन्नव्यक्तिः, उपलक्षणेन च स्वोपलक्षितव्यक्तिरिति व्यक्तिविशेषा एवाऽऽक्षिप्यन्ते। ततस्तेषामेव शाब्दबुद्धौ भानं, नान्येषां। तत्रोपाधिविशेषणयोः यद्यपि शाब्दबुद्धौ भानप्रसक्तिरस्ति, तथापि नोपलक्षणस्य तत्प्रसक्तिः। जातिविशिष्टादिव्यक्तिशक्तिवादेऽपि पदात्सामान्यतः सर्वव्यक्तिस्मृतावपि विशेषणादिभिः स्वसंवलितादिव्यक्तय एव शाब्दबुद्धिविषया नियम्यन्तइति व्यक्त्यन्तराणामभानमेव व्यवच्छेदः, नतुशब्दादितरभेदभानं। भेदस्य प्रमाणगोचरत्वनिरासात्, अपदार्थस्य शाब्दधीप्रकारत्वाऽयोगाच्च॥ ननु उत्पलादौ नीलादिविशेषणैःअनीलादिभेदाऽप्रत्यायने कथमनीलादिभ्रमसंशयनिवृत्तिरिति चेत्। न। भ्रमसंशययोः बोध्यमात्रगोचराऽज्ञानकार्यत्वेन उत्पलादिविशेषज्ञानेन तदज्ञाननाशादेव निवृत्त्युपपत्तेः। भेदज्ञानस्यैव तदितरसंशयादिविरोधित्वाऽभ्युपगमे व्यावृत्ततद्व्यक्तीरनिश्चित्य तदितरत्वानिश्चयाऽयोगात् इतरत्वाऽनिश्चयेच प्रतियोगिताच्छेदकविशिष्टप्रतियोग्यनुपस्थितौ इतरभेदज्ञाना-

ऽसंभवात् वस्तुतस्त्वाऽऽवरणमसकान्तमेव अनुभूयमाना भ्रमसंशयादिनि-
वृत्तिरनुपपन्ना स्यादिति वस्तुतत्त्वज्ञानमेव तदज्ञानमुन्मूलयत् तन्मूलभ्रम-
संशयाद्युच्छिनत्तीति युक्तम् । एवं च प्रकृष्टप्रकाशादिपदानां प्रकर्षाद्युपल-
क्षितव्यक्तिविशेषपरत्वे उपयोगश्च वैयर्थ्यमित्यपि दर्शितमेव ॥

ननु किंशब्दस्य जिज्ञासितधर्मवति शक्तत्वात् विशिष्टस्यैव प्रश्नोऽस्तु, लक्षणवाक्यस्य च जिज्ञासितप्रकृष्टप्रकाशादिधर्मविशिष्टधर्मिपरताऽस्तु । चन्द्रेतरभेद चन्द्रपदवाच्यत्वयोरपि चन्द्रधर्मत्वादेव जिज्ञासितत्वेऽपि तयो-र्लक्षणवाक्येन साक्षाद्बोधयितुमशक्यत्वात् अनुमानोत्थापनेन तद्बोधोऽ-स्तु । तथा च प्रयोगः—"चन्द्रः इतरेभ्यो भिद्यते चन्द्रपदवाच्यो वा, अ-स्मिन् ज्योतिर्मण्डले प्रकृष्टप्रकाशत्वात्, यन्नैवं तन्नैवं यथा तमः" इति चेत्। न । किंशब्दस्य जिज्ञासितधर्मवति शक्तिमत्त्वेऽपि जिज्ञासितस्य लक्ष्यत्वात् शक्तिकल्पनानौचित्यात् । जिज्ञासितधर्मवत्ताऽपरिज्ञानेन संशयेन च प्रतिव-चनप्रयोगाऽनुपपत्तेश्च । नच नक्षत्रादिपदवच्छक्तितात्पर्यं, प्रकरणादिना धर्म-विशेषोपस्थितिरस्तीति न दोष इति वाच्यम् । प्रष्टुः तेषां धर्मविशेषाणामज्ञाने परं प्रति तद्बुबोधयिषया प्रश्नप्रयोगानुपपत्तेः, ज्ञाने च जिज्ञासानुपपत्तेस्त-च्छब्दादिपदवैयर्थ्यात्। जिज्ञासायाः शक्यतावच्छेदककोटिनिवेशावश्यकत्वे जि-ज्ञासितं शक्त्यैव लभ्यत्वादिति न प्रश्नवाक्यस्य त्वदुक्तोऽभिप्रायः । यच्च भेदाद्यनुमानोत्थापकत्वमुक्तं, तदपि न । अप्रमिते चन्द्रे तत्र भेदस्य चन्द्रपदवाच्यत्वस्य वाऽनुमानाऽयोगात् । पक्षतावच्छेदकविशिष्टपक्षे हे-तुमत्ताज्ञानस्यैव परामर्शत्वेन तस्य तथाऽऽवश्यकत्वात्। प्रमितेऽपि तस्य प्रमाणान्तरात् प्रमितिः? लक्षणवाक्यादेव वा? । आद्ये सामान्यतः प्रमितौ सामान्यत एव इतरभेदसिद्धिरित्यभिमताऽसिद्धिः। विशेषतः प्रमितौ वि-शेषग्राहिप्रमाणेनैव भेदसिद्धिः,व्याप्त्यनिश्चयाच्च न चन्द्रपदवाच्यत्वानुमि-तिरित्युभयथाप्यनुमानवैयर्थ्यम् । द्वितीयेतु लक्षणवाक्यस्य चन्द्रस्वरूपप्र-मितावेव पर्यवसानात् तावतैव श्रोतृजिज्ञासानिवृत्तेरितरभेदादौ तात्प-र्याऽभावादनुपपत्तिफलसिद्धेश्च नानुमानोत्थापकता चेति । यत्तु कल्पतरौ—'न चन्द्रशब्दवाच्यत्वं साध्यते, अचन्द्रे चन्द्रशब्दवाच्यत्वसाधने व्याघातात् । अथ चन्द्रत्वमप्यभिप्रेत्य चन्द्रशब्दवाच्यत्वं साध्यते, तर्हि चन्द्रत्वमेव सा-

ध्यतां, अवश्यापेक्षितत्वात्' इति, तस्य कोऽभिप्रायः, वाक्यस्य चन्द्रत्वांशेऽपि तात्पर्यस्याऽनिष्टत्वात् वाक्याच्चन्द्रमात्रत्वसिद्धौ अनुमानानपेक्षणाच्चेति चेत्। अयमभिप्रायः—

"व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्"।

इति तैर्थिकव्यवहारात् यो लक्षणवाक्यस्य इतरभेदाद्यनुमानोन्नयन एव तात्पर्यं मन्यते, यश्च वैशेषिकादिः अनुमापकत्वेनैव शब्दप्रामाण्यमाह ताभ्यामपि तावत्प्रत्यक्षप्रसिद्धये चन्द्रत्वं तावदवश्यमनुमेयम्। तच्च विमर्शे चन्द्रस्वरूपमेव। एकव्यक्तिमात्रसमवेतजात्यभावात्। चन्द्रत्वं नानेत्यप्रतीतेः तन्निष्ठगुणाद्यात्मकत्वोक्त्यसंभवात्। जलादर्शादिप्रतिबिम्बभेदेषु अनुगतचन्द्रत्वस्य च कल्पितभेदेष्वनुवर्तमानाधिष्ठानस्यैव तत्सामान्यतया वास्तवचन्द्रमात्रत्वाच्चानुमितेः चन्द्रमात्रविषयत्वावर्जने लक्षणवाक्यमेव लक्षणया चन्द्रस्वरूपबोधकमित्येव कल्पनं वरं, नानुमितिकल्पनम्। स्वरूपाऽनुमितौ तस्यैव पक्षतया प्राक्प्रसिद्धेरावश्यकत्वात् वाक्येनैव प्रसिद्धत्वेऽति तस्मिन्नर्थात्साक्षिणैव इतरभेदादिसिद्धेः वस्तुतो नानुमानोपयोग इति॥ ननु चन्द्रपदस्य वाच्यः कश्चिदर्थोऽस्तीति सामान्यतो निश्चयेऽपि नैतद्वाक्यार्थज्ञानात् प्राक् शक्तिपरिच्छेदोऽस्ति एतदर्थज्ञानानन्तरं च अतिदेशवाक्यार्थज्ञानानन्तरं गवयादिपदानामिव उपमित्या तच्छक्तिग्रहः,साधर्म्यवैधर्म्यविशिष्टपिण्डज्ञानवत् असाधारणधर्मविशिष्टपिण्डज्ञानस्यापि उपमितिकरणत्वादित्यसाधारण्येन शक्तिग्रहस्यैवाऽभावे कथं लक्षणा? कथं वा अखण्डचन्द्रशाब्दबुद्धिः? इति चेत्। न। सिंहादिपदेष्विव अनुमानप्रवादाद्युपस्थितवैजात्यशालिन्यनिर्धारितस्वरूपे प्रागेव व्यवहारादिना गवयादिपदशक्तिग्रहसंभवेन उपमितेः शक्तिग्राहकत्वे मानाभावात्। कथमन्यथा 'गवयः कीदृशः' इति प्रश्नवाक्यस्य प्रयोगः, 'गोसदृशो गवयः' इत्याद्यतिदेशवाक्यार्थस्य वा बोधः। गवयपदवाच्ये गवयपदलक्षणाज्ञानस्यापि शक्तिग्रहोत्तरकालत्वसाम्यात्। अत एव गवय संनिकर्षोत्तरं अतिदेशवाक्ये स्मृते तेन गोसादृश्योपलक्षिताऽखण्डगवयव्यक्तेरपरोक्षः शाब्दबोधो निर्धारणात्मक उत्पद्यते। तदुत्तरं चोपमितिः। अत एव हि सदृशदर्शनोद्बुद्धसंस्कारस्मारिते गवि गवयसादृश्यज्ञानमेव उपमितिरिति भाट्टाः।

इत्थमेव हि चन्द्रपदेऽपि प्रागेव शक्तिग्रहः । इदं च व्यक्तिशक्तिवादे चन्द्रादिपदानां सावच्छिन्नां शक्तिमभ्युपगम्योक्तम् ।

वस्तुतस्तु नानाव्यक्तिषु एकशक्तेरेकमवच्छेदकमन्तरेण अतिप्रसङ्गाऽप्रसङ्गयोरवर्जनात् व्यवहितविप्रकृष्टव्यक्तिषु परिचयाऽसंभवाच्च एकशक्यतावच्छेदकाऽपेक्षायामपि चन्द्रादेकव्यक्तिमात्रनिरूपितायाः चन्द्रादिपदशक्तेः नाऽवच्छेदकापेक्षा । अतएव जातिशक्तिवादे गोत्वादौ गवादिपदानां निरवच्छिन्नामेव शक्तिमभ्युपेत्य लाघवमाहुर्भट्टादयः । नच वृद्धिह्रासयोः परिमाणभेदात् चन्द्रद्रव्यभेदेन प्रतिकल्पं चन्द्रव्यक्तिभेदेन च तदनुगतचन्द्रत्वजातिः, तस्याः शक्यतावच्छेदकत्वं चाऽऽवश्यकमिति वाच्यम् । परिमाणभेदस्य रूपरसादिभेदस्येव द्रव्यभेदकत्वे मानाऽभावात् । प्रत्यभिज्ञाविरोधाच्च । वृद्धिक्षयाद्यवस्थानुगताऽखण्डचन्द्रव्यक्तेः तस्या एव प्रतिकल्पं आविर्भावतिरोभावयोर्लाघवात् श्रुत्याद्यनुरोधाच्चाऽभ्युपगन्तुं शक्यत्वात् । यदा अवस्थोपाध्यादिप्रयुक्तविशेषेषु घटादिपदं आक्षिप्तव्यक्तिष्विव चन्द्रपदं वर्तते, तदा तदुत्तरत्वप्रत्ययेन तद्विशेषाऽनुगताऽखण्डचन्द्रव्यक्तिरेव तद्धर्मत्वेनोच्यत इति ॥ एवमाकाशसच्चिदानन्दादिपदानामपि निरवच्छिन्नैव शक्तिः । तदुत्तरत्वप्रत्ययेनापि घटचित्सवृत्त्याद्युपाधिभिन्नतत्तद्धर्मत्वेनापि सैव अखण्डाऽऽकाशादिव्यक्तिरुच्यत इति सुवचत्वात् । व्यवहाराङ्गोपहितशक्त्याऽऽक्षेपे च प्रचुरप्रयोगाऽनुसारात् आनन्दपदेन विजातीयाऽन्तःकरणवृत्त्युपहितं, सत्पदेनचोपहितमात्रं आत्मरूपमाक्षिप्यते कूपघटपरिखाद्वारादिशब्दैः तदुपहिताऽऽकाशस्वरूपमिवेत्यनादिसंस्कारादेव व्यवस्थोपपत्तेः न व्यवहारसङ्करः । नापि सच्चिदानन्दपदानां पर्यायताऽऽपत्तिः। अथवा । सदात्मादिपदानामेव निरवच्छिन्ना शक्तिः। चिदानन्दादिपदानां त्वध्यस्ततत्तद्वृत्तिवैजात्याऽवच्छिन्नचिद्वाचितेति न दोषः॥

ननु प्रश्नानुरोधाज्जिज्ञासा शुद्धचन्द्रस्वरूप एवाऽस्तु, तथापि लक्षणावाक्यात् संसृष्टबोधसामग्रीबलात्संसृष्टार्थ एव बुध्यतां, प्रत्यक्षवच्छब्दस्यापि अजिज्ञासितबोधकत्वे दोषाऽभावात् । तत्राह—नवे ति । अजिज्ञासिते=जिज्ञासाविषयभिन्ने, शाब्दधीः=पर्यवसितशाब्दबोधः नवा अस्ति, शब्दानां जिज्ञासितविषय एव पर्यवसानस्वाभाव्यादित्यर्थः । द्वारभू-

ता तु विशिष्टार्थबुद्धिः बाधिताऽर्थकसाधारिणी लक्षणावाक्यादपि भवत्येव। अस्मन्मते तात्पर्यज्ञानस्य योग्यताज्ञानस्य च सर्वत्र शाब्दबुद्धौ हेतुत्वाऽभावात्। 'वह्निना सिञ्चति' 'गङ्गायां घोषः' इत्यादिवाक्यैरपि प्रथमं भ्रमाऽऽत्मकशाब्दबुद्धेरनुभवसिद्धत्वात्। किन्तु बाधप्रतिसंधानोत्तरकालं तस्या अप्रामाण्यग्रहः, ततो लक्षणया अर्थान्तरबोधश्च। नचैवं सति शब्दस्य विरम्यव्यापाराऽऽपत्तिः। सति तात्पर्यज्ञाने तात्पर्यविषयार्थबोधमन्तरेण शब्दप्रवृत्तेरविरामात्। अन्यथा अवान्तरवाक्यार्थघटितमहावाक्यार्थबोधाऽनापत्तेः। शब्दानामवान्तरवाक्यार्थबोधेनैव विरामप्रसङ्गात्। नन्वेवं युगपद्वृत्तिद्वयविरोधः। तात्पर्यविषयार्थबोधस्य अत्र लक्षणामात्रसाध्यत्वेन तत्र वृत्तिद्वयाऽनपेक्षणात् द्वारभूतबोधस्य च लक्षणाऽनपेक्षत्वात्, एकत्र उभयाऽपेक्षायामेव तस्य दोषत्वात्। अन्यथा अर्थवादवाक्यात् वाच्यार्थाऽन्वयबोधद्वारकलाक्षणिकप्राशस्त्यशाब्दबुद्ध्यनापत्तेः। एतदेव ह्यभिप्रेत्योक्तं कल्पतरौ—"उपायस्तु वैशिष्ट्यमखण्डचन्द्रसिद्धौ सचाऽविरोधाच्चन्द्रेऽनुज्ञायते। सत्यादिवाक्ये त्वनन्तादिपदैर्बाध्यते वैशिष्ट्यम्" इति। इत्थंच परिशेषात् पर्यवसितबोधः चन्द्रमात्रगोचर इति निगमयन्नुपसंहरति—तत इति॥ ततः=उक्तयुक्तेः प्रकृष्टप्रकाशवाक्यात् चन्द्रस्वरूपमात्रस्य पर्यवसितबोधः सिद्ध इत्यर्थः॥

ननु विशिष्टज्ञानस्य कथं द्वारत्वेन उपयोगः। शुद्धचन्द्रव्यक्तेः अज्ञातज्ञापनलक्षणे विधाने उद्देश्यसमर्पकत्वेन उपयोग इति तु न शक्यं वक्तुम्। द्वयोरेकज्ञानविषयत्वमन्तरेण उद्देश्यविधेयभावस्यैवाऽयोगात्। अखण्डे ज्ञातत्वाऽज्ञातत्वघटितयोः तयोर्युगपदसंभवाच्च। एवं लक्ष्यलक्षणभावोऽपि कथं? प्रागज्ञातस्य लक्षणत्वादर्शनात्। ज्ञाते च प्रश्नजिज्ञासयोरनुपपत्तेः। ज्ञातस्य लक्षणस्य लक्ष्याऽन्यत्वे च स्वरूपलक्षणत्वप्रवादाऽनुपपत्तेरिति चेत्। शृणु। कल्पतरुकाराणां मते द्वारभूतंविशिष्टचन्द्रगोचरं लक्षणज्ञानं, फलीभूतं च चन्द्रमात्रगोचरं। पूर्वोत्पन्नविशिष्टगोचरवृत्तिस्थितिकाल एव शुद्धगोचरवृत्त्युदयाऽभ्युपगमात्। क्षणमात्रं पूर्वोत्तरवृत्त्योः संवलनेन पूर्ववृत्तिविषयस्य उद्देश्यत्वं, उत्तरवृत्तिविषयस्य च शुद्धस्य विधेयत्वं, ज्ञानभेदेऽप्युपपद्यत एव।

"यच्छब्दयोगः प्राथम्यमित्याद्युद्देशलक्षणम्"

इत्यभियुक्तोक्तरीत्या सर्वत्रैव उद्देश्यस्य प्रथमबोधस्य गुणत्वात्, विशिष्टस्य च चन्द्रस्वरूपाऽपरिच्छेदाद्बाधाच्च स्वरूपलक्षणत्वमप्यव्याहतम्। जगज्जन्माधिकारणत्वस्य तु ब्रह्मजगदन्तरिक्षत्वाद्बाधाच्च न स्वरूपलक्षणत्वमिति। एतदेवाऽभिप्रेत्योक्तं कल्पतरौ—"न हि चन्द्रद्वयमस्ति। न च लक्षणस्य विशिष्टत्वाल्लक्ष्यं विशिष्टं स्यात्" इति। वाच्यार्थनानात्वेऽप्यैक्यात्, लक्ष्यस्य चैकत्वात्। अद्वैतसिद्धिकारादीनां मतं तु पर्यवसितवाक्यविषयशुद्धचन्द्रस्यैव प्रागज्ञानोपहितचिद्विषयत्वेनोद्देश्यता, अज्ञाननिवर्तकवृत्तिविषयत्वेन विधेयतेति वा, विशिष्टाऽन्तर्भावेण प्रसिद्धत्वादुद्देश्यता, स्वरूपेणाऽपूर्वत्वाद्विधेयतेति वा एकस्याप्युभयथा व्यवहारोपपत्तिः। उद्देश्यत्वं प्राधान्यव्याप्यं, विधेयत्वं च गुणत्वव्याप्यमिति नियमश्च अप्रवृत्तप्रवर्तनरूपविधावेव, न सिद्धार्थबोधे। भूतले घट इत्यादिवाक्ये वैपरीत्यस्यापि दर्शनात्। अत एव न सांसर्गिकविषयतानिरूपकनिष्ठत्वनियमोऽपि। नीलमुत्पलमित्यादौ सति तात्पर्ये संसर्गमात्रस्यापि विधेयताप्रत्ययेन तत्र व्यभिचारात्। एवं तस्यैव विशिष्टान्तर्भावेण निश्चितत्वादसाधारणत्वाच्च लक्षणत्वं, व्यावृत्तबुद्धिग्राह्यत्वाच्च लक्ष्यत्वं, प्रकर्षप्रकाशत्वोपलक्षितत्वेन लक्षणत्वम्, चन्द्रत्वोपलक्षितत्वेन लक्ष्यत्वमिति वा बोध्यम् इति। सर्वथापि वाक्यस्य चन्द्रस्वरूपमात्रनिष्ठत्वात् न दृष्टान्ते साध्यसाधनवैकल्यमिति भावः। केचित्तु अलौकिके ब्रह्मण्यलौकिकीमेव प्रमाणप्रवृत्तिमभ्युपगम्य अखण्डाऽद्वितीयपरमार्थवस्तुनिष्ठानां अवान्तरवाक्यमहावाक्यानामेव अलौकिकमखण्डार्थत्वं विद्वदनुभवैकवेद्यमाहुः ॥ ४६ ॥

इत्थं लक्षणस्वरूपप्रमाणैः सत्यादिवाक्यानां महावाक्यानां चाऽखण्डार्थत्वं प्रसाध्य तमनुभावयितुं चतुर्ष्वपि वेदेषु प्रसिद्धमहावाक्येषु तात्पर्यमालोच्याऽभिलप्य दिदर्शयिषुरादौ आर्ग्वेदिके "प्रज्ञानंब्रह्म" इति वाक्ये दर्शयति—य इति।

मू० ॥ यः प्राग्विसृज्य भुवनं तनुमाविवेश
यः पञ्चभूत सुर मानुष तिर्यगाऽऽत्मा।

येनाऽवलोकयति वक्त्यभिमन्यते च
प्रज्ञानमात्र विभवोऽहमसौ पराऽऽत्मा ॥ ४७ ॥

तत्र सृष्टिवाक्यवर्णन प्रसङ्गेन अस्याः श्रुतेस्तात्पर्यस्य विस्तरेण वर्णितत्वात्सङ्क्षिप्य उच्यते। यः=परमात्मा, प्राक्=सर्गादिकाले भुवनं=लोकादिशरीरं विराजं, विसृज्य=स्वगतविशेषैर्नानाप्रकारं सृष्ट्वा। तनुं=कर्मज्ञानाऽधिकृत पौरुषशरीरं आविवेशेति ब्रह्मपदवाच्यं कारणोपाधिचैतन्यं तदेव प्रतिबिम्बभावेन कार्योपाधिप्रविष्टं प्रज्ञानपदवाच्यं चेति भागत्यागलक्षणायां अखण्डैक्ययोग्यौ पदयोर्वाच्यार्थौ दर्शितौ। यः=परमात्मा स्वाध्यस्तानां पञ्चभूतानां सुर मानुष तिरश्चां=देव मनुष्य पश्वादि चतुर्विधशरीराणांच, आत्मा=पारमार्थिकं स्वरूपमिति "एषब्रह्मैषइन्द्रः" इत्यादि संदर्भतात्पर्यविषयोऽपरिच्छिन्नचैतन्यात्मा प्रत्यङ्मात्र पर्यवसितो ब्रह्मपदलक्ष्यार्थो दर्शितः। येनैवाऽऽत्मना सर्वोऽपि लोकः अवलोकयति=विषयान्साक्षात्करोतीति चक्षुरुपलक्षित सर्वबाह्येन्द्रिय वृत्तिप्रतिफलनेन आत्मन एवाऽर्थप्रकाशकत्वमुक्तम्। येनैवाऽऽत्मना वक्ति=वचनादिना व्यहरतीति तस्यैव वागुपलक्षितसर्वकर्मेन्द्रिय व्यापारेषु अयस्कान्तवत्संनिधिमात्रेण निमित्ततोक्ता। येनाऽभिमन्यतइत्यन्तःकरणे प्रतिफलनादाः न्तराभिमानादिवृत्ति प्रकाशवृत्त्योर्निमित्ततोक्ता। अनेन चाऽवलोकनादिकर्तुरुपहिताच्छुद्धस्य येनेतिपृथक्कृत्य प्रदर्शनात् सर्वाऽधिष्ठानपर्यवसितः शोधितः प्रज्ञानपदलक्ष्यार्थ उक्तः। ईक्षणपूर्वक सर्वसृष्टेः इन्द्रियाऽऽदिद्वारके सर्वव्यवहारस्य चोभयत्राऽपि विमर्शे चैतन्यमात्रनिर्वाह्यत्वात् तद्दृश्यस्य च तद्व्यतिरेकेण सत्तास्फूर्त्योरसिद्ध्या तदध्यस्तत्वेन मिथ्यात्वात् परमार्थतः प्रकृष्टं सर्वोपाधिकृताऽपकर्षशून्यं स्वरूपज्ञानमेव परमानन्दरूपत्वात् सर्वनिर्वाहकत्वाच्च विभवः=ऐश्वर्यं यस्य सः प्रज्ञानमात्रविभव इति वाक्यस्य परस्परैक्यतात्पर्य तत्त्वप्रदर्शनाय शोधितयोरैक्येन निर्देशः। एवं च सति प्रज्ञानं ब्रह्मेति महावाक्यस्य अखण्डैकवस्तुमात्रपरत्वमेव सम्पन्नमित्यभिप्रेत्य वाक्यार्थं दर्शयति—अहमसौपरात्मेति। असौ=कोऽयमात्मेत्यादिना विमृष्टः प्रज्ञानैकरसत्वेन परिशेषितः अहङ्कारसाक्षी

प्रत्यक्, परात्मा="आत्मा वा इद"मित्यादिप्रकृताऽपरिच्छिन्नब्रह्मानन्दैकरसं ब्रह्मैव नाऽन्यदिति वाक्यार्थ इत्यर्थः ॥ ४७ ॥

इत्थमेव याजुर्वैदिक काण्वमाध्यंदिनोभयशाखीय बृहदारण्यकाऽन्तर्गतस्य "अहं ब्रह्मास्मि" इति महावाक्यस्यापि तात्पर्यपर्यालोचने अखण्डैक्यपरत्वमेवेति दर्शयन् सपरिकरं तदर्थमभिलप्य दर्शयति—यदिति ।

मू० ॥ यद्व्याकृतं जगदभूत्तमसाऽऽनखाग्रा-
यच प्रविष्टतनु कृत्स्नमकृत्स्नमासीत् ।
प्रेयस्तदेव परमं परमार्थतोऽहं
ब्रह्मास्मि तद्विदितवद्धि तदेव सर्वम् ॥ ४८ ॥

तत्राऽऽदौ पदयोर्वाच्यार्थौ तयोः शोधनादैक्यपर्यवसानं च दर्शयितुं "तद्धेदंतर्ह्यव्याकृतमासीत्" इत्यादि "तदेतत्प्रेयः पुत्रात्" इत्यन्त श्रुतिसंदर्भप्रवृत्तिरिति दर्शयति—यदित्यादि परमार्थत इत्यन्तेन । यत्=ब्रह्म प्रलये अव्याकृतनामरूपं जगद्बीजमद्वितीयमेव सर्गादौ प्राणिकर्मादिवशात् व्याकृतनामरूपाऽवस्थं सत् स्वयमेव जगदभूत् । अनेन जगज्जन्मादिकारणं ब्रह्मपदवाच्यार्थ इति दर्शितम् । यदेव च ब्रह्म चतुर्विधशरीरसृष्ट्यनन्तरं प्रविष्टा तनुः=उपभोगस्थानं शरीरं येन तत् तथाभूतं सत् वस्तुतःकृत्स्नं= अपरिच्छिन्नाऽऽनन्दरूपमपि अकृत्स्नं=परिच्छेददुःखाऽऽदिधर्मि आसीदित्यर्थः। अनेन "स एष इह प्रविष्ट आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितःस्याद्विश्वंभरो वा विश्वंभरकुलाये" इति वाक्यलब्धमुपाधिप्रवेशाज्जीवभावाऽऽपन्नं प्रकृतं ब्रह्मैव अहंपदस्य वाच्यार्थ इति दर्शितं । श्रुतौ क्षुरधाने=कोशे अवहितः=स्थापितः विश्वंभरः=अग्निः कुलाये=कुलायवदाश्रये काष्ठादौ ॥ नन्वविकारिणो ब्रह्मणः कथं जगज्जीवभावौ ? विकारित्वे च कथं न अनित्यता? इत्याशङ्क्याह—तमसेति। इदं च देहलीदीपन्यायेन पूर्वोत्तरान्वयि । तमोवदावरणविक्षेपशक्तिमता अज्ञानेनैव ब्रह्मणो जगज्जीव भावौ कल्पितौ , नवास्तवावित्यदोष इत्यर्थः। प्रदर्शयतेचाऽयमर्थः श्रुत्यैव, "तं न पश्यन्त्यकृत्स्नो हि सः प्राणन्नेव प्राणोनाम भवति वदन्वाक्पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनः" इति । इहोपाधौ प्रविष्टमात्मानं जना

न पश्यन्ति निरुपाधिकवास्तवरूपेण न पश्यन्तीति मूलाऽज्ञान प्रदर्शनं। तत्कुतः? हि=यस्मात् परिच्छिन्नोपाधिवशः स आत्माऽपि अकृत्स्नः= परिच्छिन्नः तद्धर्मानेव आत्मन्यभिमन्यते। यथा प्राणन्नेव प्राणोनाम भवति प्राणे प्राणनव्यापृते सति तदुपाधिकोऽपि प्राणस्तद्धर्मेण प्राणो नाम स्वयमेव भवति। अत एवह्यशनायापिपासाद्यात्मनः इति मन्यते। एवं वाचि वदन्त्यां स्वयमपि वदन्वागेव भवति। अत एव हि वाचालमूकत्वाद्यात्मनि मन्यते। एवं पश्यंश्चक्षुः सन्नान्ध्यमान्द्यकाणत्वाद्यभिमन्यते। एवं श्रोत्राऽऽत्मासन्बाधिर्याद्यभिमन्यते। एवं मन्वानो मनोभूतः तद्धर्मसङ्कल्पविकल्पशोकमोहादीन् मन्यत इत्यज्ञानमेव सर्वाऽनर्थमूलमिति श्रुतेराशयः। जीवभाववज्जगद्भावस्याऽप्यकृत्स्नताऽऽपत्तिरूपत्वात् विराडादिजीवोपाधित्वाऽविशेषाच्च तस्याप्यज्ञानमूलत्वं दर्शितमेव। अत एवोत्तरत्र "स योऽत एकैकमुपास्ते न स वेद अकृत्स्नो ह्येषः अत एकैकेन भवत्याऽऽत्मेत्येवोपासीत" इति परिच्छिन्नप्राणाद्येकैकदृष्टिनिन्दापूर्वकं आत्मैकनिष्ठायामादराऽतिशयं विधाय श्रुतिः "तदेतत्पदनीयमस्य सर्वस्य" इति सर्वपदार्थानां मध्ये आत्मन एवाऽवश्यं ज्ञेयत्वमुक्त्वा "अनेन ह्येतत्सर्वं वेद" इत्याऽऽत्मविज्ञानेनैव सर्वविज्ञानं तेनैव च कृत्स्नतां सदृष्टान्तं दर्शयति। द्वैतमात्रस्य आत्माऽज्ञानकार्यत्वे हि तज्ज्ञानस्य सकार्याऽज्ञाननिवर्तकत्वेन पूर्णाऽऽत्मभावलक्षणकृत्स्नताप्रापकत्वमुपपद्यते नान्यथेति जगज्जीवभावयोराविद्यकत्वप्रदर्शनेनैव मिथ्यात्वबोधनात् तद्विनिर्मुक्तकृत्स्नात्मैव पदयोर्लक्ष्यार्थ इति दर्शितम्। नित्यदुःखित्वेन सर्वाऽनुभवसिद्धे प्रतीचि परमानन्दैकरस ब्रह्माऽभेदाऽसंभावनावारणाय प्रेयस्तमत्वलिङ्गेन तस्यापि सुखैकरूपतां दर्शयति—प्रेय इति। देहपुत्रमित्राद्यनात्मवर्गोऽपि आत्मोपकारत्वात्प्रियः। आत्मापि प्रियः। तयोरात्मा अनन्यार्थत्वादुत्कृष्ट इति "द्विवचनविभज्योपपदे तरबीयसुना"विति ईयसुन्। "प्रियस्थिरे" इत्यादिना प्रादेशः। अनेन "तदेतत्प्रेयःपुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा"इत्येतद्वाक्यार्थसङ्ग्रहेण अहंपदार्थशोधस्य ब्रह्मपदाऽर्थपर्यन्तता दर्शिता। एवं ब्रह्मपदार्थशोधस्यापि अहंपदार्थपर्यन्ततां दर्शयितुमाह—तदेव परममिति। परमार्थतः=बाध्यसामान्यनिष्कर्षे परमं=ब्रह्मतत्त्वमपि तदेव=प्रत्यग्रूपमेव पर्य-

पर्यवसितोऽर्थः। अन्यथा "स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियं रोत्स्यति" इतिवाक्यशेषस्यानन्वयस्य सम्भवप्रसङ्गादिति भावः॥ एवं च मन्दाधिकारिणामनुग्रहेण पावकं परमात्मानमित्यभिप्रेत्योदाहरति—अहं ब्रह्मास्मीति। अत्र "ब्रह्म वा इदमग्र आसीत्तदात्मानमेवाऽवेत्" इत्यत्र ब्रह्मपदेन कार्यं ब्रह्म, ब्रह्मविद्याधिकृतब्राह्मणजातिर्वोच्यते ओदनं पचतीतिवद्भाविनीं वृत्तिमाश्रित्य। मनुष्याणामेव विशेषतो विद्याधिकारात्। "यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते" इति तेषां प्रस्तुतत्वाच्च। न तु परं ब्रह्म। तस्य नित्यमुक्तत्वेन विद्याऽनधिकारात्। अतोऽहं ब्रह्मास्मीति संसारिण एव ब्रह्मभावं प्रत्यगात्म उपासनार्थ उपदेशः तत्फलं च सर्वभावाऽवाप्तिरिति केचित्। तान्निराकुर्वन्नाह—तद्विदितवदिति। हि यस्मात् तत्-ब्रह्मैव स्वात्मानं विदितवत्=साक्षात्कृतवत् सर्व-पूर्णं तदभवदित्युक्तं। तथा च ब्रह्मैव स्वाविद्यया संसरतीव, स्वविद्यया मुच्यत इव। न संसारी नामाऽन्योऽस्तीति श्रुतेरभिप्राय इत्यर्थः। उपासनाफलत्वे हि सर्वभावाऽऽपत्तिलक्षणा मुक्तिरनित्या स्यात्। किञ्च॥ पूर्ववाक्ये "यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद् ब्रह्माऽवेत्" इति ब्रह्मभावयोग्या अधिकारिणो यद्ब्रह्मगोचरविद्यया स्वयमपि ब्रह्मभविष्याम इति मन्यन्ते, तद्ब्रह्म "किमवेत्" इति वेद्यब्रह्मकर्तृकवेदनस्य वेद्यान्तरम् अस्ति? नास्ति वा? इति विमर्शाय प्रश्ने तदुत्तरवाक्येऽपि वेद्यब्रह्मण एव परामर्शो युक्तः, नाऽपूर्वमनुष्यादेः। "तदात्मानमेवावेत्" इति वेद्यान्तरप्रतिषेधोऽपि तथैव सति स्वारसिकः स्यादिति मुधैव ब्रह्मशब्दस्याऽमुख्याऽपूर्वार्थकल्पना॥ किञ्च॥ नाऽज्ञाते ब्रह्मणि संसारिणस्ताद्रूप्यं संपादयितुं शक्यम्। ज्ञाते तु ज्ञानेनैव कृतार्थत्वात्सम्पादनवैयर्थ्यमित्यसकृदुक्तमेवेति भावः॥ ४८॥

तैत्तिरीयश्रुतौ तु प्रत्यग्ब्रह्मणोरखण्डैक्यं कण्ठोक्त्यैव प्रतिपादितमिति न सन्देहलेशोऽपीत्याह—यश्चेति।

मू०॥ यश्चाऽयमत्र पुरुषे प्रथते गुहान्त-
र्यश्चाऽप्रमेयसुखभूः सवितुश्च बिम्बे।

एकः स इत्यभिदधुः स्फुटमैक्यमेके
तद्वेदनाच्च विलयं जगतश्च तत्र ॥ ४९ ॥

एके=तैत्तिरीयाः "स यश्चाऽयं पुरुषे यश्चाऽसावादित्ये स एकः" इति महावाक्ये प्रथमेन यच्छब्देन अत्र=अस्मिन् पुरुषे=ज्ञानाऽधिकारिणि गुहान्तः=पञ्चकोशगुहामध्ये यः=प्रत्यक्चेतनधातुः प्रथते=अवस्थात्रय-साक्षी स्वतः प्रकाशते इति कोशाऽवतारणश्रुतितात्पर्यविषयीभूतः शोधितः प्रत्यगुच्यतइत्यर्थः। द्वितीयेन तु यच्छब्देन "सोऽकामयत" इत्यादिना यतो वेत्यादिना च जगत्प्रकृतिकर्तृत्वेन उपपादितः अप्रमेयसुखभूः=अपरिच्छिन्नाऽऽनन्दैकरसत्वेन मानुषाऽऽनन्दाद्युत्कर्षपरम्परोपपादनेन परिशेषितो जगन्मुख्याधिकारस्थाने सवितुः=सूर्यस्य बिम्बे च जगद्व्यापारनिर्वाहकसार्वज्ञ्यप्रयोजकाऽनावृताऽपरिच्छिन्नचैतन्यधातुः स्वत एव प्रथते=प्रकाशते स उच्यत इत्यर्थः। स इति च यच्छब्दद्वयोपात्ते प्रत्यग्ब्रह्मणी अनूद्याऽखण्डैक्यमेव एकशब्देन उच्यत इति स्फुटं=कण्ठोक्त्यैव व्यक्ततरं प्रत्यग्ब्रह्मणोरखण्डैक्यं अभिदधुः=उक्तवन्तः। उत्तरत्र ज्ञानफलवर्णनेनाप्येतदेव दृढीकृतमित्याह—तद्वेदनादिति। तस्य=उक्तरीत्या एकस्याऽऽत्मनः। वेदनात्=साक्षात्कारात्, जगतः=अन्नमयादिप्रपञ्चस्य, तत्र=तादृशे प्रत्यगात्मन्येव, विलयं=घृतकाठिन्यवन्मरीचिकोदकवद्वा विलयं तद्व्यतिरेकेण असत्त्वलक्षणं बाधं चकारात्तत्प्राप्त्या निरतिशयाऽऽनन्दावाप्तिं आत्यन्तिकाऽभयप्राप्तिश्च "स य एवंवित्। अस्माल्लोकात्प्रेत्य एतमन्नमयमात्मानमुपसङ्क्रामति" इत्यदिना "यतो वाचो निवर्तन्ते" इति श्लोकेन स्फुटमभिदधुरित्यर्थः। न हि प्रतीचो ब्रह्माऽन्यत्वे ब्रह्मोपादानकं प्रपञ्चं विद्वान् स्वस्मिन्नुपसंक्रामयितुं शक्तः, न वा निरतिशयं ब्रह्मानन्दं स्वयं भोक्तुं, न वा द्वितीयसद्भावे तादृशाऽभयं प्राप्तुम्। "द्वितीयाद्वै भयं भवति" इति श्रुत्यन्तरात् "उदरमन्तरं कुरुते अथ तस्य भयं भवति" इत्यत्रापि भेददर्शिनो भयाऽवश्यंभाव श्रवणादिति भावः॥ ४९ ॥

सामवेदप्रसिद्धस्य तत्त्वमसीति महावाक्यस्य अखण्डार्थत्वं प्राग्विस्तरेण वर्णितमेव। दर्शितैक्याऽसंभावनाशङ्कादिनिरासार्थ:तत्रत्यो नव-

इत्योऽभ्यासः प्राङ्निर्वर्णित इति दशभिः श्लोकैः तद्वर्णनेन छान्दोग्यषष्ठप्रपाठकाऽभिप्रायसर्वस्वमुद्घाटयति—आसीदिति ॥

मू०॥ आसीत्सदेव हि भवानन्नृतं निधाय
तेजोमुखं तदभिमत्य बभूव जीवः ।
देहान्तशुङ्गमवधूय विलोकय स्वं
सद्ब्रह्म तत्त्वमसि बोधसुखाऽद्वितीयम् ॥ ५० ॥

तत्र अस्मिन् श्लोके "सदेव सोम्य" इत्यादि "सदायतनाः सत्प्रतिष्ठाः" इत्यन्तसन्दर्भनिगलितार्थप्रदर्शनपूर्वकं प्रथमाऽभ्यासो वर्ण्यते । हे श्वेतकेतो ! सृष्टेः प्राक् भवान् सैन्धवखिल्यः सिन्धाविव उपाधिप्रविलयात्पारमार्थिकस्वात्मभूते सति सम्पन्नो वस्तुतः सजातीयादिभेदशून्यं सदेवाऽऽसीत्, तथाभूतो भवान्विमर्शो वाचारम्भणमात्रत्वान्मायिकत्वाच्च अनृतं=मिथ्याभूतं,तेज एव मुखम्=मूर्तेष्वाद्यं यस्य तथाभूतं श्रुत्यन्तरानुसारात् आकाशादिभूतभौतिकचतुर्विधशरीरान्तं प्रपञ्चं विधाय=त्रिवृत्करण श्रुतेरुपलक्षणत्वात् पञ्चीकरणक्रमेण सृष्ट्वा तत्=स्वसृष्टं कार्यकारण सङ्घातं अभिमत्य=अन्योन्याऽध्यासेनाऽऽत्मसात्कृत्य,जीवो बभूव। तथाचाऽनृतोपाधिप्रयुक्तो जीवभावोऽप्यनृत एव, परूपाऽऽपत्तिर्हि परमात्मनः सः। अत एव सुषुप्तौ "सता सोम्य तदा सम्पन्नो भवति स्वमपीतो भवति" इत्यादिना उपाधिप्रविलये स्वरूपे स्थितिं दर्शयतीति भावः ॥ यद्येवं तर्ह्यनर्थहेतोर्जीवभावस्य आत्यन्तिकोच्छेदे क उपायः? तत्राह— देहान्तेति। "यदग्ने रोहितं रूपम्" इत्यादिना श्रुत्योपदर्शितया कारणव्यतिरेकेण कार्याऽसत्त्वपर्यालोचनयुक्त्या "अन्नेन सोम्य शुङ्गेनाऽपो मूलमन्विच्छ, अद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ, तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ" इति वाक्यदर्शितक्रमेण देहः अन्तः=चरमोत्पन्नो यस्मिंस्तद्देहान्तं शुङ्गम्=अङ्कुरः, तत्सदृशं कार्यद्वैतजातं अवधूय=मिथ्यात्वदृष्ट्या निरस्य । परममूलभूतं स्वं=वास्तवमात्मानं विलोकय=प्रत्यग्दृष्ट्या पश्य । तत एवौपाधिकजीवभावनिवृत्तिर्भविष्यतीति भावः ॥ तथाचोक्तं वार्तिके—

"तस्मात्संभावनामात्रः संसारः प्रत्यगात्मनि ।
उपनेऽर्थे संशयश्चेत्स्यात्प्रत्यग्दृष्ट्या निरीक्ष्यताम्" ॥ इति ॥

तथादर्शने च वाक्यमेव साधनमित्यभिप्रेत्य तत्पदलक्ष्यार्थकीर्तनपूर्वकं वाक्यमुदाहरति—सद्ब्रह्म तत्त्वमसीति ॥ श्रुत्यन्तरे बोधसुखाद्वितीयत्वेन प्रसिद्धं सदेवेत्युपक्रान्तं सजातीयादिभेदशून्यं यद्ब्रह्म तत्त्वमेवाऽसि नान्य इत्यर्थः ॥ ५० ॥

ननु उक्तायां सत्सम्पत्तौ संशयः—यदि सुषुप्तिप्रलययोः सति सम्पद्यन्ते? तर्हि वयं सति सम्पन्नास्स्म इति सर्वे जानीयुः, उत्थिताश्च स्मरेयुः, नत्वेतत्प्रसिद्धम्। पुनरुत्थाने वा कोहेतुरिति?। तन्निराकरणाय "यथा सोम्य मधु मधुकृतः" इतिखण्डिकोत्थितिः। तत्तात्पर्यं सङ्गृह्णन् द्वितीयाऽभ्यासं वर्णयति—सम्पद्येति ॥

मू० ॥ सम्पद्य यत्र मधुनीव रसाः सुषुप्तौ
सौख्यैकरस्यमधिगम्य जना न विद्युः।
यत्प्रच्युताः पुनरमी बहुदुःखभाजः
सद्ब्रह्म तत्त्वमसि नाऽसि कदापि दुःखी ॥ ५१ ॥

जनाः=जननधर्माणो जीवाः। रसाः=नानाजातीयप्रसूनमकरन्दाः मधुकरैरुपनीताः मधुनि सम्पद्य=मधुभावं प्राप्य मधुरैकरस्यमुपगम्येवसुषुप्तौ सौख्यैकरस्यं प्राप्याप्यविद्याऽऽवृतत्वान्न विद्युः। प्राप्तकालतायां लिङ्। प्रातिकालमपि प्रतिसन्धानं न लभन्त इत्यर्थः॥ वक्ष्यति हि श्रुतिः—"त इमे सत्याः कामा अनृतापिधानाः" इति, "तद्यथापिहिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो नविन्देयुः। एवमेव इमास्सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्त्यऽनृतेन हि प्रत्यूढाः" इतिच। यतो नविन्द्युः अत एव वासनाकर्मादिवशात्पुनरुपाध्याऽऽविर्भावे यत्प्रच्युताः=यस्मात्सदानन्दैकरसस्वरूपात्प्रच्युताः अमी=जनाः पुनः=भूयोऽपि पूर्ववद्व्याघ्रसिंहवृकवराहदंशमशकादिदेहभावाऽध्यासात् जननमरणक्षुत्तृषारोगभयादिबहुदुःखभाजो भवन्ति। युगसहस्रकोट्यन्तरायेऽपि जन्तोः पुराभावितैर्वासनाकर्मणी विनाशानं मूलोच्छेदेन ननश्यत इतिभावः॥ अतः परमानन्दैकरसं सद्ब्रह्मैव त्वमसि। आविद्यकं तव दुःखित्वं। ऐक्यज्ञानेन अविद्यानिवृत्तौ तु न कदापि दुःखी त्वमसीत्यर्थः ॥ ५१ ॥

ननु गृहे सुप्तः स्वस्य गृहाऽवस्थितिमिव सुषुप्ता अपि सति सम्पत्तिं निद्रामूढत्वाद्यविन्दन्तु, सुप्त्वोत्थाय गृहादागच्छन्पुरुषः स्वस्य गृहादागमनमिव सत उत्थाय जागरादावागच्छन्तः 'सत आगच्छामः' इति कुतो न विजानन्तीत्याशङ्कां दृष्टान्तोपन्यासेन निराकर्तुम् "इमाः सोम्य नद्यः" इति खण्डिकोत्थानम्। तत्तात्पर्यं सङ्गृह्णन् तृतीयाभ्यासं वर्णयति—अब्धिरिति॥

मू० ॥ अब्धिर्यथा जलधरैरपनीय नीतो
नद्यादिभावमुदधित्वमतिं जहौ स्वाम्।
एवं भवानुपधिभिः खलु विस्मृतः स्वं
सद्ब्रह्म तत्त्वमसि संस्मर पूर्णभावम् ॥ ५२ ॥

यथा अब्धिः=समुद्रः सदा पूर्णस्वभावोऽपि प्राणिकर्मप्रयुक्तैर्जलधरैर्वर्षानु पीतो जलधिभावात् प्रच्याव्य देशान्तरं प्रत्यपनीय वृष्टिद्वारा नद्यादिभावं नीतः पुनः कालान्तरे समुद्रभावे पूर्वं च समुद्रोऽयमिति स्वाभाविकरूपेण ग्रहणाऽर्होऽपि कूलद्वयान्तःप्रवाहोपाधिना 'नदीयम्' इत्येव धियं धत्ते स्वां अनाद्यनन्तपूर्वोत्तरकालाऽनुवृत्तत्वात् स्वाभाविकीं उदधित्वमतिं=समुद्रताबुद्धिं जहौ। नदीभावे समुद्रत्वेनाऽव्यवहारादित्यर्थः। यथाऽयं दृष्टान्तः, अमुनैव प्रकारेण भवान् सदेव सन्, उपधिभिः=अविद्यान्तःकरणशरीरादिलक्षणैरुपाधिभिः। स्फटिकं जपाकुसुमोपरागात् स्वाभाविकं शौक्ल्यमिव, स्वं=सदाऽऽत्मभावं, विस्मृतः=नाऽनुसन्धत्त इति सत आगमनमपि न वेत्तीत्यर्थः। अत एव हि श्रुत्या बोध्यते, तद्विशुद्धं पूर्णसद्ब्रह्मैव त्वमसि स्वस्य पूर्णभावं स्वाभाविकं संस्मर= निरन्तरमनुसंधत्स्व। तदनुसन्धानादेव व्याधकुलवर्धितराजसूनोराजभावानुसंधाने व्याधभाव इव जीवभावोऽप्यपैष्यतीति भावः॥ इह यद्यपि श्रुतौ "ताः समुद्रात्समुद्रमपियन्ति स समुद्र इत्येव भवति ता यथा तत्र न विदुरियमहमस्मि" इति नदीनां समुद्रभावाऽऽपत्तौ नदीभावाऽस्मृतिर्दृष्टान्तिता, तथापि स पूर्वावस्थाऽप्रतिसन्धानमात्रे दृष्टान्तः, सर्वांशे दृष्टान्ताऽऽश्रयं तु नदीभावे समुद्रभावाऽप्रतिसंधान एवोपपद्यत इति तथैवोक्तमिति बोध्यम् ॥ ५२ ॥

ननु यदि जीवाः सत उत्थाय सत्येव सम्पद्यन्ते तर्हि जलादुत्थाय जल एव संपद्यमाना बुद्बुदतरङ्गादय इवाऽनित्यास्स्युः। देहादेरपि सत उत्थानाऽविशेषादहंबुद्धिविषयत्वाच्च जीवो देहाद्यतिरिक्तश्च न स्यात्। समुद्रवत् सतोऽपि सविकारत्वाऽऽपत्तिश्चेत्याऽऽशङ्काऽपाकरणाय "अस्य सोम्य महतो वृक्षस्य" इति खण्डिकोत्थानं। तत्तात्पर्यं संगृह्णन् चतुर्थोऽभ्यासं वर्णयति—जीवेति ॥

मू० ॥ जीवप्रहीण तरु शोषविशेष लिङ्गा-
दात्मा परोऽस्ति तनुतः सच नित्य एकः।
विद्ध्यैतदात्म्यमखिलं वितथद्वितीयं
सद्ब्रह्म तत्त्वमसि मुञ्च विभेदमोहम् ॥ ८३ ॥

जीवेन प्रहीणस्य=क्रमात् त्यक्तस्य तरोः=वृक्षस्य शोषविशेषः= शोषणवैचित्र्यं यथा एकशाखात्यागे तावन्मात्रशोषो, द्वितीयशाखात्यागे तस्या अपीति वैचित्र्यं एतस्मात् लिङ्गात्=गमकात् एकशाखात्यागे तद- तिरिक्तजीवस्य शाखान्तरादिप्रदेशे स्थितिवत्सर्ववृक्षत्यागेऽपि वृक्षशरी- राऽतिरिक्तस्य जीवस्याऽन्यत्राऽवस्थितिरनुमीयते। तथैव अस्मदादित- नुतः=शरीरादपि जीवात्मा अस्ति यथैव च शाखाभिमानत्यागे शाखा- विनाशे वा वृक्षजीवो न नश्यति। एवं सुषुप्तिमरणयोर्देहाद्यभिमानत्यागे प्रविलये च जीवः पारमार्थिकस्वरूपतो न नश्यतीति बुद्बुदादिवैषम्य- मित्यभिप्रेत्याह—सचेति॥ सः जीवश्च नित्यः=अनश्वरः। "अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे" इति च काठकश्रुतिर्भगव- द्वचनं च। यथा शाखाभेदेऽपि जीवैक्यं, एवं देहभेदेऽप्यात्मैक्यमप्यनेनैव श्रौतदृष्टान्तेन सिद्धमित्यभिप्रेत्याह—एक इति॥ न केवलमात्मान्तराऽ- भावात् अस्यैक्यम्, अपितु वस्त्वन्तराऽभावादपीत्याऽऽशयेनाह—विद्धी- ति॥ अखिलं=जगत् एष आत्मैव ऐतदात्म्यं चतुर्वेदादित्वात् स्वार्थे ष्यञ्। नैतद्व्यतिरेकेणाऽस्तीति विद्धि=जानीहि। तनुप्रतिभासमानं जग- त्कथं नास्तीत्युच्यते तत्राह — वितथेति॥ वितथं=अनृतं न्यूनसत्ताकं द्वितीयं यस्मात्तत्तथोक्तम्। नाऽप्रतिभासान्नास्तीत्युच्यते, किन्तु युक्ति-

श्रुतिभ्यां बाधितत्वादित्यर्थः। तथाच न समुद्रवत्सविकारत्वाऽऽपत्तिरिति भावः। अतो यो नित्यैकात्मा तत्सद्रूपत्वमेवासि। अहमन्योदेहीति भेदमोहं मुञ्च=त्यजेत्यर्थः ॥ ५३ ॥

नमु जगन्मिथ्यात्वेन ब्रह्मैक्यं जगतो ब्रह्मोपादानकत्वे सिद्ध्येत्। "स य एषोऽणिमा" इतिसूक्ष्मतरं हि ब्रह्मोपदिश्यते, तत्कथं स्थूलतमस्य जगत उपादानं। मृदादेः स्थूलस्यैव स्थूलघटाद्युपादानत्वदर्शनात्। कारणात्मना सत एव च कार्यस्याऽऽविर्भावः श्राव्यते। तत्कथं वा स्थूलतरस्य सूक्ष्मतमात्मना स्थितिः संभावयितुं शक्यत इत्याऽऽशङ्कां दृष्टान्तेन निराकर्तुं "न्यग्रोधफलमतआहर" इतिखण्डिकाऽवतारः। तत्तात्पर्यं संगृह्णन् पञ्चमाऽभ्यासं वर्णयति—धानान्तरिति॥

मू०॥ धानान्तरन्नततरोर्वटः पुरेव
यस्मिन्निदं जगदवस्थितमाविरासीत्।
श्रद्धावता समधिगम्यमणोरणीयः
सत् ब्रह्म तत्त्वमसि सत्यमसत्यमन्यत् ॥ ५४ ॥

नायमसंभाव्योऽर्थः। शृणु अत्रापि दृष्टान्तं—यथा धानायाः=वटबीजस्याऽतिसूक्ष्मस्य अन्तः=मध्ये यदतिसूक्ष्मतरं इन्द्रियाऽगम्यं बीजाऽवस्थानाशेऽपि अङ्कुरादिभावेनाऽनुवर्तनार्हं तदेव न्यग्रोधोपादानं तदेव हि देशकालाऽऽदिविशेषे जलादिना उपबृंहितं बीजपुटं भित्त्वाऽङ्कुरादिक्रमेण ऊर्ध्वमानेन उन्नततरः परिणाहेन च उरुः=स्थूलो वटः=न्यग्रोधतरुः आविरासीत्=प्रादुर्बभूव। एवं यस्मिन्=परमात्मनि अतिसूक्ष्मेऽपि तद्भावेनैव अवस्थितं=जगत्सर्गकाले प्राण्यदृष्टाद्युपबृंहितं आविरासीत्=सूत्रविराडादिक्रमेण प्रादुरासीत्। यद्यप्याऽऽगमार्थाऽपरिशीलिनां बाह्यविषयाऽऽसक्तबुद्धीनां अश्रद्दधानानां कुतार्किकाणां बोध्यमानोऽप्येषोऽर्थो दुर्बोधः, तथाप्याऽऽगमाऽनुसारिभिरन्तर्मुखैः श्रद्दधानैरधिकारिभिः अधिगन्तुं शक्य एवेत्यभिप्रेत्याह—श्रद्धावतेति॥ "श्रद्धत्स्वसौम्य" इति हि अत्र श्रवणाङ्गत्वेन श्रद्धा विधीयते। "श्रद्धावित्तः समाहितो भूत्वा आत्मन्येवाऽऽत्मानं पश्येत्" इति च श्रुत्यन्तरम्॥

"अश्रद्दधानाः पुरुषा धर्मस्याऽस्य परंतप।
अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि"॥

इत्यादिस्मृतिवचनं च श्रद्धाया आवश्यकत्वं दर्शयतीति श्रद्धावता एतदधिगन्तुं शक्यं नान्येनेत्यर्थः। ननु प्रमाणेनाऽर्थसिद्धौ न श्रद्धोपयोगः। चक्षुरादेः घटाद्यर्थप्रकाशने तदपेक्षाया अदर्शनादित्याऽऽशङ्क्याह—अणोरणीय इति॥ अस्तु स्थूलेष्वनियमः, शब्दैकसमधिगम्ये तु धर्मादावप्यश्रद्दधानस्य निश्चयो नोत्पद्यते। किं वाच्यं अतिसूक्ष्मे प्रत्यक्षादिविरुद्धप्राये वादिसहस्रकुतर्कशङ्काव्याकुले परमात्मवस्तुनीत्यर्थः। एवमतिसूक्ष्ममद्वितीयं च यत्सद्ब्रह्म तत्त्वमेवासि अतस्त्वमेव सत्यं, अन्यत्=त्वद्व्यतिरिक्तजगदसत्यमित्यर्थः ॥ ५४ ॥

ननु यद्यत्र कार्यकारणसङ्घाते प्रविष्टं ब्रह्म प्रत्यग्रूपमस्ति, तर्हि कुतो नोपलभ्यते। यदि च अतिसौक्ष्म्यस्वाभाव्यात्तदनुपलभ्यमेव, तर्हि तद्दर्शनसाधनोपदेशवैयर्थ्यमनिर्मोक्षश्चेत्याशङ्कापनोदाय दृष्टान्तोपन्यासपुरस्सरं तदर्शनदर्शनयोःकारणं वक्तुं "लवणमेतदुदके निधाय" इति खण्डप्रवृत्तिः। तत्तात्पर्यं सङ्गृह्णन् षष्ठाभ्यासं वर्णयति—अप्स्विति॥

**मू० ॥ अप्सु प्रलीनमिव सैन्धवखिल्यमक्ष्णा**
**पश्यन्ति यन्न करणैरपि हृद्विभातम् ।**
**विन्दन्ति यद्रसनयेव रसं गुरूक्त्या**
**सद्ब्रह्म तत्त्वमसि दृश्यमिदं तु न त्वम् ॥ ५५ ॥**

यथा पटुतरचक्षुषोऽपि पुरुषाः अप्सु=उदके प्रक्षिप्तं प्रलीनं=विलीय उदकैकरूप्यमापन्नं सैन्धवखिल्यं=लवणखण्डं अक्ष्णा=चक्षुषा करेण च विमृश्य नपश्यन्ति=नोपलभन्ते तद्यथा उद्भूतरूपस्पर्शवत्त्वात् योग्यमपि जलैक्याऽध्यासमूढदृष्ट्यो जलाद्विविच्य गृहीतुं न शक्नुवन्तीत्यर्थः। एवं हृदि=अन्तःकरणोपाधौ आवरणाऽभावात् विभातं स्वप्रकाशत्वात् स्वाध्यस्ताऽहङ्कारादिसामरस्येन सदा स्फुरदपि पराग्दृष्टयः पराक्प्रवणैः करणैः=बाह्यान्तःकरणैः न पश्यन्ति= उपाधिभ्यो विविच्य ज्ञातुं न शक्नुव-

न्तीत्यर्थः ॥ नचैतावता तस्याऽबोध एव । उपायान्तरेण बोद्धुं शक्यत्वा-
दितितद्दृष्टान्तेनाऽप्युपपादयन्दर्शयति-विन्दन्तीति॥चक्षुराद्यवेद्यमपि जल-
प्रलीनं लवणरसं रसनया=जिह्वया आस्वाद्येव यद्वात्मतत्त्वं, गुरुत्तया=अप-
रोक्षीकृतश्रुतितात्पर्यरहस्यतया सद्यः प्रतिबोधनचतुरतर श्रीगुरुवचनोप-
पत्तिभिः प्रतिबोध्यमानाः विन्दन्ति=विस्मृत कण्ठचामीकरमिव तत्काल-
मेव लभन्तइत्यर्थः । इदमेव दर्शयति श्रुतिः "आचार्यवान्पुरुषो वेद"इति
"आचार्याद्धेव विद्या विदिता साधिष्ठं प्रापत् " इति चाऽन्यत्र । तद्गुरु-
कृपैकलभ्यं ब्रह्म त्वमेवाऽसि । लवणव्यामोहोपाधिभूतं लवणैक्याऽऽपन्नं
जलं यथा न लवणं, तथा अध्यासेन सदैक्याऽऽपन्नं इदं दृश्यं=बुद्ध्यादि
द्वैतजातं तु सर्वथा त्वं न भवसीत्यर्थः ॥ ५५ ॥

संसारबन्धनिवृत्तौ सद्गुरूपदेश एवोपायः, तस्य शिष्यप्रज्ञाजिज्ञा-
से अपि सहकारिण्याविल्येतद्दृष्टान्तेन द्रढयितुं "यथा सोम्य पुरुषं गन्धा
रेभ्यः"इति खण्डस्योत्थानं। तत्तात्पर्यं स्फुटीकुर्वन् सप्तमाभ्यासं वर्णयति-
चोरैरिति ॥

मू० ॥ चोरैरिवाऽसि पुरुषो विपिने विसृष्टो
रागादिभिस्तनुषु नद्धविशुद्धदृष्टिः ।
पान्थैरिवैष गुरुणाऽसि विमुक्तबन्धः
सद्ब्रह्म तत्त्वमसि याहि सुखं स्वधाम ॥ ५६ ॥

हेसोम्य ! यथा कश्चिन्महार्हरत्नविभूषितो गन्धारदेशीयः पुरुषः
स्वगृहाऽङ्गणे प्रमत्तः सुप्तो निशि चोरैर्भूषणाऽपहाराय बध्वा देशान्तरं
दूरं नीतो भूषणान्यपहृत्य अभिनद्धाऽक्षिहस्तपादः तथैव विपिने=विषम-
कुश कण्टक व्याल वृश्चिक व्याघ्रादि सङ्कुले महारण्ये विसृष्टः=त्यक्तः स
यथा व्याल व्याघ्राद्युपघात भयाऽऽतुरः शिलाविषमकण्टकादिविलुठन-
विशीर्णसर्वाङ्गःक्षुत्तृषाऽऽतपदवानलादिना दन्दह्यमानो बन्धनमुक्तौ स्व-
देशप्राप्तौ चोपायमपश्यन् चिरमाक्रोशन् तिष्ठति । एवं त्वमपि रागादिभिः
अरिषट्कैः नद्धा=दृढं पिहिता विशुद्धा=निरवद्यादृष्टिः=अपरिच्छिन्नाऽऽ-
नन्दचित्स्वरूपदृष्टिर्यस्य तथाकृतः सन् स्वरूपात्प्रच्याव्य तनुषु=सर्वदुःख

निदानाऽविद्यादिदेहत्रयेषु चतुरशीतिलक्षजातिप्रभिन्नयोनिविशेषेषु वा प्रवेशितो विसृष्टः=अनादिकालादारभ्य विविधं सृष्टः जन्ममरणाद्यनर्थपरम्परां अविच्छेदेनाऽनुभवन् अद्याप्यविद्यादिबन्धनिवृत्तौ स्वरूपाऽवाप्तौ चोपायमपश्यन् शोचसीत्यर्थः। यथाचैष उक्तगन्धारपुरुषो दैवाच्चिरेण तत्र प्राप्तैर्दयालुभिः कैश्चित्पान्थैः विमुक्तदृष्ट्यादिबन्धः सन् तदुपदिष्टमार्गेणशनैः शनैः ग्रामाद्ग्रामान्तरं पृच्छन् गन्धारान् गत्वा स्वधाम प्राप्य पूर्ववत्तत्रसुखीभवति, एवं त्वमपि बहुतरजन्मपरम्पराऽऽर्जित सुकृतराशिपरिपाक महाभाग्योदयप्राप्तेन ब्रह्मविन्मूर्धन्येन श्रीगुरुणा=सम्यक् प्रतिबोधनोपायेन विमुक्तबन्धः=विच्छिन्नाऽज्ञानादिसर्वबन्धनः असि। यतस्त्वं परमार्थतो निष्प्रपञ्चं सद्ब्रह्मैवाऽसि, अतः स्वबुद्ध्या विचार्य मत्वा निदिध्यास्य च सुखं तासु तासु भूमिकासु विश्रम्य प्रारब्धसमाप्तौ स्वधाम=अपरिच्छिन्नाऽऽनन्दरूपमाऽऽत्मज्योतिः याहि=प्राप्नुहीत्यर्थः ॥ ५६ ॥

अविदुषो मरणे सत्सम्पत्तिक्रमः श्रुतौ प्रागुक्तः। विदुषोऽपि स एव क्रमः? उताऽन्यः? इति जिज्ञासाप्रशमनाय "पुरुषं सोम्योपतापिनम्" इति खण्डप्रवृत्तिः। तदर्थं सङ्गृह्णन् अष्टमाभ्यासं वर्णयति—सम्पद्येति॥

मू० ॥ सम्पद्य यत्र करणादिलयक्रमेण
मूढो मृतः पुनरुपैति जनिप्रबन्धम् ।
प्राज्ञस्तु वञ्चयति मृत्युमुदस्तमोहः
सद्ब्रह्म तत्त्वमसि निस्तर मृत्युबन्धम् ॥ ५७ ॥

मूढः=आत्मतत्त्वाऽनभिज्ञपुरुषः, मरणे सुषुप्ताविव करणादिलयक्रमेण=वागादिकरणानि मनसि, मनस्तु प्राणे, प्राणांस्तु परमात्मदेवतायामित्येवमुपाधिलयक्रमेण, यत्र=यस्मिन् परमात्मनि सम्पद्य मृतः= मृत्युना ग्रस्तः। प्राक्तनवासनाकर्माऽनुसारात् उत्क्रमणपूर्वकं पुनरपि जनिं=तत्रत्यकर्मभिश्च प्रकर्षेण बन्धनं चेत्यनर्थपरम्परां प्राक्दर्शित व्याघ्रादिभावलक्षणां उपैति=प्राप्नोतीति श्रुतौ प्रागुक्तमेवेत्यर्थः। एष एव हि विदुषामपि सत्सम्पत्तिपर्यन्तः क्रमः,तत्रयो विशेषः तमाह-प्राज्ञस्त्विति। प्राज्ञस्तु=तत्त्वज्ञस्तु उक्तक्रमेण सति सम्पन्नः सम्पत्तिसमकालमेव मृत्युं वञ्चयति—स्वतत्त्व-

साक्षात्कारेण बाधते । तत्कुतस्तत्राह—उदस्तमोह इति ॥ यतः प्रागेवाऽयं निर्दग्धमृत्युबीजाऽज्ञानः प्रारब्धमात्रभोगाय धृतशरीर इत्यर्थः। यत्सम्पन्नः प्राज्ञो मृत्युं पश्यति तत् सद्ब्रह्म त्वमेवाऽसि । अतो मृत्युं=तत्प्रयोजककामं कर्मादिबन्धं च निस्तर=अतिक्रमस्वेत्यर्थः ॥ ५७ ॥

ननु विदुषोऽविदुषश्च देहयात्रादिनिर्वाहक भोजनादि व्यवहारसाम्येऽपि विद्वान् तद्धेतुभिः कर्मभिर्न बध्यते, अविद्वांस्तु बध्यते इत्यत्र विशेषे कोहेतुरित्याशङ्कां दृष्टान्तेन अपाकर्तुं "पुरुषं सोम्योत हस्तगृहीतम्" इति खण्डाऽवतारः। तत्तात्पर्यं सङ्गृह्णन् नवमाभ्यासं वर्णयति—स्तेन इति ।

मू०॥ स्तेनः प्रतप्तपरशोरिव दाहबन्धा-
वाप्नोति मूढमतिरप्यनृताऽभिसंधः।
सत्याभिसंधिरथ न व्यथते यदाऽस्मा
सद्ब्रह्म तत्त्वमसि निर्णुद बन्धशङ्काम् ॥५८॥

यथा स्तेनोऽयमिति कश्चित् राजभटैर्गृहीतो 'नाहं स्तेनः' इति निह्नुवानोऽग्निदिव्येन परीक्षणाय प्रतप्तपरशुग्रहणे नियुक्तो वस्तुतःस्तेनश्चेन्नयति अनृतमेव स्वस्य अस्तेनत्वं परवञ्चनाय ब्रूते सोऽनृताऽस्तेनत्वाऽभिसंधो मोहात् गृहीतात्प्रतप्तपरशोर्निमित्तात् दाहबन्धौ ग्रहणकाले दाहं तदूर्ध्वं च स्तेनोऽयमिति निश्चयात् बन्धनं च यथा प्राप्नोति एवं मूढमतिः=आत्मतत्त्वाऽनभिज्ञोऽपि वास्तवं सच्चिदानन्दाऽद्वयब्रह्मभावं आत्मानं 'नाहंब्रह्म' इत्यपलापन् देहादावनृते आत्मत्वाऽभिमानात् अनृताऽभिसंधः मोहात्मात्मात् मृत्योः सकाशात् दाहं निरतिशयपीडां पुनर्देहादिबन्धं च प्राप्नोतीत्यर्थः। एतदेवाऽभिप्रेत्य स्मरन्ति—

"योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणाऽऽत्मापहारिणा ॥" इति ॥

अथपक्षान्तरे, स यद्यस्तेन एव वस्तुतो भवतीति पक्षे इत्यर्थः । स राजभटगृहीतपुरुषः अस्तेनोऽहमिति दृढतरसत्याभिसंधिः तप्तपरशुं गृह्णन्नपि सत्याऽभिसंधित्वादेव न व्यथते न दाहबन्धदुःखमनुभवति । प्रत्युत

राजप्रभृतिभिः अपराधप्रशमनाय वासोलङ्कारादिना संभाव्य प्रशस्यते । एवं यदात्मा=यत् सद्ब्रह्मैव आत्मा स्वात्मत्वेन निश्चितो यस्य स तत्त्ववित् परमार्थसद्वस्तुन्येव आत्मभावनिश्चयादेव सत्याऽभिसंधिः सन् प्राप्तान्मृत्योरपि न व्यथते । मायाऽभिज्ञ इव मायाव्याघ्रात् । दाहबन्धशङ्कात्वस्य कुतः? प्रत्युत ब्रह्मादिभिरपि पूज्यते । यादृशसत्याभिसंधित्वात् तत्त्ववित् मृत्योर्नव्यथते, तत् सद्ब्रह्म त्वमेवाऽसि बन्धशङ्कां=पुनर्जननमरणादिसंभावनां निर्णुद=सत्यात्मबुद्धिदाढर्येन अपनय ॥ "न जायते म्रियते वा विपश्चित्" इति श्रुत्यन्तराज्जन्मबीजनाशाच्चेति भावः ॥ ५८ ॥

श्रवणाद्यभ्यासस्य अधिकारिविशेषाणां सद्यःसाक्षात्कारफलकत्वं पितापुत्रसंवादस्य साक्षात्कारफलकत्वकीर्तनेन प्रदर्श्य प्रस्तुतमहावाक्याऽभ्यासवर्णनमुपसंहरन् ज्ञानादेव इदानीन्तनाऽधिकारिणामपि कृतकृत्यता अवश्यं भवतीत्येतद्दर्शयति—पित्रेति ॥

मू० ॥ पित्रा सुतः सुवचनैरिति बोधितः स्वं
सत्याऽद्वितीय सुख बोधघनं विजज्ञौ ।
एतद्विमृश्य विदिताऽद्वयदृक्परोऽपि
स्वाराज्यसौख्यमधिगम्य भवेत्कृतार्थः ॥५९॥

इति=प्रागुक्तरीत्या, पित्रा=आरुणिना सुतः=श्वेतकेतुः उपपत्तिदृष्टान्तादिभिः सुवचनैः=सस्नेहमधुरवाक्यैः प्रतिबोधितस्सन् स्वं=आत्मानं सत्याऽद्वितीयसुखबोधघनं = अबाधिताऽपरिच्छिन्नाऽऽनन्दबोधैकस्वभावं विजज्ञौ=तत्कालमेव करतलाऽऽमलकवत्साक्षाच्चकार ततः कृतकृत्यो जीवन्मुक्तः कालेन प्रारब्धशेषमनुभूयाऽन्ते विदेहकैवल्यं प्रापेत्येतत् गन्धारखण्डशेषे "तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ सम्पत्स्ये" इति श्रुत्या दर्शितमेवेति नेह पुनर्दर्शितमिति भावः। एतत्=वर्णितं बोधनप्रकारं विमृश्य=श्रद्धया सोत्साहं पुनःपुनः परिशील्य विदिता=साक्षात्कृता अद्वयदृक्=अद्वितीयप्रत्यक्चिदात्मा येन सः तथाविधः परः=अन्यः इदानीन्तनोऽप्यधिकारी श्वेतकेतुरिव स्वयमेव राजते स्वाराट् स्वप्रकाशः तद्भा-

यः स्वाराज्यं तदेव सौख्यं=परमपुरुषार्थः तमधिगम्य कृतार्थः=कृतकृत्यो भवेदिति छान्दोग्यषष्ठप्रपाठकस्यापि अखण्डैकवस्तुपरत्वं सिद्धमिति भावः॥

एवमाथर्वणप्रसिद्धस्य "अयमात्माब्रह्म" इति महावाक्यस्याप्यखण्डार्थकत्वं माण्डूक्योपनिषत्तात्पर्योद्घाटनेन वर्णयति—ऐक्यमिति ॥

मू० ॥ ऐक्यं प्रकल्प्य प्रणवेऽखिलस्य
पादान्विभज्य प्रविलाप्य शिष्टः ।
एकः स आत्मा जगदेऽयमात्मा
ब्रह्मेति विस्पष्टमथर्ववाण्या ॥ ६० ॥

अथर्ववाण्या=अथर्ववेदमूर्धन्यया माण्डूक्यश्रुत्या"ओमित्येतदक्षरमिदंसर्वम्" इत्युपक्रमे अखिलस्य=जडाजडस्य सर्ववस्तुनः ओङ्कारप्रतिपाद्यत्वात् ओङ्कार एवेति प्रणवे ऐक्यं प्रकल्प्य=आरोपेण सम्पाद्य तस्य वैश्वानर हिरण्यगर्भाऽव्याकृतलक्षणान् त्रीन्पादान् अकारादिमात्रात्रयक्रमेण प्रविभज्य अर्धमात्रालक्ष्यचतुर्थपादे पूर्वपादत्रयात्मकं सर्वद्वैतं प्रविलाप्य शिष्टः,"शिवमद्वैतं चतुर्थं मन्यन्ते* स आत्मा सविज्ञेयः" इत्यन्ते यः प्रत्यङ्मात्रो ज्ञेयत्वेन उपसंहृतःस एव प्रागपि "अयमात्मा ब्रह्म" इति महावाक्यस्थपदैर्लक्षयित्वा अखण्डैकरसो विस्पष्टं=असंदिग्धं जगदे=प्रत्यपादीत्यर्थः । अतश्चतुर्णामपि वेदानां प्रतीचो निष्प्रपञ्चब्रह्माऽभेदएव विश्रान्तिरिति सिद्धमिति भावः ॥ ६० ॥

इत्थं सर्वमहावाक्यानां प्रत्येकं प्रत्यग्ब्रह्माऽखण्डैक्यबोधकत्वं व्युत्पाद्य "आनन्दादयः प्रधानस्य" इत्यधिकरणोक्तन्यायेन सर्वशाखीयानि आनन्दादिभावरूपविशेषणानि, "अक्षरधियांत्ववरोधः" इत्यधिकरणोक्तन्यायेन अस्थूलत्वाद्यभावरूपविशेषणानि चोपसंहृत्य सर्वाऽवान्तरवाक्यानां स्वस्वसंनिहिततत्तन्महावाक्यैकवाक्यतायां सर्वमहावाक्यैः संभूय, प्रतिपादितं सर्वतो व्यावृत्तं सकार्याऽविद्यानिर्मूलनक्षमं सर्वश्रुतिपरमतात्पर्यविषयार्थमनुसंधानसौकर्याय पिण्डीकृत्य दर्शयन् तदवगमफलं त्रैकालि-

---

* एकोऽद्वैतशिवस्सजगत्सारः इति क्वचित्पाठान्तरं दृश्यते ॥

कद्वैतबाधरूपं अपरिच्छिन्नाऽऽनन्दात्मावाप्तिरूपं चा*भिलप्य दर्शयति—
नित्यमिति ॥

नित्यं शुद्धं विबुद्धं विकृतिविरहितं नित्यमुक्तस्वभावं
सत्यं सूक्ष्मं निरस्तद्वयमनवयवं पूर्णमानन्दरूपम् ।
प्रत्यग्ब्रह्माऽहमस्मि स्वरसदृशि रवौ ध्वान्तवद्विश्वमेत
न्नासी**दास्ते भविष्यत्यपि मयि सुखसज्ज्योतिरात्मन्यसङ्गे॥

नित्यं=उत्पत्तिनाशरहितं शुद्धं=निर्दोषं विबुद्धं=स्वप्रकाशज्ञानस्वरूपं विकृतिविरहितं=षड्भावविकारशून्यं नित्यमुक्तस्वभावं=कालत्रयेऽपि बन्धसंभावनाशून्यं सत्यं=अबाध्यं सूक्ष्मं=अस्थूलादिधर्मकं निरस्तद्वयं=अद्वितीयं अनवयवं=स्वगतभेदशून्यं पूर्णं=सबाह्याभ्यन्तरव्यापि आनन्दरूपं=सुखैकस्वभावं प्रत्यक्=अन्तःकरणादिसाक्षि यदात्मतत्त्वं, तदेव ब्रह्म अहमस्मीति सर्वश्रुतिनिर्गलितार्थ इत्यर्थः । अत्र च "नित्यं विभुं सर्वगतं सुसूक्ष्मम्" "अस्नाविरं शुद्धमपापविद्धम्" "सत्यं ज्ञानमनन्तं ब्रह्म" "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" "गुहाशयं निष्कलमद्वितीयम्" "नेह नानास्ति किञ्चन" इत्यादिवाक्यानि सर्वमहावाक्यानि च यथाप्रज्ञमनुसंधेयानि । यतोऽहमीदृशं ब्रह्मैवाऽस्मि अतः स्वरसदृशि=सहजप्रकाशे रवौ=सूर्ये ध्वान्तेन तुल्यं ध्वान्तवत् एतत्=दृश्यं विश्वं=जगत् सुखसज्ज्योतिरात्मनि=आनन्दैकरसपरमार्थबोधैकस्वभावे असङ्गे=अवस्थात्रयसम्बन्धशून्ये मयि पूर्वमपि नासीत् । इदानीमपि नास्ते अग्रेऽपि न भविष्यतीति सदैव निष्प्रपञ्चसच्चिदानन्दस्वरूपोऽहमित्यर्थः । तथाच श्रुतिः—

"न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥" इति ॥

"तदेतत् ब्रह्माऽपूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः" इति च । "ज्ञाते द्वैतं न विद्यते" इति च ॥ श्रीगौडपादीये वार्तिकेऽप्युक्तम्—

---

* अत्र "फलम्" इति क्वचिदधिकपाठो दृश्यते ॥

** "नासीदस्ति भविष्यत्यपि" इति क्वचित्पाठः ॥

"तत्त्वमस्यादिवाक्योत्थसम्यग्धीजन्ममात्रतः।
अविद्या सह कार्येण नासीदस्ति भविष्यति" ॥ इति ॥

तस्मादद्वमेव परमपुरुषार्थलाभ इति भावः ॥ ६१ ॥

नन्वस्त्वखण्डाऽऽकारवृत्त्या मूलाऽज्ञाननाशे तत्कार्यसर्वप्रपञ्चबाधः तथापि नाद्वितीयवस्तुपरिशेषः, ब्रह्माकारवृत्तेर्नाशकाऽभावेन परिशेषे तस्यैव सद्वितीयताया दुर्वारत्वात्। यदि च तद्बाधाय वृत्त्यन्तरमपेक्ष्येत तर्हि तस्या एव परिशेषः स्यात्। अन्याऽन्यवृत्त्यभ्युपगमे त्वनवस्था स्यादिति सद्वितीयपरिशेषो दुर्वार इत्याशङ्कामपाकुर्वन्नाह—इत्थमिति ॥

**इत्थं वाक्याद्विमृष्टादरणिविमथनाद्वह्निकीलेव सद्यः**
**संभूताऽखण्डवृत्तिस्तृणमिव निखिलद्वैतजालं समोहम्।**
**दग्ध्वा निर्वाणसंज्ञे निरतिशयसुखे नित्यसिद्धाऽऽत्मतत्त्वे**
**सद्यो याति प्रणाशं कतकरज इवोदस्य पङ्कं जलस्य ॥६२॥**

इत्थं=वर्णितप्रकारेण विमृष्टात्=सम्यग्विचार्य निर्धारिततात्पर्यकात् ऐकमत्येन निश्चितात् सर्ववेदान्तवाक्यात् संभूताऽखण्डब्रह्माकारा साक्षात्कारवृत्तिः अरण्योर्विमथनात्=सङ्घर्षात् संभूता वह्नेः कीला=ज्वाला स्वोपस्कन्दितं शुष्कतृणमिव समोहं=मूलाऽज्ञानसहितं निखिलद्वैतजालं=समस्त द्वैतवागुराम्। सद्यः=स्वोत्पत्तिकालमेव दग्ध्वा=भस्मीकृत्य परिशिष्टे निर्वाणसंज्ञे=कैवल्याख्ये नित्यसिद्धे=अनागन्तुके आत्मतत्त्वे सद्यः=सहसैव प्रणाशं=अत्यन्ताऽदर्शनं दग्धदाह्यज्वालावदेव प्रशममित्यर्थः। प्रयाति=गच्छति। स्वनिवर्त्येन सह निवृत्तौ दृष्टान्तान्तरमाह— कतकेति ॥ यथा कतकबीजस्य रजः=रेणुः पङ्किले जले क्षिप्तः जलस्य पङ्कं उदस्य=निराकृत्य स्वयमपि सह पङ्केन निवर्तते तद्वदित्यर्थः। "स्वाध्यायोऽध्येतव्यः" इति विधेः स्वपरविधिप्रवर्तकत्ववद्भेदस्य स्वपरभेदकत्ववदविद्यायाः स्वपरनिर्वाहकत्ववत् चैतन्यस्य स्वपरप्रकाशत्ववत् "नेहनानास्ति" इति वाक्यस्य स्वपर साधारण सर्वद्वैतनिषेधकत्ववच्च वृत्तेरपि स्वपरसाधारण सर्वद्वैतबाधकत्वाऽभ्युपगमे दोषाभावात्। चित्संवलितरूपेण बाधकता जडमात्रांशेन

बाध्यतेति भेदसंभवाच्च। नचैवं वृत्तेः स्वबाधकत्वे स्वात्मनि क्रियाविरोधः उत्पत्तिध्वंसयौगपद्याऽऽपत्तिश्चेति वाच्यम्। मूलाऽज्ञानबाधस्यैव सर्वद्वैत बाधाऽऽत्मकत्वाऽभ्युपगमेन आद्यदोषाऽभावात्। बाधस्य त्रैकालिकत्वेन ध्वंसवैलक्षण्याऽभ्युगमाच्च द्वितीयदोषस्याप्यभावादिति। इदं च बोधेद्धा बुद्धिरेव अज्ञाननिवर्तिकेति मतमाश्रित्योक्तम्। यदि च तृणादिसंधुक्षितो वह्निरिव बुद्धीद्धो बोध एव सर्वद्वैतबाधक इति सिद्धान्तः पर्यालोच्यते तदा तु न कश्चिद्दोषः। एतन्मतभेदसूचनायैव हि श्लोके दृष्टान्तद्वयोपादानमिति भावः॥ ६२॥

एतावदेव सर्वश्रुतीनां परमरहस्यम्, इयमेवात्यन्तिकाऽनर्थनिवृत्ति-परमानन्दाऽवाप्तिलक्षण परमपुरुषार्थलाभात् कृतकृत्यता नाऽतःपरं किञ्चि-दन्वेष्टव्यं ज्ञातव्यं प्राप्तव्यं वाऽवशिष्यत इति प्रदर्शनाय पुनर्बन्धसंभावना-वारणाय च वाक्यार्थाऽपरोक्षज्ञानमेव उत्कर्षकाष्ठायां व्यवस्थापयति—एषेति॥

**एषाऽनादि त्रितापज्वर विषमभवव्याधिसम्यक्चिकित्सा**
**ह्येषा स्वाराज्यसम्पन्निरवधिपरमानन्दसंदोहदोग्ध्री।**
**भस्मीभूतं तथाऽस्यां प्रभवति न पुनः कर्मबीजं प्ररोढुं**
**सन्देहग्रन्थिभेदावपि च निगदितावेतदाऽऽसादनेन॥६३॥**

एषा=दर्शिताऽखण्डाकाराऽपरोक्षवृत्तिरेव अनादेःआध्यात्मिकाऽऽधि-दैविकाऽऽधिभौतिकदुःखलक्षणैः त्रिभिस्तापज्वरैः=वातादित्रयप्रकोपप्रभ-वसांनिपातिकज्वरस्येव विषमस्य=दुश्चिकित्स्यस्य भवव्याधेः=संसाररोग-स्य सम्यक्चिकित्सा=मूलोच्छेदिनी प्रतिक्रिया अनेन आत्यन्तिकसर्वाऽ-नर्थनिवृत्तिलक्षणं ज्ञानफलमुक्तम्॥ एषैव=उक्ताऽवगतिः स्वयमेव राजत इति स्वराट्, स्वः स्वर्गः तस्य राजा च तद्भावः स्वाराज्यं सैव स-म्पत्=चामरदशा स्वर्गराज्यसम्पदिव इयं विवेकिदशा निरतिशयाऽऽ(१)नन्दसम्पदित्यर्थः। वस्तुतस्तु स्वर्गराज्यसम्पत् जलपरमाणुरिव महोद-धेर्मोक्षसम्पदः कोट्यंशेनापि न समानेत्यभिप्रेत्याह—निरवधीति। निरव-

(१) "निरतिशयाऽतिशयाऽऽनन्दसंपदित्यर्थः" इति क्वचिदधिकपाठो दृश्यते।

धेः= त्रिविधपरिच्छेदशून्यस्य परमस्य= सर्वोत्कृष्टहैरण्यगर्भाऽऽनन्दादपि याङ्मनसागोचरनिरतिशयोत्कर्षशालिनो ब्रह्मस्वभावाऽऽनन्दस्य दोग्ध्री= प्रपूरयित्री। अज्ञानाद्युपाधिप्रतिबन्धनिरासेनाऽऽविर्भावयित्रीत्यर्थः॥

ननु दवाग्निप्लुष्टतृणादेर्वर्षासु पुनःप्ररोहवत् तत्वज्ञानाऽपनीतस्यापि द्वैतबन्धस्य कालान्तरे पुनरुद्भवः स्यादित्याशङ्क्याह—भस्मीभूतमिति। अस्यां=आत्माऽवगतिज्वालायां भस्मीभूतं=प्रारब्धांशमात्रपरिशेषात्,अधिष्ठानमात्रपरिशेषाद्वा भस्मेव सम्पन्नं कर्मबीजं पुनरपि प्ररोढुं=लिङ्गाद्यङ्कुरानारब्धुं न प्रभवति=न समर्थं भवति। "सर्वपाप्मानं तरति"। "तद्यथा इषीकातूलमग्नौ प्रोतं प्रदूयेतैवंहैवंविदः सर्वेपाप्मानः प्रदूयन्ते" "एतं ह वाव न तपति किमहं साधु नाकरवं किमहं पापमकरवमिति"। "तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवंहैवंविदि पापं कर्म नश्लिष्यते" इत्यादि श्रुतिभिः,

"यथैधांसि समिद्धोऽग्निः भस्मसात्कुरुतेऽर्जुन।
ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा"॥

इत्यादि स्मृतिभिः, "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ" इति सूत्रात् "न स पुनरावर्तते न सपुनरावर्तते" इत्यसकृत्पुनरावृत्तिश्रुतिलिङ्गाद्य बाधितस्य कर्मबीजस्य न पुनःप्ररोहसंभावनेत्यर्थः। स्वप्नदृष्टपुरुषकुलगोत्रादिसंशयस्य प्रबोधेनेव आत्मज्ञानेन सन्देग्धुः सन्देहास्य साधारणादिधर्मस्य कोटीनां सन्देहस्य च बाधितत्वादेव तत्वज्ञस्य सर्वसंशयनिवृत्ते रर्थसिद्धत्वात् न जिज्ञास्यान्तरमप्यवशिष्यत इत्याह—सन्देहेति। सन्देहः= नानाविधः आत्मतत्वविषये लौकिक वैदिकविषयान्तरे च संशयः। स च, सर्वसंशयादिविकल्पनामूलभूतहृदयग्रन्थिः अन्तःकरणतादात्म्याऽध्यासलक्षणा सा च सन्देहग्रन्थी"अजाविभ्यांध्यन्"इति निर्देशात् द्वन्द्वेपूर्वनिपातस्याऽनित्यता ज्ञायते। तेन ग्रन्थिशब्दस्य परनिपातः। तयोर्भेदौ=आत्यन्तिकनिवृत्ती अपि एतदासादनेन=आत्मसाक्षात्कारप्राप्त्यैव निगदितौ श्रुत्येति शेषः। तथाच श्रुतिः—

"भिद्यते हृदयग्रन्थिः छिद्यन्ते सर्वसंशयाः।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे"॥ इति

"गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति" इतिच ।

तस्मादत्यर्हितसतमं ब्राह्मणादिजन्म प्राप्य सर्वप्रयत्नैरात्मज्ञानमेव सर्वैस्सम्पादनीयम्, नविषयासक्तैः अत्यन्तकर्मजडैर्वा भूत्वा सर्वोत्तमं जन्म शुनकसूकरादिजन्मवद्व्यर्थं नेयमिति भावः ॥

"अपोद्य निखिलं द्वैतं पदार्थपरिशोधतः ।
सच्चिदानन्दपूर्णात्मा वाक्यार्थोऽत्र निदर्शितः ॥"



इति श्रीमत्परमहंस परिव्राजकाऽऽचार्य श्रीरामचन्द्र सरस्वती
पूज्यपाद शिष्येण श्रीसर्वज्ञसरस्वती पूज्यपाद प्रशिष्येण
**गङ्गाधर सरस्वत्याख्य भिक्षुणा** विरचितायाम्
स्वाराज्यसिद्धि व्याख्यायाम्
कैवल्यकल्पद्रुमाख्यायाम् ।
अपवादप्रकरणम्

**सम्पूर्णम् ॥**

---

## ॥ कैवल्यप्रकरणम् ॥

ओं श्रीगणेशाय नमः॥ नमश्शिवाय ॥



यो धत्ते निजमाययैव भुवनाकारं विकारोज्झितो
यस्याहुः करुणाकटाक्षविभवौ स्वर्गापवर्गाभिधौ ।
प्रत्यग्बोधसुखाद्वयं हृदि सदा पश्यन्ति यं योगिनः
तस्मै शैलसुताञ्चितार्द्धवपुषे शश्वन्नमस्तेजसे ॥ १ ॥

करुणामृतकल्लोलं शरणागतवत्सलम् ।
आनन्दवारिधिं विष्णुमाश्रये श्रीनिकेतनम् ॥ २॥

अध्यारोपापवादाभ्यां निष्प्रपञ्चं ब्रह्म परिशोध्य तस्य प्रत्यगभेदलक्षणो महावाक्यार्थः सपरिकरं निरूपितः। अथेदानीं शाब्दाऽऽपरोक्ष्यसमर्थनपूर्वकं मन्दमध्यमतराधिकारिणामपि चित्तनिग्रहद्वारा ज्ञानावाप्तिं जीवन्मुक्तिचर्यां विदेहकैवल्यावाप्तिं वर्णयितुमिदमारभ्यते। ननु वाक्यार्थज्ञानादेव विचारजनितादपरोक्षात्परमपुरुषार्थसिद्धिरित्ययुक्तम्। शब्दस्य परोक्षज्ञान मात्रजननस्वाभाव्यात्। लोके शब्दजन्यापरोक्षज्ञानाऽप्रसिद्धेश्च। किंच। यदि वाक्यादेव साक्षात्कारस्तर्हि श्रवणानन्तरं मनननिदिध्यासनविधानवैयर्थ्यम्। "ततस्तु तं पश्यते निष्कलं ध्यायमानः" "मनसैवाऽनुद्रष्टव्यम्" इत्यादिश्रुतयश्च सावधारणं मनस एवाऽपरोक्षकरणत्वं दर्शयन्तीति कथं शाब्दाऽऽपरोक्ष्यमित्याशङ्क्याह—अपरोक्षेति ॥

मू० ॥ अपरोक्षवस्तुविषयेति शब्दजा
प्यपरोक्षतां न विजहात्यखण्डधीः ।
निपुणं निशम्य दशमस्त्वमित्यदो
वचनं नहि स्वमुपलब्धुमिच्छति ॥ १ ॥

अखण्डधीः=दर्शिताऽखण्डवाक्यार्थबुद्धिः, शब्दजा=वाक्यजन्यापि सती, अपरोक्षवस्तुविषया "यत्साक्षादपरोक्षाद्ब्रह्म" "अत्रायं पुरुषः स्वयं ज्योतिर्भवति" इत्यादिश्रुतेः प्रतीचि पारोक्ष्याऽप्रसिद्धेः सदा स्वापरोक्ष्यप्रसिद्धेश्च नित्यापरोक्षाऽऽत्मवस्तुमात्रविषयेति हेतोः विषयानुरोधात्प्राप्तामपरोक्षतां न विजहाति=न त्यजति। प्रमाणानां विषयपारतन्त्र्यस्वाभाव्याद्विषयस्यापरोक्ष्ये तद्बुद्धेः पारोक्ष्यस्योक्तिसंभवाभावादित्यर्थः। अप्रसिद्धिं वारयन्दृष्टान्तसद्भावमर्थान्तरन्यासेन दर्शयति–निपुणमिति॥ यथा किल गुरुणा दश ऋजुबुद्धयः शिष्याः ग्रामान्तरं प्रति कार्यविशेषे प्रेषिता अन्तरा नदीमुत्तेरुः, ततस्सर्वे उत्तीर्णास्स्मः उत कश्चिन्नः प्रवाहेणाऽपवाहित इति परिज्ञानाय तेष्वेकैकः स्वेतरान्नव पुरुषान्गणयित्वा स्वात्मगणने व्यामूढो विषसाद, इत्थं सर्वेऽपि दशमं प्रवाहापनीतं मत्वा शोकाकुलास्तमन्वेषयन्तो नदीस्रोतोऽनुगच्छन्तः तत्र कंश्चिदन्यपुरुषं दृष्ट्वा पप्रच्छुः—"त्वं किमस्माकं दशमं नदीस्रोतसा प्रवाह्यमाणमद्राक्षीः" इति॥ स एतान्गणयित्वोवाच "दशैव यूयं स्थ न कश्चिदपवाहितः" इति॥ तच्छ्रुत्वा तेष्वेकः पूर्ववन्नवगणयित्वा पप्रच्छ—"को दशमः" इति। स प्रत्याह—"दशमस्त्वमसि" इति। स दशमस्त्वमित्यदः=एतद्वचनं, निपुणम्=अवहितं यथा स्यात्तथा निशम्य=श्रुत्वा प्रत्यक्षमेव दशमं स्वात्मानं ज्ञात्वा विशोक आसीत्, एवमन्येऽपि। तत्र शब्दादपरोक्षज्ञानं प्रसिद्धमित्यर्थः। ननु तत्रापि दशमोऽहमिति परोक्षज्ञानमेव जन्यतां, तत्राह—नहीति॥ न तत्परोक्षं, हि=यस्मात्तद्दशज्ञानानन्तरं स्वम्=दशममात्मानं, उपलब्धुं=साक्षात्कर्तुं नेच्छति, तस्य परोक्षत्वे दशमदिदृक्षा नोच्छिद्येत। इष्टविषये परोक्षज्ञानस्य प्रत्युत दिदृक्षाहेतुत्वादिति भावः। नच शाब्दपरोक्षज्ञानाद्व्यवहितोत्तरक्षणोत्पन्नात् "दशमोऽहम्" इति स्वसाक्षात्कारादेव दिदृक्षानिवृत्तिः, क्षणविलंबस्य दुर्लक्ष्यत्वाच्च तात्कालिकत्वभ्रम इति वाच्यम्। अननुभूयमानपरोक्षज्ञानकल्पने गौरवान्मानाभावात् 'असौ मामेव दशममदर्शयत्, अस्य वाक्यान्मे मोहोऽपगतः' इति तदनुभवव्यवहारविरोधाच्च। नच क्लृप्तेन्द्रियव्यतिरेकेण शब्दस्यापि साक्षात्कारकरणत्वकल्पने गौरवम्।

परोक्षज्ञानरूपधर्मिकल्पनातः शब्दस्य करणत्वरूपधर्मकल्पनाया लघीयस्त्वात्, बहूनां ज्ञानानां भ्रान्तत्वकल्पनागौरवाधिक्याच्च ॥

नच शब्दस्य परोक्षज्ञानमात्रजनकत्वनियमोऽस्ति । अनुमित्यादिसाधारणपारोक्ष्यस्य शब्दजन्यताऽनवच्छेदकत्वात्, अयोग्याऽसन्निकृष्टविषयकज्ञानस्यैव पारोक्ष्यदर्शनेन विषयपारोक्ष्यस्यैव ज्ञाने पारोक्ष्यप्रयोजकत्वेन तस्य करणानियम्यत्वाच्च । विषयपारोक्ष्याऽऽपरोक्ष्ययोस्तु आवरणाऽनावरणे एव प्रयोजिके, अनावरणं तु आवरणध्वंसः, तदत्यन्ताभावश्च । बाह्यघटादौ सन्निकर्षादिसामग्रीप्रयोज्य आद्यः । साक्षिणि तदध्यस्तान्तःकरणतद्धर्मादौ तु द्वितीय इति बोध्यम् । नच प्रत्यक्षे चक्षुरादिषट्कस्य करणत्वं क्लृप्तं, तदतिरेकेण शब्दस्यापि करणत्वकल्पने प्रत्यक्षप्रमाणवृद्ध्यापत्तिरित्यन्यत्र क्लृप्तं पारोक्ष्यमेव सन्निकृष्टशाब्दबुद्धावपि स्वीक्रियते, भ्रान्तिनिवृत्त्यनुभवनिर्वाहाय च तदव्यवहितोत्तरक्षणे मानसादिप्रत्यक्षं शाब्दबुद्धिसमानाकारं कल्प्यते, मनस आत्मसाक्षात्कारकरणत्वस्य क्लृप्तत्वादिति वाच्यम् । एवं सति प्रमाणवृद्धिभीरुभिरात्मतत्समवेतसुखादिसाक्षात्कारे करणत्वेन क्लृप्तस्य मनस एव लाघवाद्बाह्यसर्ववस्तुप्रत्यक्षेऽपि चक्षुरादिघटितमनस्संयुक्तसंयोगादिसन्निकर्षान्तरकल्पनेनाऽपि लाघवात्करणत्वस्याभ्युपगन्तव्यत्वापत्तेः । चक्षुषा पश्यामीत्यादिप्रतीतेः द्वारत्वेन चक्षुरुपयोगमात्रेणापि निर्वोढुं शक्यत्वाच्चक्षुरादीनां प्रत्यक्षप्रमाणत्वापलापापत्तेः । संयुक्तविशेषणताद्यनेकसंनिकर्षानभ्युपेत्य अनुपलब्धिप्रमाणं प्रत्याचक्षाणस्य तव संयुक्तसंयोगाख्यैकसन्निकर्षाभ्युपगमेन प्रमाणपञ्चकप्रत्याख्याने कालज्ञा । किंच ॥ प्रत्यभिज्ञाविषयतत्तादौ चन्दनसौरभादौ च साक्षात्करोमीत्यनुव्यवसायानर्हं प्रत्यक्षतोक्तेस्तव पारिभाषिकतया पारोक्ष्यार्जनात्, तत्रैव चक्षुरादीनां परोक्षज्ञानजनकत्वस्य त्वन्मते क्लृप्ततया घटाद्यपि तादृशपरोक्षज्ञानजनकत्वाऽऽपत्तिः । साक्षात्करोमीति प्रत्ययस्य च तदव्यवहितोत्तरक्षणोत्पन्न घटमानस साक्षात्कारगोचरत्वकल्पनापत्तिः । साधकबाधकानां शाब्दापरोक्षसाधारणत्वात् । अनुभवापलापस्य च तुल्यत्वादिति ॥ शब्दादेवाऽपरोक्षसाक्षात्कारे वृत्तेऽपि श्रवणानन्तरं मनननिदिध्यासनयोर्विधानं तु प्रमेयाऽसंभावनाद्यप्रतिबद्धसाक्षात्कारजननाय । प्रति-

बद्धसाक्षात्कारस्याऽविद्यानिवर्तनाऽक्षमत्वात्। यथाहुः संक्षेपशारीरकाचार्याः—

"पुरुषापराधमलिना धिषणा निरवद्यचक्षुरुदिताऽपि यथा।
न फलाय भर्छुविषया भवति श्रुतिसंभवापि च तथात्मनि धीः॥" इति।

यथा कश्चिद्राजा भर्छुनामानं स्वमित्रं दैवाद्वियुक्तं चिरेण वटवृक्षे दृष्ट्वाऽपि ब्रह्मराक्षसोऽयमिति मन्त्रिभिः प्रतार्यमाणो न श्रद्दधे इति नतद्विषयाऽज्ञानं विपरीतबोधप्रतिबद्धं राज्ञो निवृत्तं तथा महावाक्यश्रुतिजन्याप्यापातदर्शिनामात्मसाक्षात्कारधीरिति तदर्थः॥ १॥

ननु यथा तत्तत्पुरुषसुखदुःखादेस्तं तं प्रत्यापरोक्ष्येऽपि अन्येन शब्दलिङ्गादिना गृह्यमाणस्य पारोक्ष्यं तथा स्वतोऽपरोक्षस्याप्यात्मनः शब्दलिङ्गादिगम्यतायां पारोक्ष्यमप्यस्तु। क्वचित्परोक्षं ज्ञानं जनयतश्च प्रमाणस्य नापरोक्षज्ञानजनकत्वं दृष्टम्। उपनीतभानस्य पारोक्ष्यानभ्युपगमाच्च न चक्षुरादौ व्यभिचारः। 'सौरभं चक्षुषा साक्षात्करोमि' इत्यननुव्यसायस्तु सौरभस्य न पारोक्ष्यात्। किन्तु लौकिकसन्निकर्षदोषविशेषान्यतरप्रयोज्यलौकिकविषयताशून्यत्वादेवेत्याशंकामपाकुर्वन्नपरोक्षवस्तुनि शब्दस्य पारोक्ष्यसंपादनाऽसामर्थ्यं दृष्टान्तेनोपपादयति—नचेति॥

**मू०॥ नच शब्दजन्यमतिमात्रतः स्वतो**
**प्यपरोक्षवस्तु भजते परोक्षताम्।**
**न खलु प्रदीपतरणिप्रकाशयोः**
**प्रतिभासतोऽस्ति विषये पृथग्विधा॥ २॥**

स्वतः=अन्यनिरपेक्षतया मुख्यम्, अपरोक्षवस्तु=नित्यापरोक्षमात्मवस्तु, शब्दजन्यमतिमात्रतः=शाब्दधीविषयत्वमात्राऽपराधेन परोक्षतां भजत इत्येतच्च न युक्तमित्यर्थः। स्वत इत्यनेन चेदं ध्वनितम्—यत्खलु कादाचित्कानावृतचित्संवलनोपाधिना गौणमपरोक्षं विशेषदर्शनोत्तरप्रत्यक्षवेद्यं स्थाणुपुरुषादि तदपि परोक्षज्ञानमात्रे करणत्वेन क्लृप्तविशेषदर्शनरूपलिङ्गपरामर्शजन्यत्वाऽपराधेन परोक्षतां न भजते, किं वाच्यं मुख्याऽपरोक्षमात्मवस्तु पारोक्ष्यं न भजत इति। तथाच वह्न्याद्यनुमितिरूपपरोक्षज्ञानका

रणस्याऽपि परामर्शस्य सन्निकृष्टविषये आपरोक्ष्यजनकत्वस्य तार्किकैर-भ्युपगमान्न त्वदुक्तनियमे मानमस्ति। यत्तु परकीयसुखादेः पारोक्ष्यं तत्तु तस्य परप्रत्ययोग्यत्वात्, न तु शाब्दधीगोचरत्वात्। स्वकीयसुखादौ तत्काले तथात्वेऽपि पारोक्ष्याऽदर्शनात्। कालान्तरे पारोक्ष्यं तु सुखादेः स्वोपादाने तिरोधानादेवेति भावः। नच मानवैचित्र्येण वस्तुनि वैचित्र्यमाधीयते। वस्तुयाथात्म्यमात्रव्यंजकेषु वैचित्र्याधायकत्वादर्शनादित्यभिप्रेत्याह—नखल्विति॥ प्रदीपस्य प्रकाशे तरणेः सूर्यस्य प्रकाशे च घटादिवस्तुनः प्रतिभासतः=प्रकाशतः पृथग्विधा=प्रदीपेनप्रकाश्यमानो घटो नीलश्च स एव तरणिना प्रकाश्यमानःसन्घटो रक्तश्चेति प्रकाशकभेदाद्वस्तुनि वैचित्र्यं न खल्वस्ति। तद्वत्प्रमाणानामपि वस्तुयाथात्म्यव्यंजकत्वेन पारोक्ष्याऽऽपरोक्ष्यलक्षणवैचित्र्याधायकत्वाऽसंभवादित्यर्थः। नचाऽऽपरोक्ष्यपारोक्ष्यातिरेकेण लौकिकाऽलौकिकविषयत्वे केनचिद्विषयेऽनुभूयेते, येन लौकिकाऽलौकिकसन्निकर्षभेदौ तद्धेतू कल्प्येयातामित्यघ्राणजं सौरभज्ञानं परोक्षमेवेति भावः ॥ २ ॥

ननु प्रकाशकवैचित्र्यादपि क्वचित्प्रकाश्ये वैचित्र्यं दृश्यते। यथा बालसूर्यमरीचिप्रकाशिताऽभ्रखण्डस्य रक्तता, प्रौढातपप्रकाशितस्य तु शुभ्रतेति। दृष्टश्च रक्तपटस्य चन्द्रिकायां नैल्यप्रतिभासः। विशेषदर्शनजन्ये भ्रमसंशयोत्तरप्रत्यक्षे समाने विषये प्रत्यक्षसामग्रीप्राबल्येनाऽनुमितिप्रतिबंधादेव न पारोक्ष्यप्रसक्तिरित्याशंक्याऽगृह्यमाणवैचित्र्ये मानाभावेन तस्याऽपि भानस्याऽवश्यवाच्यत्वादपरोक्षैकस्वभावे च वस्तुनि आरोपमन्तरेण पारोक्ष्यप्रतिभासायोगादारोपितपारोक्ष्येणाऽऽत्मावगाहिन्या वाक्यार्थबुद्धेरप्रमात्वाऽवश्यंभावे वाक्यस्याप्यप्रामाण्यापत्तिरित्यभिप्रेत्याह—अपरोक्षेति॥

मू०॥ अपरोक्षवस्तुविषया परोक्षधी
नच मानभावमुपगन्तुमर्हति।
स्वत एव शश्वदवभातमात्मनः
कुशलोऽपि न स्वमपि गृहितुं क्षमः ॥ ३ ॥

अपरोक्षैकस्वभावं वस्तु विषयः=विशेष्यो यस्यास्तथाविधा परो-
क्षधीः=पारोक्ष्यप्रकारकबुद्धिः तदभाववद्विशेष्यकतत्प्रकारकबुद्धित्वात्,
मानं मितिः, तद्भावं प्रमात्वम्, उपगन्तुम्=प्राप्तुंनचार्हति, इदमिति ग्राह्ये
तदिति प्रत्यये प्रमात्वव्यवहारादर्शनात्। तथाच महावाक्यस्य प्रामाण्या-
न्यथाऽनुपपत्त्याऽपि शाब्दापरोक्षसिद्धिरिति भावः। एतदुक्तं भवति—
पारोक्ष्याऽऽपरोक्ष्ये हि विरुद्धे नैकवस्तुस्वभावौ। वस्तुनि विकल्पायोगात्।
अतएव हि चैतन्यस्यैव मुख्यमापरोक्ष्यमन्यत्र तत्संबंधाद्गौणमिति वक्ष्य-
ति। नित्याऽपरोक्षं च पारोक्ष्येण ग्राहयद्वाक्यं कथं प्रमाणं स्यात्?। नच
बालार्ककरावमृष्टमेघशकले रक्तता प्रतिभासो याथार्थः, न वाऽर्ककराणां
प्रमाणतेत्यनुदाहरणं सः। एवं चन्द्रिकायां रक्तपटे नैल्यप्रतिभासोऽपि।
अनुमितिप्रतिबंधकसद्भावाज्जायमानं विशेषदर्शनोत्तरप्रत्यक्षमनुमितिर्मा भू-
त्। पारोक्ष्यसामग्रीसत्वात्। ज्ञानस्य तद्विषयस्य च पारोक्ष्यं तु स्यात्।
यदितु सन्निकर्षादिप्रयुक्तमसान्निहितमप्यापरोक्ष्यं प्रसक्तं पारोक्ष्यं ज्ञानेनि-
रुणद्धि, विषयेचापनयति किमङ्गवक्तव्यं प्राक्सिद्धं साक्षात्स्वाधिकरणे
तदपनेष्यति निरोत्स्यतिचेति। किंच॥ व्यवहितविप्रकृष्टाऽयोग्यगोचरमेव-
हिज्ञानं परोक्षं दृष्टं, नच स्वप्रकाशस्याऽऽत्मनः स्वं प्रत्येवव्यवधानं विप्रक-
र्षः प्रकाशापनयेनाऽयोग्यता वा प्रयत्नसहस्रैरपि सुकरा, येन पारोक्ष्यं स्या
दित्यभिप्रेत्याह—स्वत एवेति॥ कुशलः=चतुरतरोऽपि पुरुषः स्वतः=
साधननैरपेक्ष्येणैव शश्वत्=अनवरतम्, अवभातम्=प्रकाशमानं, स्वम्=
आत्मानम्, आत्मनः=पञ्चमी द्वितीयार्थे स्वंप्रत्येवेत्यर्थः। गूहितुम्=संवरीतुम्,
अन्तर्द्धाय गोपयितुमिति यावत् "अतर्द्धौयेनादर्शनमिच्छति"*इत्यपादान-
त्वम्। अपिशब्दाद्विप्रकर्षयितुमयोग्याकर्तुं च यत्नतोपि उपायसहस्रैः प्रयत-
मानोऽपि न क्षमः=न समर्थः। तथा च श्रुतेर्बाधितार्थबोधनाऽशक्तेरपि
शाब्दाऽऽपरोक्ष्यसिद्धिरिति भावः॥ ३॥

ननु जन्यापरोक्षज्ञानत्वावच्छिन्नं प्रति इन्द्रियत्वेन कारणत्वाद्वाक्या-
र्थज्ञानेचेन्द्रियकरणत्वाभावात्कथमापरोक्ष्यम्। नचापरोक्षवस्तुविषयकत्व-

---

* येन व्यवधानेसति यत्कर्तृकस्याऽऽत्मनोदर्शनाभावमिच्छति तदपादानं स्यात्। मा-
तुर्निलीयते कृष्णः॥

मेव ज्ञानानामापरोक्ष्यं सुवचम्। विषयाऽऽपरोक्ष्यस्य ज्ञानापरोक्ष्याधीनत्वे-नाऽन्योन्याश्रयाऽऽपत्तेः। सिद्धान्तेऽप्यज्ञानोपाधिकृताऽज्ञानावरणभङ्गस्यावच्छि-देऽप्रति अपरोक्षज्ञानत्वेन हेतुत्वस्याभ्युपगम्यमानतया ज्ञानाऽऽपरोक्ष्यस्याऽ-नावृतत्वरूपविषयापरोक्ष्यप्रयोजकत्वायोगात्तथेत्याशङ्क्याऽऽह— सुखदुःखेति॥

मू० ॥ सुखदुःखरागयतनेष्वसंमते
स्तिमिरप्रसुप्तिविषयेष्वदर्शनात्।
अपि हेतुरस्य विषयस्य योग्यते
त्यपरोक्षता न करणैर्नियम्यते ॥ ४ ॥

न तावज्ज्ञानविषययोरापरोक्ष्ये करणानां नियामकता। सा हि करणेषु सत्स्वेवाऽपरोक्षज्ञानं करणाभावे चाऽपरोक्षज्ञानाभाव इत्यन्वयव्यतिरेकनियमसंभवे स्यात्। न तावद्व्यतिरेकनियमसंभवः, व्यभिचारादित्याह— सुखदुःखेतिश्लोकार्धेन। सुखे, दुःखे, रागे=इच्छायां, यतने=प्रयत्ने परामिमतयोग्यात्मविशेषगुणेष्विति यावत्। षष्ठोपनिबद्धानामिन्द्रियवेद्यत्वाऽसंमतेः। मनसोऽनिन्द्रियत्वात्। तदभ्युपगमेऽपि "कामः संकल्पो विचिकित्सा" इत्यादिश्रुतेस्तेषां मनस्तादात्म्यावगततया करणकोटिप्रवेशेन तद्वेद्यत्वायोगात्। नहि परशुना स्वधर्माः छिद्यन्ते, किन्तु स्वघटितभूता दार्वादयः। "बुद्धेः साक्षी मनसः साक्षी" "प्रतिबोधविदितं मतम्" इत्यादिश्रुतिभिरुद्घुष्टितधर्मसाक्षिर्वेद्य तेषां प्रत्यासन्नत्वाच्चेति भावः। एवं तिमिरप्रसुप्तिविषयेषु=अन्धकाराज्ञानयोः स्वाप्नपदार्थेषु च अपरोक्षत्वेन सर्वाऽनुभवसिद्धेषु करणवैयर्थ्याऽदर्शनादित्यर्थः। न तावदन्धकारश्चाक्षुषः, तस्य भावत्वे आलोकसापेक्षचक्षुर्ग्राह्यतापत्तेः। अभावत्वे विशेषणतासंनिकर्षनिरासेनाऽधिकरणालोकसंयोगरूपाऽभावस्याचाक्षुषत्वभावेन च चक्षुरयोग्यत्वात्। एवं प्रागसाधितभावरूपाऽज्ञानेऽपि नेन्द्रिययोग्यता। रूपाद्यभावान्मनसोऽप्युपादानत्वाच्च। तथा स्वाप्नपदार्थानामपि जाग्रद्वासनावासितमनःपरिणामत्वेन मनसा ग्रहीतुमशक्यत्वाच्चक्षुरादीनां तदानीं लीनतया साक्षिवेद्यत्वमेवेति तेषां तत्साक्षिणश्चाऽऽपरोक्ष्यस्य करणव्यतिरेकेऽपि दर्शनाद्व्यतिरेकनियमाऽसिद्धिरित्यर्थः। नाप्यन्वयनियम इत्यभिप्रेत्याह—

अपीति ॥ अस्य=जन्यज्ञानापरोक्ष्यस्य विषयस्य=वेद्यस्य योग्यताऽपि हेतुः नियामिका सर्वैरभ्युपगम्यत इति शेषः। अयंभावः—सत्यपि योगादिसन्निकर्षे रूपादिरेव चक्षुषा गृह्यते न गुरुत्वादि। तत्कस्य हेतोः? अयोग्यत्वादितिचेत्, किन्तद्योग्यत्वम्? रूपादिमत्वं चेत्, गुणादिष्वननुगतम्। रूपमहत्वादिमत्समवेतत्वं चेत्, रूपत्वत्र्यणुकादिष्वननुगतम्। रूपघटादेः प्रातिस्विकरूपमपि सुतरां तथैवेति परैरनुगतजन्यज्ञानापरोक्ष्यप्रयोजकयोग्यताया दुर्वचत्वादगत्या अस्मदभिमतमनावृतचिदभिन्नत्वमनुगतं तत्प्रयोजकं वाच्यम्। इत्थंच प्रत्यक्षे विषयस्य कारणतामभ्युपगच्छतः तव आपरोक्ष्ये तादृशयोग्यतायाः प्रयोजकता दुर्वारैवेति योग्यतयैवाऽऽपरोक्ष्यनियमसिद्धेः अयोग्ये सौरभादौ चाक्षुषत्वेन त्वयाऽभ्युपगते आपरोक्ष्याऽनुल्लेखादन्वयव्यभिचारोऽपि स्फुटएवेऽति अपरोक्षता करणैः=इन्द्रियैः न नियम्यत इत्यर्थः। अभानापादकाऽज्ञानावरणभङ्गे च विषयावच्छिन्नचैतन्ये प्रमातृचैतन्याऽभेद एव प्रयोजकः। तत्रचेन्द्रियाणामन्तःकरणस्य वहिर्निर्गमने द्वारतैव, न प्रमातृचैतन्याऽऽपरोक्ष्यप्रयोजकता। तस्य पूर्वसिद्धत्वादिति भावः॥ ननु वहिः प्रमातृचैतन्यव्याप्तावपि रूपघटादिष्वेवाऽभानापादकाज्ञानावरणभंगो न गुरुत्वादिष्विति कुतः? अन्तःकरणपरिणामत्वाविशेषेऽपि रागेच्छादीनामेवाऽऽपरोक्ष्यं न धर्मादेरिति च कुत इति चेत्। अत्राहुः—सर्वकार्याणां पूर्वपूर्वसंस्काराऽनुसारेणैवाऽध्यासान्नीलपीतादिवैचित्र्य इव नित्यपरोक्षलक्षणवैचित्र्येऽपि संस्कार एव हेतुः। तथाच तत्राऽसत्वापादकाज्ञानावरणमेकमेवेत्याहुः। अन्येतु—तदभानापादकावरणभंगे योगाभ्यासजन्यादृष्टमपि सहकारीत्याहुः। अपरे तु—"कर्माध्यक्षः" इति श्रुते रीश्वरसाक्षिणं प्रत्यनावृतत्वस्यावश्यवाच्यतया ब्रह्मस्वरूपवन्मूलाज्ञानेनैव तदावरणमिति न ब्रह्मज्ञानमन्तरेण तदावरणभङ्ग इत्याहुः ॥४॥

ननु महावाक्यार्थवोधस्याऽनावृतचिदभिन्नविषयत्वमेवाऽसिद्धम्। साक्ष्यंशे अनावरणस्य स्वत स्सिद्धत्वेऽपि ब्रह्मांशे 'नाहं ब्रह्मजानामि' इति आवरणस्य सर्वाऽनुभवसिद्धस्य प्राक्त्वयैवोपपादनात्, शब्दवृत्तेश्च तद्भंगे असमर्थत्वादित्याशंक्य शब्दवृत्तेरपि तदज्ञान निवर्तकत्वे श्रुत्यनुभवौ प्रमाणयति—अपिचेति ॥

मू० ॥ अपि चाऽऽवृतार्थविषया परोक्षधी-

र्वचसा च भग्नमनुभूयते तमः ।

उपदेशमात्रमुपवर्ण्य तत्पुनः

श्रुतिराह दर्शयति पारमित्यपि ॥ ५ ॥

अपिचेत्युक्तसमुच्चये। परोक्षधीः=परोक्षबुद्धिः, आवृतार्थविषया= अज्ञानतिरोहितार्थगोचरा 'आवृतार्थाकारा वृत्तिः परोक्षा' इति तल्लक्षणयोगादित्यर्थः। नच प्रकृतबुद्धिस्तथा। यतो वचसा=महावाक्येन, तमः=अज्ञानं भग्नम्=विध्वस्तमनुभूयते मुख्याधिकारिभिरिति शेषः। नच तत्र विप्रतिपत्तिः। श्रुत्यापि तदनुभावादित्याह—उपदेशमात्रमिति ॥ श्रुतिः=छान्दोग्यसप्तमप्रपाठकरूपा सनत्कुमारस्य गुरोः नारदाय शिष्याय "यो वै भूमा तत्सुखम्" इत्यादिना आत्मोपदेशमात्रमुपवर्ण्य प्रपाठकान्ते स्वयमेवाह— "तस्मै मृदितकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमारः तं स्कन्द इत्याचक्षते" इति ॥ तत्र साक्षात्काराऽनुकूलव्यापारवान्हि दर्शयतीति णिजन्तप्रकृतिव्याख्यानेनोच्यते। यदि च बोधकवाक्यप्रयोगरूप उपदेशः शिष्यस्यात्मसाक्षात्कारे अहेतुः स्यात् 'दर्शयति' इति नाऽवक्ष्यदित्यर्थः। तथाचाऽखण्डशाब्दवृत्त्युदयसमकालमेव प्रमातारकाज्ञाननाशान्नाऽऽपरोक्ष्यव्याहतिरिति भावः ॥ ५ ॥

एवम् "आत्मा वारे द्रष्टव्यः श्रोतव्यः" इति साक्षात्कारमेवोद्दिश्य श्रवणविधानान्मुख्याधिकारिणां श्रवणमात्रेण कृतार्थताश्रुतेश्च शाब्दाऽऽपरोक्ष्यसिद्धिरित्याह—'विदधाति' इति ॥

मू० ॥ विदधाति यच्च परमात्मदृष्टये

श्रवणं विमृष्टनिगमान्तगोचरम् ।

श्रुतिमात्रतीर्णतमसो यदब्रुवन्

जनकोऽसि तारयसि पारमित्यपि ॥ ६ ॥

यत्=यस्मात्कारणात्, बृहदारण्यकश्रुतिः परमात्मदृष्टये=ब्रह्मसाक्षात्कारमुद्दिश्य विमृष्टनिगमान्तगोचरम्= विचारिततात्पर्यकवेदान्तविषयक-

म्, श्रवणम् विदधाति ततोप्यभिमतसिद्धिरिति पूर्वसाध्येन संबंधः। ननु तत्रैव "मन्तव्यो निदिध्यासितव्यः" इति मनननिदिध्यासनयोरपि श्रवणसहकारित्वेन विधानात्परंपरया साक्षात्कारप्रयोजकतैव तस्याः श्रुतेरभिप्रेतास्त्वित्याशंकां वारयन् प्रश्नोपनिषद्वाक्यमपि उक्तेऽर्थे संवादयति—श्रुतिमात्रेति ॥ तत्रह्येवमुक्तम्—सुकेशादयः षट्शिष्याः परं ब्रह्माऽन्वेषमाणाः पिप्पलादं गुरुमुपसन्नाः, तस्माच्च सम्यगात्मतत्व श्रुतिमात्रेण=श्रवणमात्रेण, तीर्णं तमः=अज्ञानान्धकारो यैस्ते तथाविधाः सन्तः तं गुरुमब्रुवन्, किमिति—हेगुरो "त्वंहि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि" इति। त्वमेवच नः पिता मुख्यः यस्त्वं निर्दुःखपरमानन्दरूपस्वात्मतत्वप्रदर्शनेन मोहसमुद्रान्निस्तारयसि, प्रसिद्धस्तु पिता देहमात्रोत्पादने पालने चात्मजन्मपालनोपचारान्नतथेति हि तेषामभिप्रायः। यत्=यस्मात् उपदेशमात्रेण स्वरूपप्रापकत्वात्पितेत्यब्रुवन्, तारयसीति लटा वाक्यार्थबोधसमकालमेवाऽविद्यानिवृत्त्या कृतकृत्यतामब्रुवन्। ततोऽपि शाब्दाऽपरोक्षसिद्धिरित्यर्थः। मनननिदिध्यासनसहकारिविधेस्तु मन्दमध्यमाऽधिकारिविषयतेति भावः ॥ ६ ॥

अनावृतचिदभेद एव विषयेषु योग्यता, सैव वृत्तीनामापरोक्ष्ये प्रयोजिकेत्युक्तम्। तत्र चिदभेदः स्वाभाविकश्चिति, घटादिजडेतु विषयताख्यचित्तादात्म्यघटक आध्यासिक इत्यवान्तरवैलक्षण्येऽपि तादृशचिदभेदत्वेनैवोभयत्रापि वृत्तावापरोक्ष्यप्रयोजकत्वात्तस्या ऐकरूप्यमेव। आपरोक्ष्यं तु मुख्यं चैतन्यस्यैव। ज्ञातृज्ञानज्ञेयेषुतु अपरोक्षचित्संवलनाद्विमर्शो गौणम्। तथा च बाह्यवस्तुषु अपरोक्षचित्संबंधाय करणजन्यवृत्त्यपेक्षायामान्तरे ब्रह्मणि वाक्योत्थवृत्त्यैवाऽज्ञाननिवृत्तिसंभवान्नास्त्येव करणाऽपेक्षेत्याह—चैतन्यस्येति ॥

**चैतन्यस्याऽऽपरोक्ष्यं स्वरसनिजदृशो मुख्यमन्याऽनपेक्षं**
**गौणं तद्गोचरेष्वावरणविरहिते तत्र तादात्म्यवत्सु।**
**बाह्ये चैतन्ययोगं घटयितुमुचिता वृत्तिरक्षप्रसूता**
**वाक्योत्था मोहमात्रं विघटयति चितस्स्फूर्तिरन्याऽनपेक्षा॥**

स्वरसनिजदृशः=स्वयमेव रसस्य सारस्य निजदृशः=स्वप्रकाशचैतन्यस्य, आपरोक्ष्यं मुख्यम्। तत्र हेतुगर्भं विशिनष्टि—अन्येति॥ यतस्तद्न्यनिरपेक्षमित्यर्थः। तद्गोचरेषु—तस्य=साक्षिचैतन्यस्य गोचरेषु=विषयेषु ज्ञातृज्ञानज्ञेयेषु गौणम्। तत्राऽपि तथैव विशिनष्टि—आवरणविरहित इति॥ आवरणेन विरहिते=शून्ये, तत्र=साक्षिणि, आध्यासिकतादात्म्यवत्सु निरावरणचित्तादात्म्याऽपेक्षत्वादित्यर्थः। ततश्च रंजकद्रव्यरक्तिम्ना रंजितपटे 'रक्तः पटः' इति यद्वद्गौणोऽपरोक्षव्यवहारस्तेष्विति भावः। ननु यदि चित्तादात्म्यादेवाऽऽपरोक्ष्यं विषयाणां, तर्हि सर्वस्य जगतश्चित्येवाऽध्यस्तत्वादापरोक्ष्यापत्तिः। नचाऽऽवरणादतथेति वाच्यम्। अधिष्ठानचैतन्य तद्ध्यस्तयोरन्तराऽऽवरणसद्भावेऽध्यस्तस्य चित्तादात्म्यस्यैवाऽसंभवादध्यासाभावप्रसंगादितिचेत्, सत्यम्। अस्त्येव सर्वाधिष्ठानब्रह्मचैतन्यंप्रति सर्वविषयस्याऽव्यवधानादापरोक्ष्यम्। अत एव हि ब्रह्म सर्वज्ञमित्युक्तम्। नैतावता सर्वेषां सार्वज्ञ्य प्रसङ्गः। तत्तत्प्रमातृयच्छिन्नसाक्षिण्यौपाधिकभेदसत्त्वात् तं प्रत्येव बाह्यविषयाणा मावरणाऽभ्युपगमात्। अत एव हि तद्भङ्गाय वृत्तिनिर्गमः। अथवा—मास्तु बाह्यवस्तुष्वावरणम्। तथापि न तत्तत्पुरुषान्प्रति विनातत्तत्प्रमातृचैतन्योपरागं स्फुरणप्रसक्तिः। अत एव हि तत्र चिदुपरागाय वृत्तिनिर्गमाऽपेक्षेत्याह—बाह्य इति॥ बहिर्भवे बाह्ये घटादौ प्रमातृचैतन्यस्य योगं=संपर्कं घटयितुं=संपादयितुम्, अक्षप्रसूता=इन्द्रियजन्या वृत्तिः उचिता=आवश्यकीत्यर्थः।

नन्वेवमपरिच्छिन्नब्रह्मस्वरूपेऽपि सर्वतो वृत्तिव्याप्तये इन्द्रियद्वारा बहिर्वृत्तिनिर्गम आवश्यकः। आवरणभङ्गार्था वृत्तिरिति पक्षेऽपि सार्वत्रिकब्रह्मावरणभङ्गाय सर्वतोवृत्तिव्याप्त्यपेक्षास्त्येवेति कथं वाक्योत्थवृत्तिमात्रेण परिच्छिन्नेन निर्वाह इत्याशंक्याह—वाक्योत्थेति। वाक्योत्था=महावाक्यजन्या दर्शिताऽखण्डवृत्तिः, मोहमात्रम्=कृत्स्नमज्ञानं विघटयति=अधिष्ठानात्प्रच्यावयति बाधत इत्यर्थः। अयं भावः—न कार्त्स्न्येन वृत्त्या विषयव्याप्तावेव तत्स्फुरणमिति नियमः। पर्वतं पश्यतो व्यवहितविप्रकृष्टतत्प्रदेशेषु च संयोगाभावात्तत्रान्तःकरणस्य कार्त्स्न्येन व्याप्त्यभावेन पर्वताऽऽपरोक्ष्याऽभावप्रसङ्गात्। घटादिपदार्थस्याऽपि तन्न्यायेनाऽऽपरो-

क्ष्याऽपलापाऽऽपत्तेश्च । किंच ॥ विषयस्य स्वाकारवृत्तिः संपर्कः, सचैकदेशाऽसंबंधेनाऽपि घटादावन्तःकरणस्य तदाकारतापत्तौ संपद्यत इति यद्यगत्याऽभ्युपगच्छसि, तर्हि वाक्यजन्यब्रह्माऽऽकारवृत्तेरपि अन्तरेव शुद्धब्रह्मसंपर्कस्याऽवर्जनीयत्वात्तदापरोक्ष्ये तदज्ञाननाशं कुतो नाऽभ्युपगच्छसीति ॥ एतावांस्तु विशेषः—पर्वते साक्षात्कृतेऽपि व्यवहितविप्रकृष्टतद्गतविशेषाणां साक्षात्कारवृत्त्याऽनवगाहनात्तद्विषये अज्ञानजिज्ञासे अवशिष्येते । ब्रह्मणस्तु निर्विशेषत्वाद्वृत्त्यनवगाह्यस्य कस्यचिदंशस्याऽनवशेषात्कृत्स्नजिज्ञासाऽज्ञानमूलमूलाऽज्ञानोन्मूलनाच्च कृतकृत्यतैवेति । ननु तर्हि ब्रह्मणः सर्वतः प्रमातृचिदुपरागार्थमेव वृत्तिनिर्गमाऽपेक्षाऽस्तु इत्याशंक्याह—चित इति ॥ चितः=अनावृतचैतन्यैकरसस्य ब्रह्मणः स्फूर्तिः=प्रतिभानम्, अन्याऽनपेक्षा=चिदुपरागाऽनपेक्षेत्यर्थः । अस्वच्छमित्यादौ सौराऽऽलोकादिप्रतिबिंबोदयाय काचरसादिस्वच्छद्रव्योपलेपनमिव जडे घटादौ अनावृतप्रमातृचैतन्योपरागाय स्वच्छतरान्तःकरणवृत्तिव्याप्त्यपेक्षायामपि स्वयंप्रकाशे ब्रह्मणि न तदपेक्षा । उपाध्यावरणयोर्भंगेन च सेतुभंगे जलस्येव प्रमातृचैतन्यस्याऽपि अपरिच्छिन्न ब्रह्मसंबंधः सिद्ध इति न तदर्थमपि तदपेक्षेति भावः । तथाचाहुः—

"ब्रह्मण्यज्ञाननाशाय वृत्तिव्याप्तिरपेक्षिता ।
स्वयं स्फुरणरूपत्वान्नाभास उपयुज्यते" ॥ इति ॥

अत एव वृत्तिसंबंधमभ्युपगम्य "मनसैवाऽनुद्रष्टव्यं" "चेतसानान्यगामिना । परमं पुरुषं दिव्यं याति" इत्यादि श्रुतिस्मृतिवादाः, फलव्याप्त्यभावाच्च "नैववाचा न मनसा" "यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह" इत्यादिवादाश्च प्रवृत्ता न विरुध्यन्त इति भावः ॥ ७ ॥

बहिर्विषये वृत्तिनिर्गमनस्य दर्शितमेव मतभेदेन फलद्वयं स्फुटयति—विषयेति ॥

मू० ॥ विषयाऽप्रबोधदलनाय संविदो
विषयोपरागजननाय वा धियम् ।
विषयाऽऽकृतित्वमुपनेतुमिष्यते
विषयाऽक्षयोगसरणिस्तनोर्बहिः ॥ ८ ॥

विषयस्य=बाह्यघटादेः, अप्रबोधस्य=तदधिष्ठानचैतन्याऽऽवरकतूलाऽज्ञानस्य दलनाय=नाशाय, अथवा, संविदः=प्रमातृचैतन्यस्य विषयोपरागः=विषये प्रतिफलनं, न तादात्म्यं तस्य जननाय=उत्पादनाय वा, धियम्=साक्षीद्धमन्तःकरणं, विषयाऽऽकृतित्वम्=घटाद्याकारताम् उपनेतुम्=तदुपश्लेषेण संपादयितुं, तनोः=शरीरात्, बहिः अन्तःकरणनिर्गमनद्वारतया विषयाऽऽक्षयोगसरणिः=विषयेन्द्रियसन्निकर्षरूपो मार्गः इष्यते=अवश्यमपेक्ष्यत इत्यर्थः। तेन मार्गेण निस्सृतस्याऽन्तःकरणस्य घटादिव्याप्त्या घटाद्याकारतासंपत्तौ घटाद्यधिष्ठानचैतन्यस्य वृत्त्यवच्छिन्नचेतनस्य च केदारतद्व्याप्तजलावच्छिन्नाऽऽकाशयोरिव समान प्रदेशावच्छिन्नोपाधिद्वयस्य परस्परोपहित भेदाऽनियामकत्वादैक्यापत्तौ घटाद्युपहितचैतन्यनिष्ठाऽज्ञानाऽऽवरणभंगाच्चत्प्रतिभासे तदध्यस्तघटादेरपि प्रतिभास इत्याचार्य वाचस्पतिमिश्रमतम् ॥

विवरणानुसारिणां तु—"जीवेशावाभासेन करोति" इति श्रुतेः जीवस्याऽविद्याप्रतिबिंबत्वादविद्यान्तःकरणतद्वृत्त्यादीनां चित्प्रतिबिंबग्राहिणामेव तं प्रत्याऽऽपरोक्ष्यदर्शनाद्बाह्यघटादावपि स्वच्छान्तःकरणव्याप्त्या चित्प्रतिबिंबादर्थनैवाऽऽपरोक्ष्यमिति मतमिति मतद्वयोपन्यास इति भाव ॥

इति शाब्दाऽऽपरोक्ष्यनिर्णयः॥

इत्थं शास्त्राऽऽपरोक्ष्यं तत्प्रसङ्गात्प्रतिकर्मव्यवस्थां च व्युत्पाद्य मुख्याऽधिकारिविशेषविषयमुपदेशमुपसंजिहीर्षु प्रतिकर्मव्यवस्थास्मारित सर्वेन्द्रियव्यवहारनिर्वाहकं निष्प्रपंच चैतन्यैकरसमात्मानं सिंहावलोकनन्यायेनाऽऽलोच्य दर्शयति—यदिति ॥

**यन्नेक्ष्यं चक्षुराद्यैः प्रतिविषयममी येन संधुक्षितार्थाः**
**यद्वागादेः पदं न व्यवहरति मुहुर्येन वागादिवर्गः ।**
**येन प्राणः प्रणीतस्तनुकरणमनोबुद्धयो येन चेद्धाः**
**तच्छुद्धं स्वेन सिद्धं निरुभयमभयं बोधसत्सौख्यमात्मा ॥**

यत्=वस्तु, चक्षुराद्यैः=ज्ञानेन्द्रियैः, नेक्ष्यम्=शक्यार्थे कृत्यः। ईक्षितुमशक्यमित्यर्थः । श्रुतिरपि="यच्चक्षुषा नपश्यति" इत्यादिः

"पराञ्चि खानि व्यतृणत्स्वयंभूः" इतिच। चक्षुरादेस्तत्प्रकाशकत्वाऽभावेऽपि तत्सद्भावे लिङ्गत्वमस्त्येवेत्यभिप्रेत्याह—प्रतिविषयमिति ॥ अमी=चक्षुरादयः विषयेविषयेइतिप्रतिविषयम् "यथार्थे" * इतिवीप्सायामव्ययीभावः। सर्वेष्वपि स्वस्वविषयेष्वित्यर्थः। येन=आत्मचैतन्येन संधुक्षिताः=सम्यक्प्रकाशिताः स्वस्वयोग्यसन्निकृष्टपदार्थास्तत्तदाकारस्वजन्यप्रवृत्तिरूपप्रयोजनानि येषां ते तथोक्ताः। तथा च श्रुतिः—"श्रोत्रस्य श्रोत्रम्" इत्यादि ॥ तथाचेन्द्रियतज्जन्यवृत्त्याद्युपाधिविवेकमात्रेणाऽऽत्मचैतन्यं शुद्धं लक्षयितुं शक्यमित्यर्थः। एतदेवश्रुतिराह—"अतिमुच्य धीराः प्रेत्याऽस्माल्लोकादमृता भवन्ति" इति ॥ सन्निधानाच्छ्रोत्रादिकलापाऽभिमानमतिमुच्य इति हि तदर्थः। एवं कर्मेन्द्रियविषय चतुर्विधक्रियाफल वैलक्षण्येन कर्मेन्द्रिय प्रवृत्तिनिमित्ताऽभावेन पूर्वसिद्धत्वेन च नित्यनिर्विकारतया कर्मेन्द्रियैरप्याऽऽत्मा लक्षयितुं शक्य इत्यभिप्रेत्याह—यदिति ॥ यत्=आत्मवस्तु, वागादेः=कर्मेन्द्रियस्य, पदं=विषयः न, वक्तव्याऽऽदातव्य मन्तव्य विसर्जयितव्याऽऽनंदयितव्यानि हि तेषां पदम्। आत्मा तु न तथेत्यर्थः। अत्रापि श्रुतिः "यद्वाचाऽनभ्युदितं" "नैववाचा नमनसा" इत्यादि ॥ तथा च सूच्यादिलोहचलनेन तन्निमित्तमयस्कान्तमिव कर्मेन्द्रियव्यापारैर्लक्षणीयमित्यभिप्रेत्याह—व्यवहरतीति ॥ मुहुः=सर्वदा। ननु प्राणाऽन्तःकरणाभ्यामेव क्रियाज्ञानशक्तिमद्भ्यामुभयमप्यन्यथासिद्धमित्याऽऽशंकां निरस्यन्नाह—येनेति ॥ येन=आत्मवस्तुनैव प्राणः स्वव्यापारे प्रणीतः=प्रवर्तितः। तनुः=शरीरम्, करणानि, प्रागुक्तानि, मनोबुद्धिशब्दाभ्यां शक्तिभेदाद्वृत्तिभेदाद्वाऽन्तःकरणमेव द्विधोपात्तम्। तन्वादिबुद्ध्यन्ता येन सर्वान्तरेण स्वयंज्योतिषा स्फाटिककोशपरंपरान्तर्गतप्रदीपेनेव, इद्धाः=दीप्ताः सदैवाऽनुभूयन्त इत्यर्थः। तनुकरणयोःपुनरुपादानमन्तःकरणस्याऽपि पारार्थ्येन तत्साम्यप्रदर्शनार्थम्। तथाच श्रुतिः—"न प्राणेन नाऽपानेन मर्त्यो जीवति कश्चन" "मनोमयः प्राणशरीरनेता" "बुद्धेस्साक्षी मनसस्साक्षी सर्व-

---

* योग्यता वीप्सा पदार्थाऽनतिवृत्ति सादृश्यानि यथार्थाः। तथाच "अव्ययं विभक्ति" इत्यादि सूत्रघटकीभूत यथार्थेत्यंशेनोक्तवीप्सारूपाऽर्थे "अव्ययम्" इत्यादिसूत्रेणैव प्रतीत्यव्ययेन समासः।

स्य साक्षी" इतिच ॥ तत्=तथाभूतम्, शुद्धम्=असङ्गत्वादत्यन्तपरिशुद्धं स्वेनैव सिद्धस्वप्रकाशमित्यर्थः। स्वविषयस्य चाऽवस्थात्रयस्य स्वव्यतिरिक्तसत्तास्फूर्त्यभावादिभमयम्=अद्वयम्, अतएव भयहेतुद्वितीयाऽभावात्=अभयम् "द्वितीयाद्वै भयं भवति" इति श्रुतेः। बोधसत्सौख्यमेव आत्मा स एव निश्चितः कृतकृत्यताहेतुः "तरति शोकमात्मवित्" इत्यादिश्रुतिशतेभ्यः इति भावः ॥ ९ ॥

इत्थं मन्दमध्यमाऽधिकारिणामपि आत्मतत्त्वबोधाय श्रुति युक्त्यनुभवप्रकारैः शास्त्राऽऽचार्यसंप्रदायसिद्धो विचारो विस्तरेण दर्शितः। एतावतैव कृतपुण्यपुञ्जाः प्रक्षीणरागादिदोषास्ते कृतकृत्या भविष्यन्त्येवेति। यस्तु तेषामपि मध्ये बलवत्तरप्रारब्धवशात् दृढतराऽसंभावनादिदोषात् विचारितमप्यात्मतत्त्वं नविन्दति, यश्च दृढतररागद्वेषादिदृढतरसंस्कारव्याकुल आत्मविचारे विचारित आत्मतत्त्वे वा चित्तस्थैर्यं न लभते, तयोराद्यस्य यावद्बोधोदयं श्रवणाद्याऽऽवृत्ति, द्वितीयस्य योगाऽभ्यासेन चित्तनिग्रहं चाऽवश्यकर्तव्यत्वेनोपदिशति—इत्थमिति ॥

इत्थं सम्बोधितस्याप्यनवहितमतेर्यस्य बोधो न वृत्तः<br>
स स्याद्भूयोविचारव्यसनवशमनाः सत्सहायः स्वतश्च ।<br>
अक्षान्विक्षेपशान्त्यै चपलमपि मनो लालनैर्वा हठाद्वा<br>
रुध्वा ध्यायेदनन्तं परमसुखचिदात्मानमेकं विविक्ते॥१०॥

इत्थं=उक्तप्रकारेण शास्त्राऽऽचार्याभ्यां सम्बोधितस्य=सम्यक्बोधितस्यापि दृढाऽसंभावनादिदोषवशात् अनवहिता=श्रुतितात्पर्यनिर्णये सूक्ष्मतराऽऽत्मतत्त्वाऽवधारणे वा संशयादिभिरस्थिरीकृता मतिः यस्य तथाविधस्य यस्य=अधिकारिणः बोधः=आत्मनिर्णयः नवृत्तः=न सम्पन्नः सः=तथाविधोऽधिकारी श्रवणादौ श्रान्तस्सन् 'दुरधिगममिदं नास्ति मे बोधप्रत्याशा' इति निर्वेदाच्च श्रवणादि परित्यजेत्। किन्तु उत्साहसम्पन्नस्सन् भूयः=पुनः सत्सहायः=सन्तो मृदिताऽसंभावनादिदोषाः कृतसाक्षात्कारा आचार्यसतीर्थ्यादयः अभ्यासपरा अन्ये वा सहाया अनुभवमूलयुक्तिभिः बोधने ऊहापोहसंवादग्रन्थाऽभ्यासादौ च सहकारिणो यस्य स तथाविधस्सन्

तेषामसंनिधिकाले च स्वतश्च ग्रन्थपरिशीलनादिना प्रत्यक्प्रवणचेतसा आत्मतत्त्वपर्यालोचनेन च यावत्साक्षात्कारोदयं विचारव्यसनवशमनाः= यथा स्त्रीधनादिव्यसनिनः तदेकप्रवणं मनः प्रसिद्धं, तथा आत्मतत्त्वविचारे व्यसनस्य=अत्याऽऽसक्तेः वशं=निरन्तराऽधीनं मनो यस्य स तथाविधः स्स्यात्=भवेदित्यर्थः । तथा च सूत्रम् "आवृत्तिरसकृदुपदेशात्" इति । आहुश्च वृद्धाः,

"गच्छतस्तिष्ठतो वापि जाग्रतः स्वपतोऽपि वा ।
न विचारपरं चेतो यस्याऽसौ मृत उच्यते" ॥ इति ॥

अयंभावः—द्विविधाह्यसंभावना–प्रमाणाऽसंभावना प्रमेयाऽसंभावनाचेति । तत्र, यस्य प्रमेयाऽसंभावना स्वत एव नास्ति स्वल्पकालकृतशास्त्राचार्यपूर्वकविचाराद्वा निवृत्ता । प्रमाणानित्वस्मिन्नर्थे कथं सर्वाण्यविरोधेनाऽनुकूलानि स्युरित्येव असंभावनाऽऽस्ते । स यावद्बोधं श्रवणमेवाऽऽवर्तयेत् । यस्य तु सकृच्छ्रवणेनैव प्रमाणाऽसंभावना निवृत्ता अस्तु सर्व श्रुतीनामद्वितीयात्मवस्तुन्येव तात्पर्यम् । वस्तु स्वरूपं तु नैवंविधंप्रसिद्धं संभावयितुं शक्यमित्येव साऽऽस्ते, सत्वनुभवनिष्ठानाचार्यसतीर्थ्यादीनुपासीनः तद्दर्शितयुक्त्यनुसंधानरूपं स्वबुद्ध्या देहेन्द्रियादिविलक्षणसर्वान्तर चिदात्मपर्यालोचनरूपं च मननमेवाऽऽवर्तयेत् । यस्य तु द्विविधाप्यसंभावना न निवृत्ता स यावत्तत्फलाऽवाप्त्युभयमावर्तयेदिति । यस्य तु द्विविधाप्यसंभावना निवृत्ता केवलंद्वैतवासना दार्ढ्याद्विपरीतभावनैव चित्तमावृणुते, तस्य निदिध्यासनमेव यावद्बोधोदयं कर्तव्यत्वेन दर्शयति—ध्यायेदिति । विक्षेपाः=विपरीतप्रत्ययाः तत्संस्काराश्च तेषां शान्त्यै=अनुत्पादाय उच्छेदाय च । विविक्ते="समे शुचौ शर्करावह्निवालुकाविवर्जिते । शब्दजलाश्रयादिभिः मनोनुकूले न तु चक्षुःपीडने गुहानिवाताश्रयणे प्रयोजयेत्" इति श्रुत्युक्तलक्षणवति देशे स्वासने सुखोपविष्टः सन्=यमनियमादि —बहूनीन्द्रियाणि प्राणादीनि च चपलं=चञ्चलं मनोऽपि रुद्ध्वा=वशमानीय अनाः निरस्तं अनन्तं=त्रिविधपरिच्छेदशून्यं परमसुखनिधानमात्मानं-निरतिशयाऽऽनन्दरूपमित्ययं स्वात्मानं एकाकिन्यनन्यपरो नतैव ध्यायेत्-अविच्छेदेन निरन्तरं संदध्यादित्यर्थः । तत्र यस्य स्वरूपमनो मनो यदा नान्यदिति तत्र मनो-

निग्रहे यथातत्त्वविपाकमुपायद्वयमाह—लालनैर्वा हठादिति। यथा दुर्दान्तस्य पशोः अभिमतदेशप्रवेशनेन बन्धने तृणपिण्याकाद्युपप्रदर्शनं कण्डूयनादिः (लालनोपायः) लगुडप्रहारभर्त्सनानुधावनादिस्तु दण्डोपाय इति द्विविधः। एवं चित्तस्यापि बहिःप्रवणतानिवारणेन आत्मप्रवणतासम्पादने अभ्यासवैराग्ये, विषयदोषानुसंधानं, अमानित्वादिधर्माः, असङ्गात्मभावना, अन्यस्य दृश्यवर्जनं, वासनाक्षयमनोनाशाभ्यासौ, द्वैतस्य मिथ्यात्वादात्ममात्रत्वानुसन्धानं, ध्यानैकव्यसनितावेत्यादिः लालनोपायः। अष्टाङ्गयोगाभ्यासलक्षणस्तु हठोपायः। तत्राऽऽद्यो राजयोगाख्यः "त्रिरुन्नतं स्थाप्य समं शरीरम्" इत्यादि श्रुत्या, गीतासु भगवता च दर्शितः—

"अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते।
ये हि संस्पर्शजा भोगा दुःखयोनय एव ते॥
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः।
शनैःशनैरुपरमेद्बुद्ध्या धृतिगृहीतया॥
आत्मसंस्थं मनः कृत्वा न किञ्चिदपि चिन्तयेत्।
यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्॥
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत्।
यत्रोपरमते चित्तं निरुद्धं योगसेवया॥
यत्र चैवाऽऽत्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति।
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्॥
वेत्ति यत्र न चैवाऽयं स्थितश्चलति तत्त्वतः।
यं लब्ध्वा चाऽपरं लाभं मन्यते नाधिकं ततः॥
यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यते।
तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्॥" इति॥

अस्य च सुकरत्वं प्रत्यक्षफलत्वं च भगवतैवोक्तम्—

"राजविद्या राजगुह्यं पवित्रमिदमुत्तमम्।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्॥" इति॥

अमानित्वादयो भगवतैव ज्ञानज्ञेयविभागप्रसङ्गेन दर्शिताः। वासना-

नां चित्तबीजत्वात् तन्नाशस्य चित्तनाशहेतुत्वं, वासनाप्राणस्पन्दयोः अन्योन्यहेतुकत्वं एकतरनिरोधेनैव उभयक्षयसिद्धिं चाह वसिष्ठः—

" वासनावशतः प्राणस्पन्दस्तेन च वासना।
क्रियते चित्तवृक्षस्य तेन बीजाङ्कुरक्रमः॥
द्वे बीजे चित्तवृक्षस्य प्राणस्पन्दनवासने।
एकस्मिंस्तु तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः॥" इति॥

चित्तस्य सङ्कल्पमूलत्वं तत्परित्यागेन मनोनाशसिद्धिं चाऽऽह जनकः—

"अस्य संसारवृक्षस्य मनो मूलमिति स्थितम्।
सङ्कल्पमेव तन्मन्ये सङ्कल्पोपशमे न तत्॥
शोषयामि यथाशोषमेति संसारपादपः॥" इति॥
"चित्त! जानामि ते मूलं सङ्कल्पात्किल जायसे।
नैव संकल्पयिष्यामि तेन त्वं न भविष्यसि"॥

इति अन्यत्राप्युक्तं॥ वासनानाम—रागद्वेषादीनां पूर्वावस्थारूपः चिराभ्यस्तविषयसेवनोत्थः चित्तकषायः। सा त्रिधा—देहवासना, लोकवासना, शास्त्रवासना चेति। सदन्नपानादिसेवनबलवीर्यादिसम्पादनाऽलङ्करणादिभिः देहसौष्ठवसम्पादनाऽभिनिवेशहेतुराद्या। सा च बलवीर्यसौन्दर्याद्यभिमानभोगलांपट्य तत्साधनविघातकेषु रागलोभद्वेषादिजननेन दुरन्तनरकादिदुःखहेतुः। स्वस्य लौकिकजनेषु आधिक्यसम्पादनाभिनिवेशहेतुर्द्वितीया। सा च दैवात् बहुतरश्रमेण सम्पन्नफला मदमानमोहमहत्तिरस्कारादिसम्पादनेन अनन्तनरकाद्यनर्थहेतुः, असंपन्नफलात्वमर्षाऽसूया मात्सर्यादि द्वारा महानर्थहेतुः। शास्त्रवासना द्विविधा—मलिना शुद्धा च। तत्र अनात्मशास्त्रेषु सकलग्रन्थाऽभ्यासपाटव वादिविजिगीषाद्यभिनिवेश हेतुराद्या। सापि श्रमाऽसूया मान मत्सर महत्तिरस्कार सच्छास्त्रप्रद्वेषादि द्वारा महानर्थहेतुः। अध्यात्मशास्त्राऽभ्यासजन्या विषयदोषदर्शन विवेक वैराग्यादि हेतुः शुद्धा। सा च चिराभ्यस्ता विरोधिवासनोन्मूलनेन आत्मैकप्रवणतामापादिते चेतसि स्वयमेव उपशाम्यति। तत्र देहवासना देह-

स्याऽनित्यत्वाऽमङ्गलत्व सर्वरोगाकरत्वाद्यनुसंधानात् तत्स्थैर्यस्य असाध्यत्वनिश्चयेन च वासिते चेतसि निवर्तते। यथाहुः—

"कोट्यो ब्रह्मणां याताः गताः सर्गपरम्पराः ।
प्रयाताः पांसुवद्भूपाः का धृतिर्मम जीवने ॥" इति ॥

लोकवासनापि उत्कर्षाय यतमानानामपि बहूनामविश्रान्तिविपरीतफलादिदर्शनेन संसाराऽनर्थहेतुत्व प्रतिसंधानेन च वासिते चेतसि निवर्तते। अत्राप्याहुः—

"येषां निमेषणोन्मेषौ जगतः प्रलयोदयौ ।
तादृशाः पुरुषाः सन्ति मादृशां गणनैव का ॥" इति ॥

शास्त्रवासनापि सर्वेषां ग्रन्थानां जन्मसहस्रैरप्यध्येतुमशक्यत्वात् असारबहुलत्वात् सर्वेषां वादिनां दुर्जयत्वात् आत्मपराभवस्याऽवश्यंभावित्वात् वृथा श्रमोऽयमिति प्रतिसंधानेन वासिते चेतसि निवर्तते ॥ अत्राप्याहुः—

"अनन्तशास्त्रं बहु वेदितव्यमल्पश्च कालो बहवश्च विघ्नाः ।
यत्सारभूतं तदुपासितव्यं हंसो यथा क्षीरमिवाम्बुमिश्रम्" ॥
"इदं ज्ञेयमिदं ज्ञेयं यः सर्वं ज्ञातुमिच्छति ।
अपिकल्पसहस्रायुः तस्यान्तं नाधिगच्छति" ॥
"गुरुं हुङ्कृत्य तुङ्कृत्य विप्रं निर्जित्य वादतः ।
अरण्ये निर्जले देशे भवति ब्रह्मराक्षसः" ॥ इति

तथाच शाकल्यप्रभृतीनां मूर्धपाताद्यनर्थः श्रूयतेइति मूलवासनाजयोपायाः। रागादिवासनाजये मैत्र्यादिभावनं तत्तद्विषयदोषभावनं चोपायः। तथाच पातञ्जलसूत्रम्—"मैत्रीकरुणा मुदितोपेक्षाणां सुखदुःखपुण्याऽपुण्यविषयाणां भावनातश्चित्तप्रसादनम्" इति। सुखमनुशेते रागात्मिका चित्तवृत्तिः अन्यान् सुखिनो दृष्ट्वा श्रुत्वा च ममापि तादृशं सुखं स्यादिति। सा च स्वस्य दृष्टाऽदृष्टसामग्र्यभावात् असम्पन्नफला चित्तं तापयति। यदा असौ सुखिषु सर्वप्राणिषु स्वीयत्वलक्षणां पेकात्म्यलक्षणां वा मैत्रीं भावयति, तदा तदीयं सर्वं सुखं स्वपुत्रादिसुखवत् स्वसुखब-

द्धा स्वीयमेव सम्पन्नमिति स रागः तत्प्रयुक्तद्वेषाऽसूयादयश्च निवर्तन्ते । एवं दुःखमनुशेते द्वेषात्मिका वृत्तिः कदाचिदपि मे दुःखं माभूदिति । सा च शत्रुव्याघ्रवृश्चिकादिषु सत्सु दुःखस्याऽपरिहार्यत्वात् सर्वदुःखहेतूनां उच्छेत्तुमशक्यत्वात् परितः प्रयतमानस्यापि असम्पन्नफला चित्तं तापयति । यदा असौ स्वस्येव कस्यापि कदापि दुःखं माभूदिति स्वसाम्येन स्वैकात्म्येन वा सर्वभूतेषु करुणां भावयति, तदा सा तत्प्रयुक्तक्रोधहिंसादयश्च निवर्तन्ते । यथाहुः—

"प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा ।
आत्मौपम्येन भूतानां दयां कुर्वीत मानवः" ॥ इति ॥

तथा सर्वप्राणिनां प्रमादादकृतं पुण्यं कृतं पापं च चिन्त्यमाने चित्तं तापयतः। तत्राऽसौ यदा पुण्यकारिषु सर्वेषु मुदितां प्रीतिं भावयेत् पापिषु चोपेक्षां तदा स्वयमप्रमत्तःपुण्यतमसमाध्यभ्यासादौ प्रवर्तते पापाच्च निवर्तत इति सा चिन्ता पापप्रवृत्तिमूलदम्भदर्पादयश्च निवर्तन्त इति तत्सूत्रार्थः । एवं स्वदोषविषयदोषादिचिन्तनमपि दम्भदर्परागाद्युपशमहेतुः । स्वीयमनोवाक्कायदोषाः पुत्रमित्रादिविषयदोषाश्च स्वानुभवसिद्धाः पुराणेषु पूर्वाचार्यैश्च प्रपञ्चिताश्चेति नेह प्रपञ्च्यते । एवमसङ्गाऽकर्त्रैकात्म्यचिन्तनस्य द्वैतसंस्कारोच्छेदहेतुत्वं श्रुत्या, भगवता वसिष्ठेन च दर्शितम् । "तत्र को मोहः कः शोकः एकत्वमनुपश्यतः।" "आत्मेत्येवोपासीत"

"अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्वा ।"
"असङ्गव्यवहारित्वात् भवभावनदर्शनात् ।
शरीरनाशदर्शित्वात् वासना न प्रवर्तत" इति ॥

तादृशात्मचिन्तनप्रकारश्च वृद्धैर्दर्शितः । यथा स्वर्णतत्त्वपरीक्षकः कुण्डलकटकाद्याकारं भासमनमप्युपेक्ष्य वर्णगुरुत्वयोरेव मनः प्रणिदधाति, तथा सच्चित्संवलनेन भासमानमपि ज्ञातृज्ञानज्ञेयात्मकं सर्वप्रपञ्चभेदमुपेक्ष्य निष्कृष्टसच्चिन्मात्रे तावत्कालं मनः प्रणिधानमभ्यसनीयम् , यावताकालेन उच्छ्वासनिःश्वासवदनायासेन केवले आत्मनि चित्तं स्थिरीभवतीति । तदेवं चिन्मात्रवासनायां स्थिरीकृतायां अहमेतच्चिन्तयामीत्य-

भ्यासकालोपात्तं अहंत्वभेदाऽघमर्दं प्रयत्नं च परित्यज्य चिन्मात्रैकरसेन मनसः संस्थितिलक्षणस्समाधिर्भवति। स एव मनोनाश इत्युच्यते। तदानीं च योगी यदि तत्त्वज्ञः तदा साक्षात्कैवल्यलक्षणं परमानन्दमनुभवति। अतत्त्वज्ञस्तु चित्तस्थैर्यपरिपाकवृद्धिक्रमेण उत्तरोत्तराऽतिशायि सुखमनुभवन् सम्यक् परिपाके महावाक्यजन्यवृत्तिसमानाकारया अखण्डाकारवृत्त्या स्वात्मानं साक्षात्करोति। तेन च सकार्याऽविद्या निवर्तते। तथाच श्रुतिः— "ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यति निष्कलं ध्यायमानः" इति। "तस्याऽभिध्यानात् योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिः" इतिच। अथवा श्रवणादिना निश्चितं ब्रह्म प्रणवेन एकीकृत्य ध्यायन् तत्र चित्ते स्थिरीकृते प्रणवमात्रात्रयं विराडादित्रयेणैकीकृत्य पूर्वपूर्वमुत्तरोत्तरत्र प्रविलाप्य अर्धमात्रालक्षिते तुरीये साक्ष्याकृतं मकारं च प्रविलाप्य तस्मिन्नोतादियोगक्रमेण समाहितो यावत्साक्षात्कारोदयं भवेदिति राजयोगाख्यलाळनेन चित्तवशीकारप्रकारः ॥ १० ॥

अथ द्वितीयं हठयोगाख्यं दुर्दान्तस्य चित्तस्य दमनोपायं सद्दिक्ष्याह—मुक्त्वेति ॥

मुक्त्वा सङ्गं सहिष्णुः शुचिहितमितभुग्योगशास्त्रार्थदर्शी
पुण्ये निर्दोषदेशे यमनियमदृढः स्वासनस्थः प्रसन्नः।
प्राणायामक्रमेणाहृतचपलमनः स्थूलसूक्ष्मे निरुध्य
ध्यायन्नैकात्म्यसौख्यस्थिरगलितमना मोहबन्धं छिनत्ति ॥

सङ्गं=बहिर्मुखजनानां योगाभ्यासोत्साहविघातिभीरुजनानां च समागमं, मुक्त्वा=परित्यज्येत्यर्थः। अथवा—आसङ्गमिति पदच्छेदः। आसज्यते निबध्यते येन रागादिना विषयेषु स आसङ्गः तं मुक्त्वेत्यर्थः। तदुक्तं योगशास्त्रे,—

"जित्वा रागात्मनः शत्रून् कामादीन्योगमभ्यसेत्॥" इति ॥

सहिष्णुः=दृढतरोत्साहबलात् शीतोष्णमशकमक्षिकावृश्चिकवातातपाद्यभिघातान् मानादीन् प्राणनिरोधनादिजन्यक्लेशांश्च सहनशील इत्यर्थः। तदप्युक्तं योगशास्त्रे—

"अभियोगाद्दृढाभ्यासात्तत्रैव च विनिश्चयात्।
पुनः पुनरनिर्वेदात्सिध्येद्योगो न चान्यथा॥" इति॥

एवं च तीर्थयात्राग्रन्थाभ्यासाद्युत्साहोऽपि हेय एव। शुचिहितमितभुक्— शुचि=पवित्रं, हितं=पथ्यं, मितं=नात्यल्पबहुलं च भोज्यं भुनक्ति अभ्यवहरतीति तथोक्तः। अशुचेः कलञ्जमांसादेः देहपुष्ट्यादिहेतुत्वात् हितत्वेऽपि चित्तकालुष्यहेतुत्वात् हेयता। तदुक्तं पराशरेण—

"अन्नदोषेण चित्तस्य कालुष्यं सर्वदा भवेत्।
कलुषीकृतचित्तानां धर्मः सम्यङ्नभासते"॥ इति॥

एवं शुचेः पवित्रस्यापि रूक्षोष्णकट्वम्लादेर्रोगाद्युत्पादकत्वेन योगाभ्यासविघ्नहेतुत्वात् हेयत्वं॥ इदं च "कट्वम्ललवणात्युष्ण" इति भगवतैव दर्शितं। एवं "नात्यश्नतस्तु योगोऽस्ति" इत्यादिना मिताशननियमोऽपि तेनैव दर्शितः। योगशास्त्रार्थदर्शी=हैरण्यगर्भस्य पातञ्जलस्य वा सूत्रभाष्यादेरन्येषां च मुनिसाम्प्रदायिकग्रन्थानां सांप्रदायिकतदनुष्ठाननिपुणगुरुमुखात् अर्थं सम्यक् परिशीलितवान् सन्नित्यर्थः। अन्यथाहि स्वेच्छया अभ्यासे व्याध्याद्यन्तरायः स्यादित्यर्थः। ईदृशस्याधिकारिणः तदभ्यासयोग्यं स्थानमाह—पुण्येति॥ पुण्ये=पवित्रे सिद्धिप्रदत्वेन लोकशास्त्रप्रसिद्धे, निर्दोषे=मशकमक्षिकावृश्चिकवातातपाद्युपघातदोषशून्ये देशे। तथाच श्रुतिः—"समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः। मनोऽनुकूले न तु चक्षुःपीडने गुहानिरुद्धाश्रयणे प्रयोजयेत्॥" इति। पुराणेऽप्युक्तम्—

"न तोयवह्निसामीप्ये नजीर्णागारगोष्ठयोः।
न दंशमशकाकीर्णे न चैत्ये नच चत्वरे॥
नास्यसेत्पूतिगन्धादौ न स्थाने जनसङ्कुले।
केशभस्मतुषाङ्गारकीटकादिविवर्जिते॥
सर्वबाधाविरहिते सर्वेन्द्रियसुखावहे।
मनःप्रसादजनने स्रग्धूपामोदमोदिते॥" इति॥

तत्राष्टाङ्गयोगाभ्यासं दर्शयति—यमनियमेत्यादिना॥ तेच पतञ्जलिना दर्शिताः। "अहिंसासत्यास्तेयब्रह्मचर्याऽपरिग्रहा यमाः। शौचसन्तोषतपः

स्वाध्यायेश्वरप्रणिधानानि नियमाः । स्थिरसुखमासनम् । तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः । स्वविषयासंप्रयोगे चित्तस्वरूपानुकार इव इन्द्रियाणां प्रत्याहारः । देशबन्धश्चित्तस्य धारणा । तत्र प्रत्ययैकतानता ध्यानं । तदेव अर्थमात्रनिर्भासं स्वरूपशून्यमिव समाधिः" इति। एषां च सूत्राणां यथायथं तात्पर्यं स्फुटीकुर्मः । हिंसादिभ्यो निषिद्धधर्मेभ्यो योगिनं यमयन्तीति अहिंसादयो यमाः । दुःखजन्मादिहेतोः अशौचासन्तोषादेर्योगिनं नियम्य निष्कामधर्मे नियमयन्तीति नियमाः तैः दृढः= यैर्देहाभिमानादिभिरप्रकम्प्यः योगी भवतीत्यर्थः । तथाच पातञ्जलसूत्राणि—"तत्संनिधौ वैरत्यागः । शौचात्स्वाङ्गजुगुप्सा ।" इत्यादीनि॥ आसनं दर्शयति—स्वासनस्थ इति ॥

आसनानि च तावन्ति यावन्त्यो जीवजातयः ।

इति आसनस्याऽनेकविधत्वेऽपि सिद्धासनादिषु यदेव यस्य पुरुषस्य कायमनस्स्थैर्यसौख्यहेतुः तदेव तस्य स्वासनं॥ सिद्धाद्यासनानां चतुर्णां लक्षणमुच्यते—

"एकं पार्ष्णिमधःकृत्वा द्वितीयं वृषणोपरि ।
ग्रीवादर्धचबुकाभं सिद्धासनमितीर्यते ॥
दक्षिणं चरणं न्यस्य वामोरूपरि योगवित् ।
याम्योरूपरि वामं च पद्मासनमिदं विदुः ॥
कराभ्यां धारयेत्पश्चादङ्गुष्ठौ दृढबन्धवित् ।
भवेत्पद्मासनाद्स्माद्भ्यस्ताद्दृढविग्रहः ॥
जानूर्वोरन्तरे सम्यक्कृत्वा पादतले उभे ।
ऋजुकायो विशेद्योगी स्वस्तिकं तत्प्रचक्षते ॥
एकं पादमधःकृत्वा विन्यस्योरौ तथोत्तरम् ।
ऋजुकायो विशेद्योगी वीरासनमितीरितम् ॥
अथवाह्यासने यस्मिन् सुखमस्योपजायते ।
स्वस्तिकादौ तदभ्यास्य योगं युञ्जीत योगवित् ॥" इति ॥

आसनस्थैर्यस्य दृष्टादृष्टोपायं फलं चाह भगवान् पतञ्जलिः—"प्रयत्नशैथिल्याऽनन्तसमापत्तिभ्यां । ततो द्वन्द्वानभिघातः" इति । तस्यासनस्य

ग्रहकृत्यतीर्थयात्रास्नानगमनादिप्रयत्नो मानस उत्साहो विरोधीति तस्य-शैथिल्यं लौकिक उपायः, अन्यथा स उत्साहो देहमुत्थाप्य प्रवर्तयेदिति। फणासहस्रेण धरणीं धारयन्नास्ते योऽनन्तः सएवाहमस्मीति चिन्तनं अनन्तसमापत्तिः, तया आसनस्थैर्यं सम्पादकमदृष्टमुत्पद्यते। सिद्धे चासने शीतोष्णसुखदुःखमानावमानादिद्वन्द्वैर्नाभिहन्यते इत्यर्थः। प्रसन्नः= क्षुत्तृषाचिन्तालस्यादिभिरखिन्नः सन्नित्यर्थः। तदप्युक्तं योगशास्त्रे—

"नातितृप्तः क्षुधार्तो वा नविण्मूत्रप्रबाधितः।
नाध्वखिन्नो न चिन्तार्तो योगं युञ्जीत योगवित्॥ इति॥

तदुत्तरकृत्यमाह—प्राणायामेति। तत्क्रमश्चोक्तो मुनिभिः—

"इडया कर्षयेद्वायुं बाह्यं षोडशमात्रया।
धारयेत्पूरितं योगी चतुःषष्ट्या तु मात्रया॥
सुषुम्नामध्यगं सम्यक् द्वात्रिंशन्मात्रया शनैः।
नाड्या पिङ्गलया चैनं रेचयेत् योगवित्तमः॥
भूयो भूयः क्रमात्तस्य व्यत्यासेन समाचरेत्।
स्रवत्पीयूषधारौघं ध्यायंश्चन्द्रमसं भ्रुवि॥
वामायामेन योगीन्द्रः सुखमाप्नोति तत्क्षणात्।
ज्वलज्ज्वलनपुंजाभं शोधयन्नुष्णगुं हृदि॥
रविणा प्राणमाकृष्य पूरयेदौदरीं गुहाम्।
कुम्भयित्वा शनैः पश्चात् योगी चन्द्रेण रेचयेत्॥ इति॥

तदभ्यासेनैव नाडीगणशुद्धिं तत्फलं चाहुः—

"इत्थं मासत्रयाभ्यासादुभयायामसेवनात्।
शुद्धनाडीगणो योगी सिद्धप्राणोऽभिधीयते॥
यथेष्टधारणं वायोरनलस्य प्रदीपनम्।
नादाभिव्यक्तिरारोग्यं भवेन्नाडीविशोधनात्॥
रेचकादित्रयाभ्यासो नाडीशोधनपूर्वकः।
स्वेच्छोत्क्रमणपर्यन्तः प्रोक्तो योगानुशासने॥ इति॥

मात्राकालप्रमाणं चान्यत्रोक्तं—

"जानुम्प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ।
अङ्गुलिस्फोटनं कुर्यात्सा मात्रेति प्रकीर्तिता" ॥ इति ॥

स प्राणायामः सगर्भाऽगर्भभेदेन द्विधा । यथाहुः—

"जपध्यानादिभिर्युक्तं सगर्भं तं विदुर्बुधाः ।
तदपेतं विगर्भं तु प्राणायामं परे विदुः"॥ इति ॥

रेचकादिप्रकारश्च क्वचिदुक्तः—

"उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकम् ।
शून्यभावेन युञ्जीयाद्रेचकस्येति लक्षणम् ॥
वक्त्रेणोत्पलनालेन तोयमाकर्षयेद्यथा ।
एवं वायुर्गृहीतव्यः पूरकस्येति लक्षणम् ॥
नोच्छ्वसेन्निःश्वसेन्नापि नैव गात्राणि कम्पयेत् ।
एवंभावान्नियुञ्जीत कुम्भकस्येति लक्षणम् "॥ इति ॥

आकाशम्=औदरं, निरात्मकं=वायुरहितं । बाह्याभ्यन्तरभेदेन कुम्भको द्विविधः । तदुक्तम्—

"अपानेऽस्तंगते प्राणो यावन्नाभ्युदितो हृदि ।
तावत्सा कुम्भकावस्था योगिभिर्याऽनुभूयते ॥
बहिरस्तंगते प्राणे यावन्नापान उद्गतः ।
तावत्पूर्णसमावस्थं बहिष्टं कुम्भकं विदुः" ॥ इति ॥

तदभ्यासपरिचयप्रकारं पतञ्जलिराह— "बाह्याभ्यन्तरस्तम्भवृत्ति देशकालसंख्याभिः परिदृष्टो दीर्घसूक्ष्मः" इति । यत्र प्रश्वासपूर्वको गत्यभावः सः बाह्यः । यत्र श्वासपूर्वको गत्यभावः स आभ्यन्तरः। तृतीयस्तु स्तम्भवृत्तिः यत्रोभयाभावः सकृत्प्रयत्नाद्भवति । त्रयोऽप्येते देशेन परिदृष्टा इयानस्य देश इति ॥ यथा बहिर्द्वादशाङ्गुलपर्यन्तं श्वासः समाप्यते । अभ्यासेतु नाभेराधाराद्वा वायौ निर्गच्छति सति चतुर्विंशत्यङ्गुलपर्यन्ते षट्त्रिंशदङ्गुलपर्यन्ते वा समाप्तिः। एवमन्तरपि । तत्र बहिः तत्तत्प्रदेशधृततृणादिचलनेन गतिरनुमातुं शक्यते । अन्तस्तु नाभ्यादिप्रदेशचलनेन । एवं कालसंख्ययापि मात्रापरिगणनरूपया परिच्छिन्नो बोध्यः।

गे=असम्बन्धे सति चित्तपराधीनानां इन्द्रियाणां चित्तवदेव अर्थान्विषया-स्वादत्यागरूपे चित्तस्वरूपाऽनुकरणमिव सम्पद्यते स प्रत्याहारः इति। स्मृतावपि तल्लक्षणमुक्तम्—

"इन्द्रियाणां विचरतां विषयेषु निरर्गलम्।
बलादाहरणं तेभ्यः प्रत्याहारोऽभिधीयते॥" इति ॥

प्रत्याहारफलं च पतञ्जलिना सूत्रितं "ततः परमा वश्यता इन्द्रियाणाम्" इति। धारणाप्रकारश्च स्मर्यते—

"मनः सङ्कल्पकं* ध्यात्वा सङ्क्षिप्याऽऽत्मनि बुद्धिमान्।
धारयित्वा तथाऽऽत्मानं धारणा परिकीर्तिता "॥ इति

योगभाष्ये तु देशबन्धश्चित्तस्येति सूत्रं नाभिचक्र मूर्धादिदेशेषु बाह्ये वा विषये चित्तस्य वृत्तिमात्रेण बन्धो धारणा इति व्याख्यातम्॥ केचित्तु

"हृद्ग्रीवाकण्ठदेशेषु लम्बिकायां ततो नसि।
भ्रूमध्ये मस्तके मूर्ध्नि द्वादशान्ते यथाविधि ॥
धारणं प्राणमरुतो धारणेति निगद्यते।" इति ॥

हृदय कण्ठमूल कण्ठ तालुमूल भ्रूमध्य मस्तकाग्रेषु क्रमात् प्राणनिरोधं धारणेत्याहुः। एवं धारणात्रये ध्यानकर्तव्यतां दर्शयति-ध्यायन्निति। तत्र=ध्येयवस्तुनि प्रत्ययानां=चित्तात्मकचित्तवृत्तीनां एकतानता=नियतैकाकारता विजातीयप्रत्ययाऽनन्तरिता ध्यानमिति तल्लक्षणसूत्रार्थः। तथैवमुक्तं पुराणे—

"तद्रूपप्रत्ययैकाग्रसन्ततिश्चाऽन्यनिःस्पृहा।
तद्ध्यानं प्रथमैरङ्गैः षड्भिर्निष्पाद्यते नृप" ॥ इति ॥

ध्यानस्याऽऽनुषङ्गिकं सर्वोत्कृष्टफलं चोक्तं स्कान्दे—

"नाऽश्वमेधेन तत्पुण्यं न च वै राजसूयतः।
यत्पुण्यमेकध्यानेन लभेद्योगी स्थिरासने "॥ इति ॥

---

* सङ्कल्पकमनसा इति क्वचित्पाठः।

एवं ध्यानपरस्य तत्परिपाकरूपं संप्रज्ञाताऽसंप्रज्ञातसंज्ञकसमाधिद्वयं दर्शयति—ऐकात्म्येति। एकः=अद्वितीयः आत्मैव ऐकात्म्यं तदेव सौख्य मिति स्वार्थे, यावैभूमेत्यत्रेव अपरिच्छेदद्योतनाय भावे वा ष्यञ्। अद्वितीयप्रत्यक्चैतन्याऽऽत्मकपरमानन्दः तस्मिन् स्थिरं=निश्चलमेकाग्रमित्यर्थः। गलितं=उदकक्षिप्तलवणखण्डइवस्वरूपतिरोधानेनताद्रूप्यमापन्नंच मनो यस्य स तथोक्तः। अत्र स्थिरमिति संप्रज्ञातो, गलितमित्यसंप्रज्ञातश्च लक्षणेन दर्शितः। क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति हि चित्तस्य पञ्चभूमयः। तत्र लोकदेहवासनावशं आसुरसम्पत्तिमत् क्षिप्तं। निद्रातन्द्रादिग्रस्तं मूढं। कादाचित्कध्यानाङ्गयुक्तं क्षिप्ताद्विशिष्टतया विक्षिप्तं। तत्र हि क्षिप्तमूढयोः भूम्योः समाधिशङ्कैव नास्ति। विक्षिप्ते तु चेतसि यद्यपि विक्षेपोपसर्जनीभूतः समाधिर्वर्तते, तथापि स विक्षेपान्तर्गतत्वात् दहनान्तर्गतबीजशक्तिरिव क्षिप्रमेव नश्यति। एकाग्रेतु चेतसि परमार्थस्वरूपावद्योती कर्मबन्धात् श्लथयन् संप्रज्ञाताख्यः समाधिर्भवति। एकाग्रतालक्षणं च पतञ्जलिनोक्तम्॥"शान्तोदितौ तुल्यप्रत्ययौ चित्तस्यैकाग्रतापरिणामः"इति। शान्तः= अतीतः उदितः=वर्तमानः तावुभौ प्रत्ययौ समानविषयत्वात् यदि तुल्यौ=अत्यन्तसदृशौ भवतः तदा चित्तस्यैकाग्रताख्या चतुर्थी भूमिकेति तदर्थः। न च कादाचित्काऽव्यवहितताद्दशवृत्तिद्वयेनैव तत्सिद्धिः, विक्षिप्तेऽपि संभवादित्यभिप्रेत्य स एवाह—"सर्वार्थतैकाग्रतयोः क्षयोदयौ चित्तस्य समाधिपरिणामः" इति। रजसा चाल्यमानं हि चित्तं क्रमेण सर्वानर्थान् गृह्णाति। प्रयत्नविशेषेण रजोनिरोधेऽभ्यस्यमाने दिने दिने चित्तस्य सर्वार्थता क्षीयते एकाग्रता च वर्धते ताद्दशः परिणामः समाधिरित्यर्थः। इयं चैकाग्रता यद्यपि ध्यानेऽप्यस्ति, तथाप्यभिनवाभ्यस्ताऽनुवाकस्य असंवलितोच्चारणे शिष्यस्येव तत्र प्रयत्नविशेष आयासश्च। अस्मिन्समाधौ तु तत्र चिरन्तनाऽध्यापकस्येव स नास्तीति भेद इति केचित्। स्कान्देतु—

"शब्दादीनां च तन्मात्रा यावत्कर्णादिषु स्थिता।
तावदेव भवेद्ध्यानं स्यात्समाधिरतः परम्"॥ इति।

श्रोत्रादिसंनिकृष्टशब्दादेः सूक्ष्मरूपस्याप्यग्रहणेन उपलक्षिता ध्यानप-

रिपाकावस्था समाधिः। तद्ग्रहणयोग्यतायां तु ध्यानमेवेति भेद इत्युक्तम्। विद्यारण्यस्वामिनस्तु—समानाकारचित्तवृत्तिप्रवाहो द्विविधः विच्छिद्य विच्छिद्य जायमानः, सन्ततश्चेति। तावुभौ क्रमेण ध्यानसमाधी भवत इत्यूचुः। संप्रज्ञातसमाधिस्वरूपं च सर्वाऽनुभवयोगिना दर्शितम्—

"विलाप्य विकृतिं कृत्स्नां संभवव्यत्ययक्रमात्।
परिशिष्टं च सन्मात्रं चिदानन्दं विचिन्तयेत्॥
ब्रह्माकारमनोवृत्तिप्रवाहोऽहङ्कृतिं विना।
संप्रज्ञातसमाधिः स्यात् ध्यानाभ्यासप्रकर्षतः"॥ इति॥

श्रीमद्भगवत्पादा अप्येनमेवमभिनिन्युः।

"दृशिस्वरूपंगगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम्।
अलेपकं सर्वगतं यदद्वयं तदेव चाहं सततं विमुक्त ओम्॥

दृशिस्तु शुद्धोऽहमविक्रियात्मको नमेऽस्ति कश्चिद्विषयः स्वभावतः।
पुरस्तिरश्चोर्ध्वमधश्च सर्वतः सुपूर्णभूमा त्वज आत्मनि स्थितः॥

अजोऽमरश्चैव तथाऽजरोऽमृतः स्वयंप्रभः सर्वगतोऽहमव्ययः।
नकारणं कार्यमतीव निर्मलः सदैव तृप्तश्च ततो विमुक्त ओम्॥" इति॥

अयमेव धर्ममेघाख्यः। सर्वधर्मफलोपवर्षित्वात्। यत्तुपतञ्जलिना "वितर्कविचाराऽऽनन्दाऽस्मितारूपानुगमात्संप्रज्ञातः" इति भौतिकभूततन्मात्रेन्द्रियाऽहङ्कारविषयश्चतुर्विधः संप्रज्ञातसमाधिर्दर्शितः, सोन्तर्धानादिसिद्धिहेतुः,न मोक्षहेतुरिति नेह प्रपञ्चितः। अयं च समाधिः चित्तस्य सर्ववृत्तिनिरोधाऽऽमिमुख्यहेतुत्वात् संप्रज्ञातसमाधेरङ्गम्। ध्यानान्तास्त्वस्याऽसंप्रज्ञातसमाधेश्चाङ्गानि। तत्रापि प्रत्याहारान्तानि बहिरङ्गानि धारणादित्रयंत्वन्तरङ्गमिति "त्रयमन्तरङ्गं पूर्वेभ्यः" इति सूत्रयता पतञ्जलिनैव दर्शितम्॥ अथाऽसंप्रज्ञातसमाधिः किमुपायः किंस्वभावः इत्येतदपि स एवाऽसूत्रयत् "विरामप्रत्ययाऽभ्यासपूर्वः संस्कारशेषोऽन्यः" इति। विरामः=वृत्तीनामभावः तस्य प्रत्ययः=कारणं परवैराग्यसहकृतप्रयत्नविशेषः तस्याऽभ्यास =पुनःपुनः अनुष्ठानं तत्पूर्वकः=तज्जन्यः सर्ववृत्तिप्रत्यस्तमये तत्संस्कारमात्रशेषो निरोधः पूर्वस्मात् संप्रज्ञातसमाधेरन्योऽसंप्रज्ञातसमा

धिरिति तदर्थः॥ एवं च निर्वृत्तिकस्य मनसः क्षीरोदकवत् स्वरूपतिरोधानेन ब्रह्मण्यवस्थितिः असंप्रज्ञातसमाधिरिति फलितम्॥

ननु प्रतिक्षणपरिणामिनो हि सर्वे भावा ऋतेचिति शक्तेरितिन्यायात् व्युत्थानदशायां बाह्यनानार्थाऽऽकारतयेव निरुद्धस्य मनसः कीदृशः परिणामः स्यादित्याशङ्क्य स एवाह—"तस्य प्रशान्तवाहिता संस्कारात्" इति। यथा अग्नेः समिदादिप्रक्षेपे उत्तरोत्तरं वृद्ध्याख्यः परिणामः तदभावे तु प्रतिक्षणं शान्तिर्वर्धते, तथा निरुद्धचित्तस्यापि आत्मसाक्षात्कारोदयेन आत्यन्तिकविनाशपर्यन्तं उत्तरोत्तरमधिकः प्रशमः पूर्वपूर्वप्रशमसंस्कारस्योत्तरोत्तरं प्रशमहेतुत्वादिति तदर्थः। तथा निरुद्धचित्तस्य आत्मरूपतासम्पत्तिरपि श्रूयते—

"निरस्तविषयासङ्गं संनिरुद्धं मनो हृदि।
यदा यात्यात्मनो भावं तदा तत्परमं पदम्"॥ इति॥

अयमेव मनोनाश इत्याख्यायते। अयमेव हि समाधिः "यदा विनियतं चित्तम्" इत्यादिना भगवता प्रपञ्चितः। एनमेवह्यभियुक्ताः प्रशंसन्ति

"कुलं पवित्रं जननी कृतार्था विश्वंभरा पुण्यवती च तेन।
अपारसच्चित्सुखभूम्न्यनन्ते लीनं परे ब्रह्मणि यस्य चेतः"॥ इति॥

"यतो निर्विषयस्याऽस्य मनसो मुक्तिरिष्यते।
अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा"॥

"अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्।"
"ततस्तु तं पश्यति निष्कलं ध्यायमानः"॥ इत्यादि श्रुतिभ्यः॥

"आत्मा वाऽरे द्रष्टव्यः" इति ब्रह्मसाक्षात्कारमुद्दिश्य 'निदिध्यासितव्यः' इतिध्यानपरिपाक परकाष्ठालक्षण समाधेः विधानाच्च अयमेव समाधिःसकार्याऽविद्यालक्षण सर्वबन्धोच्छेदक्षम ब्रह्मात्मैक्यसाक्षात्कार जननेन मोक्षहेतुरित्यभिप्रेत्याह—मोहबन्धं छिनत्तीति। ज्ञानोदयस्वरूप एव बन्धनाशो नाऽतिरिक्त इतिद्योतनाय 'छिनत्ति' इति पदेनैव समाधिफलं ज्ञानं दर्शितम्॥ ननु संप्रज्ञातसमाधेः आत्ममात्राऽऽकार वृत्तिधारा रूपत्वात् स्वसमानाकारसाक्षात्कारजनकत्वं वक्तुमुचितम्। निरोधसमाधेस्तु सर्व-

वृत्तिप्रदामनरूपस्य सुषुप्तिकल्पस्य कथं तज्जनकत्वमुच्यते इति चेत् । न । स्वतः सिद्धायाः सम्रात्मना चित्तस्यात्माऽऽकारताया बाह्यसर्ववृत्तिनिरोधे निष्प्रत्यूहं प्रवृत्ताया निवारयितुमशक्यत्वेनाऽदोषात् ॥ तदुक्तं श्रेयोमार्गे—

"आत्माऽनात्माकारं स्वभावतोऽवस्थितं सदा चित्तम् ।
आत्मैकाकारतया तिरस्कृताऽनात्मदृष्टि विदधीत" ॥ इति ॥

अथ निदिध्यासनपरिष्कृतस्य मनस एव साक्षात्कारे करणत्वम्, "मनसैवेदमाप्तव्यं" "मनसैवाऽनुद्रष्टव्यं" "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इत्यादिश्रुतेः। अतएव "नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा" इत्यादिश्रुतीनामपरिष्कृतमनोविषयत्वं, मनसो हि सुखादिसाक्षात्कारे कारणत्वं क्लृप्तं, नशब्दस्य इत्याचार्यवाचस्पतिमिश्राः ॥ विवरणानुसारिणस्तु–"तंत्वौपनिषदं पुरुषं पृच्छामि" "नाऽवेदविन्मनुते तं बृहन्तम्" इत्यादिश्रुतेः "सहकार्यन्तरविधिः" इत्यधिकरणे निदिध्यासनस्य श्रवणसहकारित्वव्यवस्थापनात् सुखदुःखादीनां मनो वृत्तित्वेन तद्ग्रहे मनसः करणत्वाऽसंभवेन साक्षिमात्रवेद्यत्वस्य अवश्यवक्तव्यतया मनसः क्वचिदपि स्वातन्त्र्येण करणत्वाऽक्लृप्तेः प्रमाणान्तरसहकारेणैव ग्राहकत्वक्लृप्तेश्च क्लृप्तप्रमाणभावस्य महावाक्यस्यैव निदिध्यासनाऽन्त्यक्षणे स्मृतस्याऽऽत्मसाक्षात्कारे करणत्वं शाब्दापरोक्षव्यवस्थापनादित्याहुः। अयंच समाधिः अकृतसाक्षात्काराणां साक्षात्कारहेतुः। कृतसाक्षात्काराणां तु जीवन्मुक्तिसुखोपभोगहेतुः। यद्यपि ब्रह्मसाक्षात्कारेणैव सकार्याऽविद्याबाधान्मुक्तिः सम्पन्ना, तथापि प्रारब्धशेषभोगाय ब्रह्मविद्यासंप्रदायाऽनुच्छित्तये च "तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ सम्पत्स्ये" इति श्रुत्या दग्धपटन्यायेन अविद्यालेशप्रयुक्तबाधितप्रपञ्चानुवृत्तिर्यावदायुरभ्युपगम्यते । तत्र च कर्मवैचित्र्यात् चित्तविक्षेपे अपरोक्षीकृतमपि आत्मसुखं न सम्यगनुभवितुं शक्यमिति समाध्यभ्यासः तत्त्वज्ञानामपि ननिष्फलः। अत एव हि विद्यारण्यस्वामिभिः वसिष्ठोक्तासु शुभेच्छा विचारणा तनुमानसा सत्वापत्त्यसंसक्ति पदार्थाभावनी तुर्यगामिनी संज्ञक सप्तयोगभूमिकासु चतुर्थीभूमिकामारभ्य क्रमेण भूमिकाचतुष्टयं प्राप्ताः—ब्रह्मवित्, ब्रह्म-

विद्वरः, ब्रह्मविद्वरीयान् , ब्रह्मविद्वरिष्ठः इति कृतसाक्षात्कारा एव विक्षेपोपशमतारतम्यात् चतुर्धा व्यपदिष्टाः। आसां च सप्तभूमिकानां लक्षणान्याह वसिष्ठः—

"स्थितः किं मूढ एवास्मि प्रेक्षेऽहं शास्त्रसज्जनैः।
वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः॥
शास्त्रसज्जनसम्पर्कवैराग्याऽभ्यासपूर्वकम्।
सद्विचारप्रवृत्तिर्या प्रोच्यते सा विचारणा॥
सविचारशुभेच्छाभ्यामिन्द्रियार्थेषु सक्तता।
यत्र सा तनुतामेति प्रोच्यते तनुमानसा॥
भूमिकात्रितयाभ्यासाच्चित्तेऽर्थाद्विरतेर्वशात्।
सत्त्वात्मनि स्थिते शुद्धे सत्त्वाऽऽपत्तिरुदाहृता॥
दशाचतुष्टयाभ्यासादसंसर्गफला तु या।
रूढसत्त्वचमत्कारा प्रोक्ताऽसंसक्तिनामिका॥
भूमिकापञ्चकाभ्यासात्स्वात्मारामतया भृशम्।
आभ्यन्तराणां बाह्यानां पदार्थाऽभावना परा॥
परप्रयुक्तेन चिरं प्रयत्नेनाऽवबोधनम्।
पदार्थाऽभावनी नाम षष्ठी भवति भूमिका॥
भूमिषट्कचिराऽभ्यासादन्यस्याऽनुपलम्भनात्।
यत्स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः"॥ इति॥

साधनचतुष्टयसम्पत्तिः प्रथमा। सन्यासपूर्वकश्रवणसिद्धिर्द्वितीया। मनननिदिध्यासनसम्पत्तृतीया। साक्षात्कारश्चतुर्थी। निर्विकल्पकसमाधेः स्वत एव नियतकालमुत्थाने पञ्चमी। पार्श्वस्थबोधनेन व्युत्थाने षष्ठी। स्वतः परतोऽपि चिरमनुत्थाने सप्तमी इति निष्कर्षः। तत्र आद्यभूमित्रयं प्रपञ्चे सत्यताबुद्ध्यबाधनात् जाग्रदित्युच्यते। चतुर्थी तु ज्ञानबाधितप्रपञ्चस्य स्वप्न इव संस्कारमात्रेण मिथ्याभूतस्य भानात् स्वप्न इति। पञ्चमी सुषुप्तिरिति। षष्ठी गाढसुषुप्तिरिति द्वैतैक्यवर्जिताऽवस्थेति चाऽऽख्यायते। यथाऽऽह वसिष्ठः—

"भूमिकात्रितयं त्वेतद्राम! जाग्रदिति स्थितम् ।
यथावद्भेदबुद्ध्येदं जगज्जाग्रति दृश्यते ॥
विच्छिन्नशरदभ्रांशविलयं प्रविलीयते ।
सत्तावशेषं यस्त्वेतच्चतुर्थी भूमिकामिते ॥ इतेऽन्यत्रापि ॥
पञ्चमीं भूमिकामेत्य सुषुप्तिपदनामिकाम् ।
शान्ताऽशेषविशेषांशः तिष्ठत्यद्वैतमात्रके ॥
अन्तर्मुखतया नित्यं बहिर्वृत्तिपरोऽपि सन् ।
परिश्रान्ततया नित्यं निद्रालुरिव लक्ष्यते ॥
कुर्वन्नभ्यासमेतस्यां भूमिकायां विवासनः ।
षष्ठीं गाढसुषुप्त्याख्यां क्रमात्पतति भूमिकाम् ॥
यत्र नासन्नसद्रूपो नाहं नाप्यनहङ्कृतिः ।
केवलं क्षीणमनन आस्ते द्वैतैक्यवर्जितः ॥
अन्तःशून्यो बहिःशून्यः शून्यकुम्भ इवाऽम्बरे ।
अन्तःपूर्णो बहिःपूर्णः पूर्णकुम्भ इवाऽर्णवे ॥
सप्तमीं तां परानन्दां भूमिकामधिरोहति"॥ इति ॥

केचित्तु विदेहकैवल्यमेव सप्तमीं भूमिकामाहुः। तस्मात्समाध्यभ्यास एव परमपुरुषार्थहेतुः तत्रमुमुक्षुभिर्युक्तनस्त्वेश्च निरन्तरं कार्य इति भावः॥

एवं मुख्याधिकारित्वात श्रवणाद्वा, मध्यमाद्यधिकारतारतम्यात्तदावर्तनात् मननसहकारात् राजयोगहठयोगाभ्यासपरिपाकाद्वा यथाकथञ्चित् ब्रह्मसाक्षात्कारे सम्यग्वृत्ते सति पश्चाज्जीवन्मुक्तिसुखभोगेच्छया स ब्रह्मवित् समाधिनिष्ठो वाऽस्तु लोकसङ्ग्रहाय वर्णाश्रमाद्यनुरूपविहित कर्मपरः प्रारब्धोपनीतमनिषिद्धं विषयजातं स्रक्चन्दनादि यथाकाममुपभुञ्जानो वा कालं क्षपयतु सर्वथा तस्य पुनर्बन्धप्रसक्तिर्नास्त्येवेत्याह—निरवधीति ॥

मू० ॥ निरवधिसुख भूमाऽनन्त संवित्परात्म-
न्यनुभवमधिरूढे वाक्यतो योगतो वा ।

भवतु दृढसमाधि र्लोकसङ्ग्राहको वा
भजतु विषयजातं नैति भूयोऽपि बन्धम् ॥१२॥

निरवधिः=दैशिकादिपरिच्छेदशून्यः यः सुखभूमा तथाविधो यो अनन्तः=पूर्णसंविद्रूपः परः=अनृतादुत्कृष्टः परमार्थरूप आत्मा तस्मिन् वाक्यतः=विहितविचारनिर्णीततात्पर्यकमहावाक्यात्, योगतः=दर्शितद्विविधयोगाभ्यासपरिपाकाद्वा अनुभवं=साक्षात्कारं अधिरूढे सति स आत्मवित् दृढः=अचलः समाधिः दर्शिताऽसंप्रज्ञातसमाधिः यस्य स तथाशीलो यावद्देहपातं भवतु। अथवा लोकहिताय सदाचारधर्म ज्ञान संप्रदाय प्रवर्तनाय तदाचरणोपदेशादिना लोकानां=सज्जनानां सङ्ग्राहकस्सन् विषयजातं=अनिषिद्धभोगसाधनानि भजतु=सेवताम्। तथाप्यविद्या काम कर्म वासनादि पुनर्जन्मबीजाभावात् भूयः=पुनरपि बन्धं=उत्क्रमणपुनर्जन्मादिसांसारिकबन्धनं नैति=नप्राप्नोति। तथा च श्रुतिः "योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयंते ब्रह्मैव सन्ब्रह्माप्येति" इति ॥ १२ ॥

अतिदुर्लभत्वात्, शाश्वतत्वात्, समस्तसुखोत्कर्षपरम्परावधित्वाच्च आत्मलाभ एव परमो लाभः नाऽतःपरोऽस्तीत्याह—अपीति ॥

मू० ॥ अपि भूपरमाणुभूरिसंख्ये-
ष्वपयातेषु चतुर्मुखेष्वलब्धात् ।
अपदुःखनिरन्तसौख्यसिंधोः
न च लाभोऽस्ति परो निजात्मलाभात् ॥१३॥

भुवः=कृत्स्नाया भूमेः अणुशो विभज्यमानायाः परमाः सौक्ष्म्यावधिभूता ये अणवः तेभ्योऽपि भूरिसंख्येषु=अधिकसंख्येषु चतुर्मुखेषु=द्विपरार्धकालजीविषु हिरण्यगर्भेषु महाकालप्रवाहेण नीयमानेषु अपयातेष्वपि=गतेष्वतिक्रान्तेष्वपि अनादिकालादारभ्य जन्मपरम्परासु भ्रमता जीवेन कदाचिदपि प्रागलब्धात्=अप्राप्तादित्यर्थः। न केवलमस्य दौर्लभ्यादेव सर्वोत्कर्षः, अपि तु सर्वदुःखप्रशमनोपलक्षितनिरतिशयानन्दरूपत्वादपा-

त्याह—अपदुःखेति ॥ अपगतं भ्रान्त्युपकल्पितं दुःखं यस्मात् तथाविधं यन्निरस्तौपम्यं=अनवधिसुखं तस्य सिन्धोः=समुद्रात् निजात्मलाभात्=स्वात्मप्राप्तेः परः=उत्कृष्टः लाभो न वाऽस्ति=नास्त्येवेत्यर्थः॥ तथाहि उक्तमापस्तम्बाचार्यैः—"आत्मलाभान्न परं विद्यते" इति ॥ १३ ॥

स चाऽऽत्मलाभो नवाद्यधनादिवदप्राप्तप्राप्तिः, अपितु प्राप्तस्यैव मोहादप्राप्तप्रायस्य ज्ञानमेव लाभ इति सदृष्टान्तोपपत्तिकमाह—मोहमात्रादिति ॥

मू०॥ मोहमात्रादलब्धस्य लाभस्त्वस्मि
न्स्वात्मनः कण्ठचामीकरन्यायतः ।
बोधमात्रं तदाक्रम्य यस्माच्छ्रुतिः
प्राह भूयः पदेनाऽनुविन्देदिति ॥ १४ ॥

आत्मत्वादेव नित्यलब्धस्य स्वात्मनः मोहमात्रात्=अनाद्यविद्यारूपात् अलब्धस्य=अप्राप्तस्य अस्मिन्=पूर्वोक्तो लाभः बोधमात्रं=साक्षात्कार एव। तत्र लौकिकन्यायसिद्धं दृष्टान्तमाह—कण्ठचामीकरन्यायत इति। यथा कश्चित् स्वकण्ठाऽवलम्बमानमेव चामीकरं=स्वर्णनिष्कं विस्मृत्याऽन्वेषमाणो अन्येन दृष्ट्वा 'कण्ठ एव ते चामीकरमस्ति' इति प्रबोधितः न तल्लाभाय पुनर्यतते, प्रबोधमात्रेणैव लब्धं मत्वा हृष्यति तन्न्यायेनेत्यर्थः॥ नन्वेवं किमर्थं गौणो लाभो वर्ण्यते अर्चिरादिमार्गेण गत्वा उपासक इव ब्रह्म प्राप्नोतीत्याशङ्क्य नाऽयं पक्षः श्रुतेरभिमत इत्याह—तदिति। यस्मात्कारणात् श्रुतिः—"आत्मेत्येवोपासीत" इति विद्यासूत्रेण तत्=ज्ञानं, आक्रम्य=प्रस्तुत्य "अनेन ह्येतत्सर्वं वेद यथा ह वै पदेनाऽनुविन्देत्" इत्यनेन आत्मना विदितेन एतत्सर्वं वेदैव नान्यद्वेद्यमवशिष्यत इत्युक्त्या भूयस्तदनन्तरं यथा गवाद्यन्वेषमाणः पदेन पांस्वादिन्यस्तखुरलाञ्छनेन अन्विष्य तद्विन्देदिति लाभार्थकेन * विन्दतिना ज्ञानदृष्टान्तं लाभं प्राहेत्यर्थः। तथा च तत्रभाष्यं, "आत्मनो ह्यलाभोऽज्ञानमेव, तस्माज्ज्ञानमेव आत्म

* लाभार्थक "विद्लृ" धातुना इत्यर्थः।

नो लाभो नाऽनात्मलाभ इव अप्राप्तप्राप्तिः" इति। उपासकानां "कार्यं बादरिरस्य गत्युपपत्तेः" इति हिरण्यगर्भप्राप्तेरेव व्यवस्थापनात्। ब्रह्मविदस्तु विनैव चोत्क्रान्तिं ज्ञानेन पूर्वमेव ब्रह्मप्राप्तेः सिद्धत्वात्। "अत्र ब्रह्म समश्नुते न तस्य प्राणा उत्क्रामन्ति। अत्रैव समवनीयन्ते" इति हृदयप्रदेश एव उपाधिनाशेन ब्रह्मप्राप्ति श्रवणाच्चेति भावः ॥ १४ ॥

ननु ज्ञानेन नाशितमप्यज्ञानं प्रलये नष्टं जगदिव पुनरुद्भवेदित्याशङ्कां वारयन् तद्बाधस्वरूपं निर्धारयति—बाधितमिति ॥

मू० ॥ बाधितं स्यादसत् ध्वस्तवैधर्म्यतो
मोहबाधोऽपि न ध्वंसरूपोऽपरः।
बाधबुद्धिश्च नाऽभावमात्रप्रथा
स्यादभावोऽप्यधिष्ठानरूपोऽथवा ॥ १५ ॥

यद्बाधितं तदत्यन्ताऽसदेव भवति न संस्कारेणाप्यवशिष्यते इति जगत्प्रलयवैषम्यमित्यर्थः। तदेवाह—ध्वस्तवैधर्म्यत इति। कारणे तिरोभूतं सदेव हि कार्यं ध्वस्तमित्युच्यते, न तु तथाबाधितमिति वैधर्म्यादित्यर्थः॥ ननु बाधोऽपि ध्वंसरूप एवास्त्वित्याशङ्क्य प्रतिषेधति—मोहेति। मोहस्य=अज्ञानस्य बाधः=ध्वंसरूपः नैयायिकादिपरिकल्पितो जन्याऽभावो न भवति। तथा हि सति तेनैव मुक्तौ सद्वितीयता स्यात्। किन्तु केवलाधिष्ठानरूपः। तथा हि तस्य त्रैकालिकविषयत्वं "नासीदास्तेभविष्यति" इति प्राग्वर्णितमितिभावः। अपिशब्दात् ध्वंसस्यापि चरमभावविकाररूपत्वमेव नाऽभावरूपत्वं, सत एव तेन तिरोधानोपपत्तेः नत्वभावत्वं। निरुपाख्यस्योत्पत्त्यादिधर्मसम्बन्धस्य, प्रतियोग्यधिकरणादिसम्बन्धस्य, अत्यन्ताभावभेदादिवैलक्षण्यस्य चाऽऽधारत्वायोगादिति ध्वनितम् ॥ ननु त्रैकालिकात्यन्ताभाव एव प्रथमानो बाधोऽस्तु, तथापि तेनैव सद्वितीयतेत्याशङ्क्याह—बाधबुद्धिश्चेति। नाऽभावमात्रप्रथा बाधबुद्धिः। वायौ रूपं नास्तीति प्रथाया अपि तथात्वप्रसङ्गात्। अपितु तदारोपाधिष्ठाने तदभावप्रथेत्यवश्यं वाच्यम्। एवं तर्ह्यवश्याऽपेक्षिताऽधिष्ठानतत्त्वप्रथैव अव्यभिचरिता बाधबुद्धिरस्तु नाऽभावप्रथा। अभावस्याप्यनिर्वचनीयतया मायिकत्व-

व्यवस्थापनेन मायानिवृत्तौ मिथ्यत्वयोगादित्यर्थः ॥ ननु "नासीदस्तिभविष्यति" इति सकार्याऽविद्यानिवृत्तेः वार्तिके नञा उल्लेखादभावप्रथा आवश्यकी वाधबुद्धाविति अत्यन्तस्तुभ्यत्वित्यभिप्रेत्याह—स्यादिति । अथवेति पक्षान्तरे ॥ घटाभावे घटो नास्तीति प्रत्यये अभेदेऽपि "शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः" इतिविकल्परूपस्य आधाराधेयभावप्रत्ययस्य दर्शनात् भूतले घटो नास्तीति प्रत्ययेऽपि भूतलस्यैव घटसापेक्षनिरपेक्षरूपाभ्यां तथा व्यपदेशप्रत्यययोः सिद्धेःनाधिकरणादन्योऽभावोऽस्तीत्यर्थः। अथवा आरोपाधिकरणे वाधबुद्धिविषयोऽभावोऽधिष्ठानरूप एव । मिथ्याभूतस्य प्रतियोगिनो वस्तुतः सत्त्वाभावप्रतियोगित्वादिनिरूपकत्वायोगात् । अभावस्यापि मिथ्यात्वे त्वधिष्ठानमात्रस्यैव परिशेषादितिभावः ॥ १५ ॥

"तथा विद्वान् पुण्यपापाभ्यां विमुक्तो निरञ्जनः परमं साम्यमुपैति" "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा" इति श्रुतिस्मृतिभ्यां ज्ञानेन सञ्चितसर्वकर्मनाशः। "तद्यथा पुष्करपलाश आपो न श्लिष्यन्ते एवं हैवंविदि पापं कर्म न श्लिष्यते"।

" यस्य नाऽहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वापि स इमाँल्लोकान् न हन्ति न निबध्यते" ॥

इति श्रुतिस्मृतिभ्यां प्रारब्धवेगबलेन क्रियमाणस्य कर्मणोऽसंश्लेषः, प्रारब्धफलस्य तु भोगेनैव क्षय इति दर्शयति—कर्मजातमिति ॥

मू० ॥ कर्मजातं समारब्धदेहेतर-
त्सत्वरं भस्मतामेति बोधाग्निना ।
श्लिष्यते नैष्यताप्येष बोधोज्वलः
कर्मणा जीवनेनेव पद्मच्छदः ॥ १६ ॥

प्रारब्धदेहेतरत्सत्वरं भस्मतामेति बोधाग्निना श्लिष्यते न, समारब्धो ज्ञानिदेहो येन स्वफलभोगाय तत् समारब्धदेहं=प्रारब्धकर्म, तस्मात् इतरत्=अन्यत् प्राग्बोधोदयात् इह जन्मनि प्राक्तनजन्मपरम्परासु च सञ्चितं= कर्मजातं=सुकृतदुष्कृतरूपसर्वकर्मवृन्दं,बोधाग्निना=ज्ञानवह्निना,सत्वरं=शीघ्रं स्वोदयसमकालमेवेत्यर्थः। भस्मतां=नाशं एति=गच्छति। बोधेन=असङ्गत्वि

न्मात्रवस्तुगोचरज्ञानेन, उज्वलः निर्मलः एषः=तत्त्ववित् एष्यता=भाविना पुण्यपापकर्मणा, न श्लिष्यते=न सम्बध्यते। तत्र दृष्टान्तः, यथा जीवनेन= जलेन, पद्मच्छदः=पुष्करपलाशं न श्लिष्यते, तद्वदित्यर्थः ॥ १६ ॥

नन्वस्तु प्रारब्धकर्मशेषः, तथापि भोगनिमित्तस्य द्वैतस्य बाधितत्वात् कथं भोगसिद्धिः, मूलाऽज्ञानोच्छेदे कथं वा प्रारब्धपरिशेष इत्याशङ्कां दृष्टान्तेन वारयति—चोरबाध इति ॥

सू० ॥ चोरबाधेऽपि तज्जन्यभीत्यादिव-
चेलदाहेऽपि भस्मेव चेलाकृति।
ज्ञानिनां विश्वमादेहपातं स्वतो
बाधितत्वेऽपि चाऽऽरब्धभोगक्षमम् ॥ १७ ॥

यथा स्वप्ने स्वस्य वधबन्धादौ प्रवृत्ततया प्रतीतस्य चोरस्य तत्कालमेव प्रबोधेन बाधे वृत्तेऽपि किञ्चित्कालं भीतिः तत्प्रयुक्तहृदयकम्पादिश्चानुवर्तते। यथा वा चेलस्य=पटस्य दाहेऽपि चेलस्य आकृतिरिवाकृतिर्यस्य तथाभूतं भस्म किञ्चित्कालमुपलभ्यते। एवं ज्ञानिनामपि भोगनिमित्तं विश्वं स्वतो बाधितत्वेऽपि आदेहपातं=जीवनकालावधि देहारम्भककर्मणा आरब्धस्य=सुखदुःखादेः भोगक्षमं=प्रत्यापनसमर्थं–अनुवर्तत इत्यर्थः। तथा च "तस्य तावदेव चिरम्" इति श्रुतिबलात् विदुषां देहादिदर्शनाच्च, प्रारब्धस्य चेलदाहे चेलांशभस्मन इव अविद्यालेशस्य च प्रारब्धप्रतिबद्धस्य प्रातिभासिकप्रपञ्चस्थितिनिर्वाहकस्य किञ्चित्कालं परिशेषोऽभ्युपगम्यत इति केचित्। अन्ये तु अविद्यायाः श्रवणादिनाऽसत्त्वापादकावरणांशनाशः, साक्षात्कारेण त्वभानापादकावरणांशनाशः, विदुषः प्रायणकालोत्पन्नसाक्षात्कारवृत्त्या विक्षेपांशनाश इति त्रिधा अविद्यानाश इत्याहुः। परे तु अविद्याया निःशेषनाशः, कार्यप्रपञ्चस्यैव तु भगवच्छक्तिप्रतिबद्धद्रौण्यस्त्रनिर्दग्धपार्थरथस्येव यावत्तद्भोगमनुवृत्तस्य प्रतिबन्धाऽपगमादेव निवृत्तिः छत्रापाये छायाभाववदित्याहुः ॥ १७ ॥

नन्वस्तु प्रारब्धप्रयुक्तो विदुषोऽपि देहादिद्वैतप्रपञ्चः, तथापि तत्राऽहं ममेतिद्विविधाऽध्यासमन्तरेण हानोपादानादिव्यवहारासिद्धेः कथं भोग-

सिद्धिः । तथाचोक्तं भगवद्भिर्भाष्यकारैः, "देहेन्द्रियादिषु अहंममाभिमानहीनस्य प्रमातृत्वाऽनुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः" इति । यदि च जीवनान्यथानुपपत्त्यैव अध्यासोऽप्यभ्युपगम्येत, तर्हि सम्पन्नः पुनर्बन्धहेतुः अस्मदादिसाम्यापत्तेरित्याशङ्क्याह— जीवत इति ॥

मू० ॥ जीवतोऽप्यस्य नष्टात्मबुद्धिस्तनौ
वामलूरेऽप्यहेर्निर्ल्वयिन्यामिव ।
मोहमात्रात्परे कल्पयन्त्यस्य चे
द्देहितामस्तु तद्धानिरस्येह का ॥ १८ ॥

जीवतः=कर्मशेषभोगाय देहे प्राणान् धारयतोऽप्यस्य तत्त्वविदः तनौ=स्वदेहे आत्मबुद्धिः=देवदत्त एवाहं मनुष्य एवाह मित्येवं रूपोऽन्येषामिव दृढतरोऽध्यासो नहि=नास्त्येव । अत एव ह्यसौ प्रियाऽप्रियप्राप्तिनिमित्तहर्षविषादाभ्यां न युज्यत इति वक्ष्यति । तत्र"तद्यथाऽहिनिर्ल्वयिनी वल्मीके मृता प्रत्यस्ता शयीत एवमेवेदं शरीरं शेते । अथायमशरीरोऽमृतः प्राणो ब्रह्मैव" इति श्रुतिदर्शितं दृष्टान्तमाह—वामलूरेऽपीति । अहेः=सर्पस्य परित्यागात्प्राग्देहभावेन अहंबुद्धिग्राह्यायामपि परित्यागोत्तरं अहिनिवासे वामलूरे=वल्मीकेऽपि पतितायां अतएवाऽजस्रं स्वसंयुक्तायामपि निर्ल्वयिन्यां=निर्मोकत्वचि, यथा नाऽऽत्मबुद्धिस्तद्वदित्यर्थः । तथाचाऽस्य भोगसिद्धिर्दारुपुत्रिकासंयुगक्रीडन इव शिथिलतरेणैव तात्कालिकाऽध्यासाऽऽभासेन भविष्यतीति भावः ॥

ननु श्रुतिपुराणादिषु जनकयाज्ञवल्क्यप्रभृतीनां इन्द्रादीनां च तत्त्वज्ञत्वेन प्रसिद्धानामपि गुरुतराऽऽरम्भराज्याङ्गसंभरणपूर्विका जयलाभख्यात्याद्यर्था च प्रवृत्तिः श्रूयते । आचार्यप्रभृतीनामपि प्रतिवादिनिराकरणे सिद्धान्तस्थापनादौ च सोत्साहाभिनिवेशपूर्विकैव प्रवृत्तिर्दृश्यत इति कथन्नतेषामस्मदादिवद्देहित्वमित्याशङ्क्य परिहरति-मोहमात्रादिति । परे=अन्ये द्रष्टारःस्वकीयमोहमात्रात्=अज्ञानवैभवात् अस्य=तत्त्वज्ञस्य देहितां स्वस्वकर्मोपभोगाऽनुरूपां कल्पयन्तिचेत्, अस्तुनाम । तत्=ततः, अस्य=तत्त्वज्ञस्य का हानिः । न स्वोपभोगार्थः तेषां तादृशगुरुतरारम्भाभिनिवेशः ।

किन्त्वनुग्राह्यजनाऽदृष्टनिमित्तः तन्मोहमात्रकल्पितः। कृतकार्याणां तेषां पुनःशरन्मेघनदीनामिव स्वाभाविकयोः औदासीन्यस्वच्छतयोर्दर्शनादिति भावः ॥ १८ ॥

नन्वस्तु तत्त्वज्ञानं तथापि प्रारब्धकार्यापरिहारात् कदाचित् बलवत्तरेण तेन दैवतमहर्ष्याद्यपराधसम्पत्तौ तत्कोपेन जयविजययोर्ययातिनहुषादीनां च स्वपदभ्रंश रक्षस्सर्पादि योनिप्राप्तिवत् तत्त्वज्ञस्यापि सा संभाव्येतेत्यनियतफलत्वं तत्त्वज्ञानस्य दुर्वारमेवेत्याशङ्क्य श्रुत्यैवाऽस्य परिहार उक्त इत्याह—ईशतेइति ॥

मू० ॥ ईशते ज्ञाततत्त्वस्य नाऽभूतये
यत्नवन्तोऽपि सर्वेऽपि देवाऽसुराः।
को हि नामाऽऽत्मनोऽनिष्टकारी भवे-
दात्मभूतो* यतिस्त्वेष तेषामपि ॥ १९ ॥

ज्ञाततत्त्वस्य=कृताऽऽत्मतत्त्वसाक्षात्कारस्य पुरुषधौरेयस्य अभूतये=अनैश्वर्याय अहितायेत्यर्थः। यत्नवन्तः=सर्वैः साधनैः संभूय यतमाना अपि सर्वेऽपि देवाऽसुराः महाप्रभावत्वेन प्रसिद्धा अपि न ईशते=न समर्था भवन्ति। किं पुनरेकैकः कोपमात्रेणेत्यर्थः। कथमस्य ईदृशं सामर्थ्यमिति चेत्? नेदं तादृशसामर्थ्यप्रयुक्तं, किंतु नित्याऽद्वेष्यनिरुपाधिसर्वप्रेमास्पदाऽऽत्मभावप्रयुक्तमित्याह—कोहीति। इह जगति को हि नाम आत्मनः=स्वस्य अनिष्टकारी=प्रतिकूलाऽऽचरणशीलः भवेत्। स्वानिष्टाऽऽचरणस्य केनापि कर्तुमशक्यत्वादित्यर्थः। ननु देवासुरैः स्वानिष्टाचरणस्य कर्तुमशक्यत्वेऽप्यस्य अनिष्टाचरणे को विरोध स्तत्राह—आत्मभूत इति ॥ एषः=तत्त्वज्ञः यतिः=संन्यासी तु तेषां=देवासुराणां, अपिशब्दात्सर्वप्राणिनां च आत्मभूत एव नान्यइति नानिष्टमस्य कर्तुं शक्यमित्यर्थः। यतिग्रहणं यतीनामेव विशेषतो ज्ञानाधिकारात्। यत इति वा पाठो हेत्वर्थः। तथा च श्रुतिः—"तस्य हन देवाश्च नाऽभूत्या ईशते आत्मा ह्येषां स भवति" इति। तथाहि भृगुणा पादेनापि प्रहृतो भगवान् तुतोषैव न चुकोपेति प्रसिद्धम् ॥ १९ ॥

* यतः इत्यपि पाठान्तरम्।

अभ्युपेत्याप्येतदुक्तं, वस्तुतस्तु तत्पक्षस्य न देवाद्यपराधप्रसक्तिः तद्धेतुरागादिदोषाणां क्षीणत्वादित्यभिप्रेत्याह—रागेति ॥

मू० ॥ राग लोभ प्रमादादि दोषक्षया-
द्यायमासज्जते दुश्चरित्रे क्वचित् ।
साधुवत्साधुचारित्र्यरक्षापरः
साधुमार्गेण संस्कारतो वर्तते ॥ २० ॥

अयं=विद्वान्, क्वचिदपि=देशे काले वा दुश्चरित्रे=शास्त्रनिषिद्धाचरणे पराऽनिष्टाचरणे वा नाऽऽसज्जते=न प्रसक्तो भवति । कुतः? राग लोभ प्रमादादीनां=भोगलाभपरत्वाऽपराधादिहेतूनां दोषाणां क्षयात्=आत्यन्तिकोच्छेदात् । "यः बाल्ये सुमधुरः पाके तस्य कुतोऽम्लता" इति न्यायेन ज्ञानोदयात्प्राक् अभ्यासकालेऽपि यो रागलोभादिदुष्टो नाभूत्स तत्परिपाके महाभाग्यफलज्ञानोदये तथाभविष्यतीति संभावनाप्यसंभावनीति भावः ॥ स तर्हि कथमास्ते तत्राह—साधुवदिति। साधूनां=महतां श्रौतस्मार्तधर्मानुवर्तिनां ब्रह्मविदां च यच्चारित्र्यं=स्वाश्रमविहितधर्मानुष्ठानसमाध्यभ्यासादि तस्य रक्षायां लोकहिताय शुद्धसंप्रदायप्रवर्तनेन परिपालने परः=उद्युक्तः सन् साधुमार्गेण=सर्वजनानुकूलमार्गेणैव वर्तते । तत्रहेतुमाह—संस्कारत इति ॥ "अनेकजन्मसंसिद्धस्ततोयातिपरांगतिम्" इति भगवद्वचनात् चिराऽभ्यस्तसाध्वाचरणसंस्कारस्य तथैव प्रवर्तकत्वाद्दयालुत्वाच्चेत्यर्थः। तथाहि—कुलालचक्रादेः अमत्रनिष्पत्त्यनन्तरमपि पूर्ववदेव भ्रमणं दृश्यते न तु तद्विपरीतमिति भावः ॥ २० ॥

अत एव ह्यसौ हर्षविषादादिनापि नाऽऽक्रम्यतेइत्याह—नप्रहृष्यतीति॥

मू० ॥ न प्रहृष्यत्यसौ प्राप्य भूयः प्रियं
मेरुवन्निश्चलो भूरिकृच्छ्रेष्वपि ।
भावयन्नात्मनाऽऽत्मानमानन्दितो
देववत्सञ्चरत्येव विश्वम्भराम् ॥ २१ ॥

असौ=विद्वान् भूयः=बहुतरं प्रियं=लोके प्रीतिजनकत्वेन प्रसिद्धं महाराज्यस्वाम्यदिव्यसिद्ध्यष्टैश्वर्यादि दैवात् प्राप्य नैतत्सारमनृतत्वादिति दर्पणदृष्टधनराशाविव निरासङ्गो न प्रहृष्यति=हर्षात्मकं विकारं न भजते। भूरिषु=बहुतरेषु शीत वर्षातप सिंह व्याघ्र दुर्भिक्ष वध बन्धनादि क्लेशरूपेषु कृच्छ्रेषु=महासङ्कटेष्वपि मेरुणा तुल्यं मेरुवत्। निश्चलः=अप्रकम्प्यः अविषण्णस्वरूपएवाऽऽस्ते। तस्य मिथ्यात्वनिश्चयादेवेति भावः॥ किमस्य ईदृशधैर्ये कारणं तत्राह—भावयन्निति। यतोऽसौ निर्द्वयपूर्णानन्दैकरसमात्मानं सर्वदैव भावयन्=तदात्मनैव स्थितः। तेनैव परमानन्देन निरन्तरमानन्दित आस्ते इत्यर्थः। तथाच श्रुतिः—"यदाह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते अथ सोऽभयं गतो भवति" इति॥ यथाहुः—

"अपि सप्तार्णवक्षोभादपि कल्पमहानिलात्।
अपि संवर्तदहनात्तत्त्ववित्र प्रकम्पते" ॥ इति ॥

एवंशीलोऽसौ लोकानुग्रहाय भिक्षाचर्यादिसिद्धये सहजकौतूहलाच्च देववत्=ईश्वरइव विश्वम्भरां=विपुलां पृथिवीं निषिद्धदेशानपहाय सर्वतः संचरत्येव नैकत्रनिवसतीत्यर्थः ॥ २१ ॥

दर्शितेयं तत्त्वज्ञचर्या औत्सर्गिकी, प्रारब्धगतेःविचित्रत्वेन ऐकरूप्यनिर्धारणाऽसंभवादित्याह—केपीति ॥

**मू०॥ केऽपि वर्णाश्रमाचारनिष्ठापरा**
**मुग्धबालप्रमत्तोपमाश्चाऽपरे।**
**रागिणो भोगिनो योगिनश्चेतरे**
**ज्ञानिनां लक्ष्यते नैकरूपा स्थितिः ॥ २२ ॥**

केऽपि=तत्त्वज्ञा वसिष्ठाद्याः अन्ये च तत्त्वविदः वर्णाश्रमाचाराणां निष्ठायां=अनुष्ठाने प्रवर्तने च पराः श्रूयन्ते दृश्यन्ते च॥ अपरे=ऋभु जडभरत दत्तात्रेय प्रभृतयोऽन्ये च मुग्धाः=अप्रौढचित्ताः, बालाः=प्रसिद्धाः प्रमत्ताः=ग्रहाऽऽवेशादिना पराधीनस्वान्तास्ते उपमा दृष्टान्तो येषां तथा—

विधाः स्यक्तकर्माणः श्रूयन्ते दृश्यन्तेचेत्यर्थः। इतरे=सौभरिप्रभृतयः रागिणः सन्तो वशीकृतसिद्धित्वात् भोगिनः=भोगपराः श्रूयन्ते। जैगीषव्य प्रभृतयस्तु योगिनः समाधिनिष्ठा एव श्रूयन्त इति ज्ञानिनांस्थितिः=चर्या एकरूपैवेति न लक्ष्यत इत्यर्थः ॥ २२ ॥

असङ्गोदासीनाऽऽत्मप्रतिष्ठत्वाद्बहिर्मुखजनसंसर्गित्वाद्रागाद्युपहतत्वाच्च स्वच्छन्दविचित्रा तेषां चर्या बहुधा गूढैव न सर्वजनज्ञेयेत्याह—स्वानन्द इति ॥

मू० ॥ स्वाऽऽनन्दे सहजे सदा विहरतां स्वच्छन्दलीलाजुषां
निस्सङ्गा च निरर्गला च जगतां कल्याणसंदोहनी।
मत्स्यानां सलिलेऽम्बरे च वयसां वायोरिवाऽऽशामुखे
दुर्लक्ष्ये पथि योगिनां बहुविधा गूढा विचित्रा गतिः॥

सहजे=स्वाभाविके स्वानन्दे=आत्मसुखे सदा=निरंतरम्, विहरताम् अत एव स्वच्छन्देन=स्वेच्छानुसारेण जगदनुग्रहानुकूलां लीलां=वाङ्मनःकायचेष्टां जुषन्ति=सेवन्ते तथाविधानां योगिनां ज्ञानयोगिनाम्, दुर्लक्ष्ये=निपुणतरैरपि जनैर्लक्षयितुमशक्ये पथि=जगच्छ्रेयोमार्गे निःसङ्गा=बहिर्मुख जनसङ्गेन रागाद्यनुषङ्गेण च शून्या निरर्गला=निष्प्रतिबन्धा द्वितीयश्चकारः पराऽनुद्वेजकत्वाद्यनुक्तगुणसमुच्चयार्थः। जगतां=सर्वलोकवासिजनानां कल्याणस्य=ऐहिकामुष्मिकसुखस्य संदोहनी=सम्यक्प्रपूरणी। अथवा कल्याणस्य=सुकृताभ्युदयादेः सन्दोहः=राशिः अस्यास्तीति तथा। एवंविधा गतिश्चर्या गूढा=दुर्लक्ष्या विचित्रा=बहुधा च भवतीत्यर्थः। तत्रदृष्टान्तमाह—मत्स्यानामिति। यथा मत्स्यानां जले=सलिले गतिः=गमनमार्गः, यथा वा अम्बरे=आकाशे वयसां=पक्षिणां सा, यथा वा वायोः आशानां=दिशां मुखे=प्रदेशे सा गूढा विचित्रा च तद्वदित्यर्थः ॥ २३ ॥

तत्त्वज्ञ एव धन्यो नान्यः तस्मात्त्रिजगति धन्यतमोऽस्तीत्यभिनन्दति—योगीति ॥

मू० ॥ योगिध्येयपदाम्बुजस्त्रिजगतां नाथो हरिर्यं स्वयं
शान्तं नित्यमनुव्रजामि रजसा *पूयेयमित्यब्रवीत् ।
तस्माद्विश्वगुरोः सुरासुरनरैरानम्यपादाम्बुजा-
दात्मानन्दनिमग्ननिश्चलमतेरन्योऽत्र धन्योऽस्ति कः ॥

योगिभिः=कर्मयोगिभिः अष्टाङ्गयोगिभिर्ज्ञानयोगिभिश्च अभ्युदयनिःश्रेयसप्राप्तये ध्येये=अवश्यं ध्यातव्ये पदाम्बुजे=पादारविन्दे यस्य तथाविधः त्रिजगतां=त्रिभुवनानां नाथः=ईश्वरो भगवान्हरिः श्रीकृष्णः

"निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् ।
अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः ॥

इति शान्तं=जितक्रोधं "ज्ञानीत्वात्मैव मे मतम्" इतिभगवद्वचनात् आत्मभूतं ब्रह्मविदं स्वयं नित्यं=निरन्तरं अनुव्रजामि, तेनाऽनुव्रजनेन च रजसा तदीयचरणरेणुना पूयेय=पवित्रीभवामि इति यं=ब्रह्मविदं अब्रवीत्=व्यक्तमुक्तवान् तस्मात् विश्वगुरोः=सर्वोत्कृष्टात् सर्वेभ्यो ब्रह्मविद्योपदेशेन आचार्यभूतात्सर्वेषांगुरुवत्सेवनीयाद्वा । अतएव स्वर्गस्थैः सुरैः पातालस्थैः असुरैः भूस्थैर्नरैश्च आनम्ये=नित्यंवन्दनीये पादाम्बुजे यस्य तथाविधात् आत्मानन्दे=अपरिच्छिन्नसुखस्वरूपे निमग्ना=समुद्रोदरन्यस्ता महाशिलेव पुनरनिर्गमनाय प्रविष्टा अतएव निश्चला=निःस्पन्दा मतिर्यस्य तथाभूतात् तस्मात् ब्रह्मविदः सकाशात् अत्र=अस्मिन् ब्रह्माण्डोदरे को धन्योऽस्ति स एव धन्यो नान्यः कश्चिदित्यर्थः ॥ २४ ॥

कृतकृत्यस्य जगदनुग्रहकौतुकेन धरणीपर्यटनशीलस्य नित्यनिरतिशयाऽऽत्मानन्दाऽमृततृप्तस्य तस्य "यास्तु स्वैरकथास्तेषामुपदेशा भवन्ति ताः" इतिवचनात् विवेकिजनेषु तथापर्यवसितान् सहजोद्गारभूतान् ब्रह्माऽमृतरसस्राविणः सविस्मयादिसहजमधुरालापान् दिदर्शयिषुर्भूमिकामारचयति—सोऽयमिति ॥

* "अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः" इति श्रीभागवते पाठदर्शनात् अत्र पूयेय चेत्यब्रवीत्" इत्येव पाठः साधुरिति भाति ॥

मू० ॥ सोऽयं पूर्णमनोरथोऽपि सहजात्कौतूहलात्पर्यट-
न्नुर्वीं सर्वहिते रतः प्रतिपदं स्वानन्दमास्वादयन् ।
साश्चर्यं सकुतूहलं सकरुणं सानन्दमुत्कण्ठया
धीरः पारमवाप्य मोहजलधेरेवं मुहुर्गायति ॥ २५ ॥

स वर्णितोत्कर्षोऽयं धीरः ब्रह्मवित् मोहजलधेः=दुस्तरस्य मायासमुद्रस्य पारं=परतीरभूतमात्मतत्त्वं अवाप्य=ज्ञानेन प्राप्य स्वयं पूर्णमनोरथोऽपि विनेयप्रयोजनोद्देशं सहजात्=स्वाभाविकात् कौतूहलात्=विचित्र देश तीर्थ सज्जनादि दर्शनोत्सुक्यात् उर्वीं=भूमिं पर्यटन् सर्वेषां=प्राणिनां हिते=अनुद्वेगे अभिलषितप्रापणे च रतः=तत्परस्सन् तथा पदेपदेइति प्रतिपदं=प्रतिपादन्यासं स्वानन्दं=आत्मसुखरसायनं आस्वादयन्=परमप्रेम्णा अनुभवन्सन् ब्रह्मादिदुर्लभमिदं कथं मया प्राप्तमिति साश्चर्यं, हन्त! वाचामगोचरं अपारमिदमात्मसुखमनुभवामीति सकुतूहलं=सकौतुकं, हन्त! दुरन्तेऽस्मिन्मोहजलधौ निमग्नाः प्राणिनोऽहमिव कथं पारमेष्यन्तीति सकरुणं, परमपुरुषार्थो मयाऽऽसादितः कृतार्थोऽस्मीति सानन्दं च उत्कण्ठया अनुभूयमानसुखोत्कर्षपारवश्येन तन्निगूहनाऽशक्त्या अधिकारिजनेषु प्रकाशनोत्कण्ठेच्छया मुहुः=वारंवारं एवं=वक्ष्यमाणप्रकारेण गायति=सुस्वरमभिलपतीत्यर्थः ॥ २५ ॥

तमेवाऽभिलापं पञ्चदशभिः श्लोकैः वर्णयिष्यन्प्रथमं श्रीगुरुकरुणाकटाक्षसदुपदेशयोरेव प्रभाव इति तं दर्शयति—चिरादिति ॥

मू० ॥ चिरान्मग्नेनाऽन्तःप्रकृतिविषमे जन्मजलधौ
मया पुण्यैर्लब्धो गुरुरमृतचिन्तामणिरहो ।
यदीयाभिर्गोभिर्विशदमधुराभिर्वितिमिरे
स्वसंपूर्णे यस्मान्निरवधिसुखे धामनि रमे ॥ २६ ॥

प्रकृतिविषमे=राग द्वेष जरा मरण नरकादि दुरन्तदुःख ग्राह बहुलत्वात् स्वभावसङ्कटे जन्मजलधौ=जन्मपरम्परोपलक्षित संसारसागरे चिरात्=अनादिकालादारभ्य मग्नेन=अन्तर्गतेन मया रत्नमिव अभ्युदय निःश्रेय

स साधनमन्विष्यता परमभाग्योदयात् गुरुः=श्रीदेशिकलक्षणः अमृतचिन्तामणिः=मोक्षलक्षण चिन्तितार्थप्रदो मणिः अर्थान्तरे गुरुः=सर्वोत्कृष्टः न विद्यते मृतं मरणं यस्मात् तथाविधश्चिन्तामणिः लब्धः=प्राप्तः अहो इत्याश्चर्ये। कथमसावमृतचिन्तामणिरिति ज्ञात इति चेत् कार्येणेत्याह—यस्मादिति यस्माल्लाभानन्तरं अहं विशदमधुराभिः=स्वच्छहृद्याभिः यदीयाभिः यस्य श्रीगुरोस्संबन्धिनीभिः गोभिः=कटाक्षलक्षणैः किरणैः उपदेशवाग्भिश्च अन्यत्र प्रभाभिः वितिमिरे=निरस्ताऽज्ञाने निर्धूतान्धकारेच स्वसम्पूर्णे=स्वेन=आत्मनैव सम्यगपरिच्छेदेन पूर्णे=व्याप्ते स्वेन=धनेन संपूर्णेच निरवधिसुखे=निरतिशयानन्दे धामनि=स्वप्रकाशाऽऽत्मज्योतिषि गृहेच रमे=विहरामीत्यर्थः॥ २६ ॥

"या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥

इति भगवदुक्तेः विद्वदविद्वद्दृष्टिगोचरे आत्मदर्शनाऽदर्शन जगन्मिथ्यात्व सत्यत्व दर्शनलक्षणे परस्परविपरीत जागृन्निशे पौर्वापर्येण स्वेनैवाऽनुभूते अभिलप्य दर्शयति—यथेति ॥

**मू० ॥ यथा पूर्वं मायापरिकलितदृष्टिर्निजसुखं**
**स्वयं भातं पश्यन्नपि नपरिपश्यामि सहजम् ।**
**तथेदानीं ज्ञानाञ्जनविमलचक्षुर्जगदिदं**
**चिदाकाशे पश्यन्नपि न परिपश्यामि वितथम् ॥**

पूर्वं=अज्ञानदशायां सहजं=स्वाभाविकं सत्यं परमप्रेमास्पदत्वेन स्वयंभातं=स्वप्रकाशं निजसुखं=आत्मानन्दं अहं यथापश्यन्नपि सर्वव्यवहारेषु पुरःस्फूर्तत्वात् अनुभवन्नपि मायालक्षणतिमिररोगेण परिकलिता=सर्वत आच्छादिता स्वरूपदृष्टिर्यस्य तथाभूतः सन् द्वैतनिविष्टदृष्टित्वात् नीलपटसंयुक्तप्रभाशौक्ल्यमिव नपरिपश्यामि=नाऽज्ञासिषं "वर्तमानसामीप्ये लट्"। तथेदानीमपि ज्ञानलक्षणेन=सिद्धाञ्जनेन विमलं=निर्मलीकृतं चक्षुः=स्वरूपदृष्टिर्यस्य तथाभूतः चिदाकाशे=आकाशवत् वितते स्वरूपचैतन्ये प्रतिभासमानं इदं=जगत् पश्यन्नपि दृढबाधनिश्चयात् वितथं=

अनृतमिति नपरिपश्यामि। अहो चिरान्ममेदं वैरनिर्यातनमिव वृत्तमित्युत्कण्ठोक्तिः ॥ २७ ॥

मनोवाचामव्यवहारागोचरत्वेऽपि स्वप्रकाशत्वादेव स्वतः सिद्धत्वेन, निर्विशेषत्वाद्वाच्यत्वेऽप्यप्रत्याख्येयत्वेन, आत्मत्वादेव नित्यलब्धत्वेनच, विषयादिरूपप्रपञ्चविलक्षणस्य आत्मन एव चरमसाक्षात्कारवृत्त्याऽऽरूढस्य द्वैतप्रपञ्चबाधकत्व मनुभूयाऽभिलपति—न वेद्य इति ॥

मू०॥ न वेद्यो नाऽवेद्यः स्वरसमतिहृद्यः सुखघनो
न गद्यो नाऽपोह्यो न पुनरपरोध्यः कथमपि ।
न हेयो नाऽऽदेयो न पुनरपिधेयः क्षणमहो
स्फुरन्नाऽऽत्माऽस्माकं जगदिदमकस्मात्तिरयति ॥

मनसा इन्द्रियान्तरैरपि न वेद्यः=बोद्धुमशक्यः। तेषां विषयोन्मुखत्वेन आत्मनि व्यापाराऽयोगात्। तथापि धर्मादिवत्परोक्षैकस्वभाव इत्याह—नाऽवेद्य इति। अवेद्यो न नित्याऽपरोक्षत्वादित्यर्थः। तथा निर्विशेषत्वादेव इत्थमेवंरूप इति वाचापि न गद्यः। नापि नास्तीत्यपोह्यः=अपवदितुंनशक्यः। निरवच्छिन्नप्रतियोगिताकनिषेधाऽयोगात् प्रतिषेद्धुरात्मत्वाच्चेत्यर्थः। तथा आत्मत्वादसङ्गत्वाच्च न हेयः=हातुं न शक्यः। नाप्याऽऽदेयः=आदातुंनशक्यः। नापि भूतलादिवृत्तिप्रदीपदशायादिनैव अपिधेयः=आच्छादयितुं नशक्यः। स्वयंप्रति स्वस्य तिरोधातुमशक्यत्वात् अपरिच्छिन्नत्वाच्च। ईदृशः स्वरसं स्वत एवातिहृद्यः परमप्रेमास्पदम्, अत एव सुखघनः=सैन्धवघनवत्सुखैकघनःअस्माकमात्मा स्फुरन्=चरमसाक्षात्कारवृत्त्यारूढः सन् इदं=प्रत्यक्षादिसिद्धं, कुद्दालकोटिभिरप्यभेद्यं जगत् अकस्मात्=सहसैव तिरयति=स्वरूपेणाऽऽच्छादयति बाधते इत्यर्थः। अहो इत्याश्चर्ये २८

प्रबोधोत्तरकालं स्वप्न इव तत्तिरोहितं जगत्तुच्छमेव, न सर्वथा तस्य गतिः प्रेक्षावत्सहस्रैरपि ज्ञातुं शक्या। विमर्शो तस्य मनोमात्रविलसितत्वात् तच्छान्त्यैव प्रशमदर्शनादित्येतदानुभविकं दर्शयति—किमिति ॥

मू०॥ किमस्तं किंध्वस्तं किमु विलुलितं किन्नु गलितं
विशीर्णं वा गीर्णं ननु सपदि जीर्णं किमथवा ।
अमन्दे स्वच्छन्दे निरुपमनिजानन्दजलधौ
मयि स्वान्ते शान्ते जगदिदमशेषं न कलये ॥२९ ।

मयि-पूर्णानन्दैकरसे प्रत्यगात्मनि स्वान्ते-मनसि शान्ते-सहजचरमसाक्षात्कारवृत्त्या निर्वाणे सति, इदं-दृश्यं, अशेषं-कृत्स्नं जगत्, नकलये=नानुभवामि । तत्कुतइति नशक्यं परिज्ञातुं तुच्छत्वादितिभावः। तुच्छतामेव स्फुटीकर्तुं अपगमप्रकारसन्देहमनिर्णयव्याप्यमभिनयति—किमिति । किमिदं जगत् सूर्यचन्द्रादिवत् अस्तं, किंवा कठिनतर शिलापृष्ठ निपतितघटपिठरिकादिवत् ध्वस्तं, किंवा मदविधूतशृङ्खलमतङ्गज करचरणपरिमृदित मृणालमिव विलुलितं, किंवा प्रतप्ततरखर्परन्यस्तहैयङ्गवीनपिण्ड इव करतलकलितकरकोपलखण्ड इववा गलितं । किंवा जवनतरपवनदोधूयमानशरदभ्रपटलशकलमिव विशीर्णं। किंवा चिरबुभुक्षिताऽजगरवदननिपतितचपलतरशशकशरीरमिव गीर्णं । किमथवा निरुपमानतया योगप्रभाव विशेषविजृंभमाणकुंभसंभवोदरप्रविष्टवातापिशरीरमिव जीर्णं । अस्तिध्वस्त्यादौ रूपान्तरेणापि परिशेषः संभाव्येत जरणे तु नतत्संभावनापीति द्योतनाय—किमथवेति । नन्विति=वितर्के। नन्वात्मनि तदापि सन्नेव प्रपञ्चो ग्राहकाभावादेव न प्रतीयतामित्याशङ्कावारणाय विशिनष्टि—अमन्द इति । मन्दः-मूढः अज्ञानाऽऽवृतः तद्विलक्षणे अनावृतस्वप्रकाशचिद्रूपे इत्यर्थः । तथाच तत्र सत्त्वे भासेतैवेति भावः॥ तर्हि तदा अन्यत्रैव जगदस्तु न भासतां चेत्याशङ्क्याह—स्वच्छन्द इति। स्वः=स्वाधीनः छन्दः=विहारादिचरित्रं यस्य स इव निरङ्कुशव्यापनशीले त्रिविधपरिच्छेदशून्य इति यावत्। तथा च वस्त्वन्तराऽभावात्, भावे वा तस्यापि जगदन्तःपातेन आधारत्वाऽयोगाच्चेत्यर्थः॥ ननु तर्ह्यस्तु सैन्धव इव आत्मन्येव निलीनं पृथक् सत्तयाऽस्तु 'तत्राह—निरुपमेति॥ निरुपमस्य अप्रतिमस्य निजस्य-स्वात्मकस्य आनन्दस्य जलधौ समुद्रे इत्यर्थः। तथाचाऽऽनन्दैकरसे अनानन्दादिरूपस्य जगतः पृथक् सतो मिश्रणे जलमाधुर्यस्येव

सुखैकरसत्वस्य विघातः स्यात्। तथा च श्रुत्यनुभवविरोध इति सर्वथा प्रपञ्चस्याऽपरिशेषात् जीवन्मुक्तदशा तुच्छतैवेति भावः ॥ २९ ॥

न केवलमस्य ज्ञानेन बाधस्य पर्यालोचनादेव तुच्छता, अपितूत्पत्त्यादेः परिशीलनेनाऽपीति दर्शयति—कथमिति ॥

मू० ॥ कथमिदमभवत्कथंनु तिष्ठ-
त्यथ कथमेति लयं प्रतीचि विश्वम्।
विमलदृशि निजे निरस्तसङ्गे
पटु परिमृश्य मृषेति निर्वृतोऽस्मि ॥ ३० ॥

विमलदृशि=निर्मलचैतन्यस्वभावे स्वतो विकाररहिते इति भावः। निरस्तसङ्गे=वस्त्वन्तराऽसंस्पर्शिनि परतोऽपि विकारशून्ये इति यावत्। ईदृशे निजे परमार्थसत्ये प्रतीचि=प्रत्यग्रूपात्मनि इदं=प्रातीतिकं विश्वं=जगत् कथमभवत् एवममूर्ते अनन्तरे अबाह्ये च तस्मिन् कथं तिष्ठति,नु=इति संभावनायाम्। मूर्तं हि मूर्ते,अन्यद्धि अन्यत्राऽन्तर्बहिर्वा आस्ते इति प्रसिद्धं। उत्पत्तिस्थित्यभावे अलब्धस्वरूपस्थितिकस्य वन्ध्यापुत्रस्येव नाशोऽप्यत्यन्ताऽसंभावित एवेत्याद्यभिप्रेत्याह—अथेति। अथ=तदनन्तरं लयं=तिरोभावं कथमेति? निरधिकरणस्य भावशेषस्य अभावशेषस्य वा नाशस्याऽयोगात्। आत्मनश्चोभयाऽसङ्गत्वात् नाशस्य प्रतियोग्यसंस्पर्शे तदीयत्वाऽसिद्धेः। संस्पर्शे चोत्पत्तौ तदविघातिनः पश्चादप्यविरोधापत्तेः। भावाऽभावयोः संस्पर्शस्य दुर्वचत्वाच्चेति भावः। एतदेवाभिप्रेत्याह भगवान्-

"नासतो विद्यते भावो नाभावो विद्यते सतः।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः"॥ इति ॥

एवं जगत्स्वरूपं पटु=निपुणतरं परिमृश्य=विचार्य मृषा=तुच्छमेवेति निश्चित्य निर्वृतः=सुखितोऽस्मीत्यर्थः ॥ ३० ॥

सृष्टि स्थिति लयाऽऽधारत्वाऽसंभवेन आत्मनः उपादानताऽसंभवात् जगतस्तुच्छता दर्शिता। इदानीं कर्तृत्वाद्यसंभवोपपादनेनाऽपि तां त्रिभिः श्लोकैरुपपादयिष्यन् प्रथमं निर्माणमाक्षिपति—निराधारेति॥

मू०॥ निराधाराऽऽकारं निरवयवसंस्थानमचलं
निरीहं निर्द्वन्द्वं निरुपम निजानन्द विभवम्।
विनोपायं स्वीयं करणसमुदायं च परमं
कथं तन्निर्मायं त्रिभुवननिकायं रचयति॥३१॥

निर्गत आधार आश्रयः आकारः=पुरुषादिदेहश्च यस्य तत् तथा। निर्गतं हस्तपाद्यवयवानां संस्थानं संनिवेशो यस्य तत्तथा। अचलं=निश्चेष्टं निरीहं=निरभिलाषं तथा। निर्द्वन्द्वं=शीतवाताद्युपघातशून्यं मृदादिस्वातिरिक्तोपादानशून्यं च तथा। निरुपमः=अप्रतिमः निजः=स्वात्मकः आनन्द एव विभवः=सर्वैश्वर्यफलं यस्य तत्। तथाविधं परमं=ब्रह्म उपायं=बाह्यमुपकरणं स्वीयं=आभ्यन्तरं चक्षुरादिकरणसमुदायं च विना त्रिभुवननिकायं=त्रैलोक्यगृहं कथं रचयति=निर्मिमीते। लोके हि साधारः शरीरी हस्तपादादिमान् बाह्याभ्यन्तरोपकरणसंपन्नः शिल्पी शीतवाताद्युपघातनिवृत्तये वेतनादिलाभाय वा अल्पतरमपि गृहं रचयन् दृष्टः। तद्विलक्षणं ब्रह्म तद्विलक्षणं जगद्गृहं कथं रचयतीति संभावयितुमप्यशक्यमिति भावः॥ ननु विनैवाऽन्यत्साधनं मायावीव मायया निर्मास्यति, स्वप्ने विनैव साधनं गृहादिसिद्धिदर्शनादित्याशङ्क्य विशिनष्टि—निर्मायमिति। असङ्गे मायासङ्गस्याप्ययोगात् आरोपिततत्सङ्गोक्तौ जगत्स्रष्टृत्वादिसङ्गस्यापि आरोपितत्वाऽऽपत्तेः, आरोपमात्रेण वास्तवनिर्मातृत्वोक्त्यसंभवाच्चेति भावः॥ ३१॥

एवं पालनसामग्र्यभावात् पालयितृत्वकल्पनापि तुच्छैवेतीति दर्शयति—न भृत्या इति॥

मू०॥ न भृत्या नामात्या न खलु विषया नैव च हया
न चाऽऽज्ञान्याः कोशा न च पुरनिवेशा न सुहृदः।
तथाप्यात्मैकाकी निजबलवराकीमरिचमूं
विजित्यैतद्विश्वं भुवनमवतीत्यद्भुतमिदम्॥ ३२॥

भृत्याः=अन्तरङ्गपरिचारकाः अन्तःपुरसेवकाः अन्यत्र गन्तारो न सन्ति। तथा अमात्याः=राजाज्ञानिर्वाहकमन्त्रिणः मन्त्रपुत्रसामन्ताः सचिवाश्च न

सन्ति। तथा विषया:=शब्दादयः उपभोग्याः, पालनीयदेशाश्च न सन्ति। एलियिति निश्चये। तथा हया:="इन्द्रियाणि हयानाहुः" इति श्रुतेः इन्द्रियाणि तुरङ्गमाश्च नैव सन्ति। चकारः सर्वत्र तत्तदुपकरणाऽसत्त्वसमुच्चयार्थः। तथा च अशून्या:=अनलीकाः कोशा:=अन्नमयादयः धनरत्नादिसंभृतकोशागाराणि च न सन्ति। अत एव पुरस्य-ज्ञानेन्द्रिय कर्मेन्द्रिय प्राणमहाभूतान्तःकरणाऽविद्या काम कर्म लिङ्गदेह लक्षणपुर्यष्टकस्य नगरस्य च निवेशा:=अध्यासाऽभिमानरूपाः वसनयश्च न सन्ति। रागद्वेषादीनां आयुधादीनां च वैकल्यसमुच्चयार्थश्चकार। तथा न सुहृदः=सु-शोभनं सम्यक् प्रवर्तकं हृत्=मनो येषु लौकिकवैदिकव्यापारेषु ते व्यापाराः मित्राणि च न सन्ति। "अथात आदेशो नेति नेति" "स एप नेति नेत्यात्मा" "अगृह्यो नहि गृह्यते" "यत्र त्वस्य सर्वमात्मैवाऽभूत् तत् केन कं पश्येत्" इत्यादि श्रुतिभिः सर्वद्वैतप्रतिषेधादसङ्गेऽन्यसंगाऽसंभवाच्चेति भावः। तथापि निजबलेन-अपरिच्छिन्नपरमार्थसत्यचैतन्याऽऽनन्दैकरसस्वाभाव्यलक्षणया स्वशक्त्यैव, वराकीं-तुच्छीकृतां स्वबाहुबलतिरस्कृतां च,अरिचमूम्-कामक्रोधलोभमोहमदमत्सर लक्षणाऽरिषड्वर्गसेनां च एकाकी-अद्वितीयः असहायशूरश्च आत्मा विजित्य-अभिभूय पराभाव्य च, एतत्-दृश्यं विश्वं-कृत्स्नं भुवनं जगत्,अवति-पालयतीति इदमद्भुतं-अत्याश्चर्यं संभावयितुमशक्यमिति भावः॥ ३२॥

एवं संहर्तृत्वमप्याक्षिपति—असङ्गोदासीन इति॥

मू०॥ असङ्गोदासीनः स्वरस परमानन्द सुहितो
जिघत्सानिर्मुक्तश्चितितनुरपाण्यङ्घ्रिजठरः।
अमायोऽप्यात्मासौ स्वयमनवकाशोऽपि सहसा
समायं त्रैलोक्यं कवलयति कस्मात्कथमहो॥ ३३॥

असङ्गःअनन्यस्पर्शी उदासीनः-निष्क्रियः स्वरसेन-स्वाभाविकेन स्वप्रकाशेन च परमानन्देन सुहितः-तृप्तः जिघत्सया-क्षुधया निर्मुक्तः-रहितः। "अजिघत्सोऽपिपासः" इति श्रुतेः। चितितनुः-चैतन्यस्वाभाव्यात् परमसूक्ष्मः अपाण्यङ्घ्रिजठरः-हस्तपादोदरहीनः स्वयं अच्छिद्रत्वात् पूर्ण

यमादीनामात्मभूतत्वाच्च मम यमदण्डात्-यमप्रयुक्तनरकपातादिदण्डनात् यमायुधविशेषाच्च भयं नास्ति । अभयात्मदर्शित्वादिति भावः । धूर्तस्य पारलौकिकभयं नास्तीति प्रसिद्धम् । नकेवलं कार्यप्रपञ्चपथाऽविश्वासः, किन्तु सर्वमूलमायागुणेष्वपीत्याह—गुणद्वेषीति ॥ गुणान्-सत्त्वादीन् द्वेष्टि-अनृतकार्यपरिणामित्वादेव अनृतत्वबुद्ध्या अभिभवति तच्छीलः। तथाधूर्तस्यापि परगुणद्वेषिता प्रसिद्धा । स्वः-आत्मैव अर्थः-परमार्थः प्रियः-प्रेमास्पदं यस्य तथाविधश्च अहं अन्यत्र स्वकार्यमात्रतत्परइति ईदृशं जगद्वञ्चनपरं-सर्वाऽपलापनिपुणं अन्यत्र जनप्रतारणानिपुणं मे-मम चित्रं-अद्भुतं चरित्रं-चेष्टितं क्वचिदपि-देशे काले वा कश्चिदपि पुरुषः नकलयति-नजानाति, तत्त्वज्ञचरित्रस्य धूर्तचरित्रस्य च दुर्विज्ञेयत्वादितिभावः॥ ३४ ॥

ननु सर्वद्वैताऽपगमे दारिद्र्यस्य न्यूनता स्यादित्याशङ्क्य स्वगृहान्तर्भूमिगत निधानपिधानाऽपगमादिव न ततो न्यूनताप्रसक्तिः। अपितुपूर्णतालाभ एवेति दर्शयति—नतातइति ॥

मू० ॥ न तातो नो माता सुहृदपि न मे धाम निधनं
नचान्नं पानं वा न सततगतिर्नाम्बरमपि ।
चरन्तं कृत्स्नं मामहह न हि लोकोऽपि विमृशे-
त्यहो मे दौर्गत्यं तदपि सुखसाम्राज्यमतुलम् ॥ ३५ ॥

तातः=कारणं पिता च नास्ति । माता=परिमाता परिच्छेदको जननी च नास्ति सुहृत्=अन्तर्बहिश्च सर्वव्यवहारनिर्वाहकत्वात् इतरकारणेभ्यः शोभनंहृन्मनो मित्रं च मे नास्ति । "स्वान्तंहृन्मानसं मन इत्यमरः" । "*उरःप्रभृतिभ्यः कप्" इत्युत्तरसूत्रे प्रभृतिग्रहणस्य प्रकारार्थत्वात् अत्रापि हृदयशब्दस्य हृदादेशः । शब्दान्तरंवा । धाम=शरीरं गृहं तृतीयमहा-

---

* सुहृद्दुर्हृदौ मित्राऽमित्रयोः॥ अष्टा-५-४-१५०॥ उरःप्रभृतिभ्यः कप् ५-४-१५१॥ अत्र उरःप्रभृतिभ्यः इति उत्तरसूत्रस्यप्रभृतिग्रहणस्य प्रकारार्थत्वादत्रापि सु=शोभनम् हृदयम् अस्येति विग्रहे हृदयशब्दस्य हृदादेशो बोध्यः । अथवा शोभनहृदयवानित्यर्थे सुहृत् इति शब्दान्तरं वा बोद्धव्यम् ॥

भूतं वा नास्ति । तथानिधनं=मरणादि नास्ति। अन्यत्र धामनि=गृहे धनं=वित्तं नास्ति । अन्नं="पृथिवीवाअन्नम्" इतिश्रुतेः पृथिवी पानं=जलं न स्तः । अन्नं=अदनीयं धान्यादि पानं=पानार्हं पयः तक्रादि वा नास्ति। एवंसततगतिः=सदागतिः वायुः सदैव परिपालकः अन्यो वन्धुः स्वाम्यादिश्च नास्ति । एवं अम्बरं=आकाशं वस्त्रमपि नास्ति। एवंच कारणस्य अविद्यादेः कार्यस्य महाभूतादेश्च परिच्छेदस्याऽभावात् सर्वतःचरन्तं=व्याप्नुवानं अतएव कृत्स्नं = पूर्णं सर्वेषांहृदयप्रदेशे चरन्तं = आत्मतया प्रविष्टमिति वा मां, लोकयति=वाह्यार्थानितिलोकः=इन्द्रियकलापः अपिशब्दान्मनो, मूढजनश्च नविमृशति=नपश्यति नश्रवणादिनाविचारयति-च । अन्यत्र कृत्स्नं=सर्वदेशंग्रामाद्ग्रामं गृहाद्गृहं भैक्षकणाद्याशया चरन्तं मां लोको जनो दृष्ट्वापि नविमृशति=दयया नविचारयति । अहहेति हर्षे खेदेच । इत्थं मे=मम दौर्गत्यं=अन्यदुर्गमत्वं दारिद्र्यंच यद्यप्यस्ति तदपि=तथापि अतुलं=अनुपमं सुखमेव सम्यक् राजते दीप्यते तद्भावः सुखसाम्राज्यं=सौख्योत्कर्षशालिसर्वाधिपत्यं च अत्यन्तविरुद्धमपिस्वतस्सिद्धमेवाऽस्तीति । अहो=आश्चर्यमित्यर्थः ॥ ३५ ॥

एवं सर्वात्मके निर्द्वये चात्मनि विरोधान्तरप्रतिभासेनापि आश्चर्यमभिनयन्नाह— यदिति ॥

**मू० ॥ यद्विश्वं यदविश्वं यद्बहिरन्तश्च नो बहिर्नान्तः ।**
**यद्भवपारमपारं तदनहमहमस्मि विस्मितः स्वेन ॥ ३६॥**

यत्=आत्मवस्तु मायिकदृष्ट्या अवलोक्यमानं विश्वं=जगदेवेति सर्वजगदाकारेण नटवत् व्यवस्थितं नृत्यतीवेत्यर्थः । परमार्थदृष्ट्या तु दृष्टं यदविश्वं=निष्प्रपञ्चमेव । तथाचश्रुतिः—"स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्" इति "एकमेवाद्वितीयम्" इतिच। एवं सर्ववस्तूनां अन्तर्बहिश्च व्यापकत्वात् यदात्मवस्तु सर्वस्य वहिः=वाह्यदेशे अन्तः=मध्ये च भवति जगद्व्याप्तिदृष्टौ, परमार्थतस्तु नो वहिः नान्तश्च । तथाच श्रुती भवतः "तदन्तरस्य सर्वस्य तदु सर्वस्यास्य वाह्यतः" इति। "तदेतद्ब्रह्माऽपूर्वमनपरमनन्तरमवाह्यमयमात्मा ब्रह्म सर्वानुभूः" इतिच ॥ यत्=यदेवात्मवस्तु

भयस्य=संसारसमुद्रस्य पारं=परतीरभूतं अपारं=अनवधिकंच "ब्रह्म विभ्वस्य पारं, महद्भूतमनन्तमपारम्" इतिचश्रुतिः। तत्=तादृशं अनहं=अहङ्कारनिष्कर्षादहंशब्दाऽवाच्यं अहमेवास्मीति सर्वतो विलक्षणमेतदात्मस्वरूपं अनुभवन् स्वेनैव-स्वयं विस्मितोऽस्मीति। विस्मयेऽपि विस्मयप्रदर्शनादुत्कर्षः। "विभुं चिदानन्दमरूपमद्भुतम्" इतिश्रुत्यापि तस्याऽऽश्चर्यरूपतैवदर्शितेति भावः ॥ ३६ ॥

आत्मसुखलाभे ब्रह्मविष्णुरुद्राख्यानां ईश्वरमूर्तीनां यत्सर्वैश्वर्यसुखं तदपि तदात्मभावाल्लब्धमेवेति नाधिकमवशिष्यते, जगद्व्यापारविक्षेपराहित्यात् समाहितसुखं ततोऽप्यधिकमेवेति वा जीवन्मुक्तिसुखस्य सर्वोत्कर्षं प्रतिपादनाय तत्तद्व्यापारमात्ररहितं स्वस्यापि ब्रह्मादिभावं त्रिभिःश्लोकैर्दर्शयति—न सत्य इति ॥

मू० ॥ न सत्यो मे लोको न खलु पुनरोकः सरसिजं
रजःसङ्गो दूरे न मयि विधिशब्दः प्रभवति ।
न वाग्भिः संसर्गो न च विषमसर्गव्यसनिता
तथापि ब्रह्माहं निगमनिकुरुम्बं गदति तत ॥ ३७ ॥

निष्प्रपञ्चाऽऽत्मभूतस्य मे-मम भूरादिर्लोकः सत्यः-परमार्थो न, प्रसिद्धस्य हि चतुर्मुखस्य ब्रह्मणः सत्यसंज्ञको लोकोऽस्तीत्यर्थः। एवं सरसिजं-हृदयपुण्डरीकं जीवभावे मुख्याऽऽविर्भावस्थानत्वेन उपासनस्थानत्वेन च प्रसिद्धं पद्मंच ओकः-गृहं तद्विशेषाभिमानस्थानमित्यर्थः। भगवतस्तु पद्मासनत्वं प्रसिद्धम्। पुनश्शब्दःसमुच्चये। खल्विति प्रसिद्धौ। तथा मे रजसा-रागद्वेषमोहादिमालिन्येन रजोगुणेन च सङ्गः-सम्बन्धः दूरे-न संभावित एवेत्यर्थः। भगवतस्तु रजोगुणः प्रसिद्धः। तथा मयि अनियोज्ये प्रत्यगात्मनि 'यजेत दद्यात्' इत्यादि विधिशब्दः-नियोजकलिङादिशब्दः नियोजयितुम् न प्रभवति-न समर्थो भवति। तदाहुर्वार्तिकाचार्याः—

"स्वामी सन्नहि भृत्येन स्वामिनेव नियुज्यते ।
सम्बोधनीय एवाऽसौ स्तुत्यो राजेव वन्दिभिः"॥ इति ॥

तथाविधिरिति शब्दो। वाचको मयि न भवति। भगवतस्तु विधि-शब्दवाच्यता प्रसिद्धा, तथा मम वाग्भिः—महावाक्यैः संसर्गः—एकपदार्थसंसृष्टाऽपरपदार्थतया बोधनं शब्दसम्बन्धश्च नाऽस्ति। भगवतस्तु चतुर्वक्त्रेषु चतुर्वेदाऽऽत्मकवाक्सम्बन्धः प्रसिद्धः। तथाविषमे—दुस्तरे सर्गे—संसारे व्यसनिता—दुःखिता अत्यासक्तिश्च मे नचाऽस्ति। भगवतस्तु उत्कर्षाऽपकर्षादि वैषम्यशालिनि सर्गे—सृष्टौ व्यसनिता—तत्परता प्रसिद्धा। तथाप्येवं वैधर्म्ये सत्यपि पारमार्थिकं ब्रह्म सोऽपि चाऽहं भवाम्येव। मद्वचनाऽविश्वासे श्रुतिः साक्षीक्रियतामित्याह—निगमेति। निगमानां—वेदानां निकुरुम्बं—समूहः। "तत्त्वमसि" "अहं ब्रह्मास्मि" इत्यादिः "एष ब्रह्मैष इन्द्रः" इत्यादिश्च तत्—मदुक्तं ममैव ब्रह्मादिभावं गदति—व्यक्तं वदतीति नाऽत्र संदेह इति भावः ॥ ३७ ॥

एवमस्य वैष्णव परमपदप्राप्त्या विष्णुत्व सौख्यसम्पत्तिमपि पूर्ववद्दर्शयति—अहमिति ॥

**अहं न मायी न च भोगिशायी न चक्रधारी न दशावतारी।**
**न मे प्रपञ्चः परिपालनीयस्तथापि विष्णुः प्रभविष्णुरस्मि॥**

निष्प्रपञ्चपरमानन्दैकरसब्रह्मभावमापन्नोऽहं माया—कूटवृत्तं, जगत्कारणेश्वरशक्तिश्च तद्वान् मायी न भवामि। भगवतस्तु "दैवीह्येषा गुणमयी" इति स्ववचनेनैव मायिता प्रसिद्धा। एवं भोगिषु—विषयाऽऽसक्तेषु शेते, भोगी सन्वा स्वयं शेते, भोगिनि सर्पसदृशे रागद्वेषादिविषज्वालाऽऽकुले संसारे वा शेते आत्मानमप्रतिसन्दधानः आस्ते इति भोगिशायी अहं न भवामि। भगवतस्तु भोगिनि—महाशेषे शयनं प्रसिद्धम्। तथा चक्रवत् भ्रमति कृन्तति चेति चक्रं—कालः तं धारयति—पोषयति तद्ग्रासभावेन तच्छीलोऽहं न भवामि। भगवतस्तु सुदर्शचक्रधारिता प्रसिद्धा। एवं दशासु—बाल्यादिषु जागृदादिषु वा अवतरणशीलोऽहं न भवामि। भगवतस्तु मत्स्यकूर्मादिभिर्दशभिरवतारिता प्रसिद्धा। तथा मे—मम प्रपञ्चः—मायादिद्वैतप्रपंचः न परिपालनीयः—नरक्षणीयः। प्रत्युत प्रविलापनबाधाभ्यां तन्निरासकत्वात्। भगवतस्तु जगतपालनकृत्यं प्रसिद्धम्। तथापि

एवं वैधर्म्ये सत्यपि नाहमन्यः किन्तु प्रभविष्णुः—सर्वजगदीश्वरत्वेन श्रुति-स्मृतिलोकप्रसिद्धः विष्णुः—व्यापनशीलः भगवान्नारायणोऽहमेवास्मि अत्रापि सन्दिहानं प्रति "नारायण परो ज्योतिरात्मा नारायणः परः" इत्यादि श्रुतयः,

"आत्मा हि पुरुषव्याघ्र ! ज्ञेयो विष्णुरिति स्थितः"।

इत्यादिस्मृतयश्च प्रमाणयितव्या इति भावः ॥ ३८ ॥

एवं स्वस्य परमशिवस्वरूपप्राप्त्या तद्भावसौख्यसंपत्तिमपि पूर्ववद्दर्शयति—नेति॥

मू० ॥ न मूर्तयोऽष्टौ विषमा न दृष्टिः
न भूतिलेपो न गतिर्वृषेण ।
न भोगिसङ्गो न च कामभङ्गः
तथापि साक्षात्परमः शिवोऽहम् ॥ ३९ ॥

पूर्वश्लोकाग्रे इत्यनुषज्यते। सर्वात्मभूतस्य मे अष्टौ=अष्टसंख्याः मूर्तयः=शरीराणि प्राग्दर्शित पुर्यष्टकलक्षणानि अण्डज स्वेदजोद्भिज्ज जरायुजाऽऽख्य तैजस वायवीय मानसलक्षणानि वा शरीराणि न सन्ति। भगवतस्तु पृथिव्यप्तेजोवाय्वाकाश सोम सूर्य यजमान संज्ञका अष्टौ मूर्त्तयः प्रसिद्धाः। तथा विषमा=भेदग्राहिणी दृष्टिः=बहिर्मुखचित्तवृत्तिः मे नास्ति। भगवतस्तु अयुग्मनेत्रत्वं प्रसिद्धम्। एवं मे भूत्या=जन्मना संपदा च लेपः=संसर्गः गर्वश्च नास्ति। भगवतस्तु अष्टमूर्तिसमृद्धत्वं भस्माङ्गरागत्वं च प्रसिद्धम्। एवं मे वृषेण यागोपास्त्यादिजन्यधर्मेण गतिः दक्षिणायनोत्तरायणमार्गेण परलोकगमनं नास्ति। भगवतस्तु स्ववाहनेन धर्मवृषभेण गमनं प्रसिद्धम्। एवं मे भोगिभिः=विषयलम्पटैः सङ्गः=समागमः नास्ति। भगवतस्तु भोगिभिः सर्पैर्भूषणत्वेन सम्बन्धः प्रसिद्धः। तथा मे कामस्य=मनोरथस्य भङ्गः=फलाऽसम्पत्तिः नास्ति पूर्णकामत्वात्। भगवतस्तु स्वाऽपराधिनः कामस्य=मन्मथस्य भङ्गः=भस्मीभावः कृत इति प्रसिद्धम्। तथापि एवमौपाधिकवैधर्म्येऽपि नाहं जीवः। किन्तु साक्षात्=प्रत्यक्षः परमः=सर्वोत्कृष्टः जगदीश्वरत्वेन एकः प्रसिद्धतमः शिव एवा-

स्मि न सर्वथाऽन्य इत्यर्थः। अत्रापि "शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः" इत्यादि श्रुतयः,

"शिवः शिवोऽहमस्मीति वादिनं * पञ्चकञ्चन।
आत्मना सह तादात्म्यभागिनं कुरुते भृशम्" ॥

इत्यादि स्मृतयश्च सन्दिहानं प्रति साक्षीकर्तव्याः। यथाहुर्वृद्धाः—

"शिव इत्यहमित्युभौ न भिन्नौ शिव एवाहमहं शिवः स एव।
यदि नैवमनात्मता शिवस्य प्रसरेदप्यशिवत्वमात्मनोऽपि" ॥ इति ॥

ब्रह्मविष्ण्वादिसुखानामप्यात्मसुखेन्तर्भावात् जीवन्मुक्तसुखस्य निरतिशयत्वमुक्तम्। इदानीमसङ्गाऽद्वितीयत्वात् "यतो वाचो निवर्तन्ते" इति श्रुत्युपदेशेनेन्द्रियवाङ्मनसाऽपरिच्छेद्यत्वादनावृतस्वप्रकाशत्वात्, कालाऽपरिछेद्यत्वादपि तस्य निरतिशयत्वं दर्शयन् स्वस्याऽपुनरावृत्ति परमपदप्रतिष्ठितत्वमाह—जागृदिति ॥

सू०॥ जागृत्सुप्तिस्वपनविपिने गाहमानोऽप्यसङ्गः
सत्त्वोत्कर्षात्करणहरिणैर्नेक्षणीयः पराग्भिः।
लीलावृत्ति प्रशमित महामोह मत्तेभजालः
कालातीते विलसति पदे स्वात्मकण्ठीरवो नः ॥४०॥

जागृत्=ऐन्द्रियकव्यवहारोपलक्षिताऽवस्था। सुप्तिः=सर्वकरणलयोपलक्षिताऽवस्था, स्वपनं=मानसव्यवहारमात्रयोग्याऽवस्थेति अवस्थात्रयलक्षणे विपिने=महारण्यत्रये गाहमानः=प्रविश्य यथेच्छं विहरन्नपि तद्धर्मैरनन्वागतत्वादसङ्गः। तथा सत्त्वस्य=सत्यत्वस्य प्रातिभासिकव्यावहारिकसत्यत्वाऽपेक्षया पारमार्थिकत्वेन उत्कर्षात्=आधिक्यात् बलाधिक्याच्च पराग्भिः=व्यावहारिकवस्तुमात्रप्रवणैः त्रासात्पलायनशीलैश्च करणहरिणैः=बाह्यान्तःकरणलक्षणैर्मृगैः नेक्षणीयः=ईक्षितुमशक्यः। तथाजागृद्विहारान्तरगतश्रवणादिलीलाजन्यया चरमसाक्षात्कारवृत्त्या प्र—प्रकर्षेण शमितं=नाशितं महामोहमत्तेभजालं=कालतो देशतः कार्यतश्च अतिविपुलो मूलाऽ

* "वञ्चकं जनम्" इति पाठस्साधुरिति भाति।

ज्ञानलक्षणमत्तमतङ्गजसमूहो येन । अन्यत्र लीलार्थं=क्रीडनार्थं धृत्यर्थं=देहयात्रार्थं प्रशमितं=संहृतं महतां=प्रांशूनां मोहेन=सितवल्लाऽपरिज्ञानेन मत्तानां=इभानां आलं=समूहो येनेत्यर्थः । स तथाविधो नः=अस्माकं स्वात्मकल्पीयः=श्रीनृसिंहमूर्तिः प्रत्यगात्मपञ्चाननः । काल्पाऽतीते=सर्वप्रासिमहाकालचक्राऽविषये । पदे=स्वरूपलक्षणे परमे पदे प्रतिष्ठितः विलसति=सर्वोत्कर्षेण प्रकाशते इत्यर्थः ॥ ४० ॥

सतां जीवन्मुक्तगीतामुपसंहरन् तस्य जगत्पावनत्वमाह—इत्यादिभिरिति ॥

मू० ॥ इत्यादिभिर्भुवनजाड्यहरैः सुगोभिः
सत्योज्ज्वलैः श्रुतिसुखैरमृतप्रबोधैः ।
आनन्दयन्प्रतिपदं प्रणतान्सभाग्या
नाशाः पवित्रयति भानुरिव प्रबुद्धः ॥ ४१ ॥

प्रबुद्धः=अपरोक्षीकृताऽऽत्मतत्त्वः जीवन्मुक्तः भानुरिव=सूर्य इव भुवनस्य=त्रैलोक्यस्य जाड्यस्य=अज्ञानाऽन्धकारस्य हिमस्य तिमिरस्य च हरैः=निवर्तकैः सत्येन=परमार्थेन उज्ज्वलैः=शुद्धैः। अन्यत्र सत्याख्येन मण्डलान्तर्गतेन हिरण्येन उज्ज्वलैः=दीप्तैः। "येन सूर्यस्तपति तेजसेद्धः" इति श्रुतेः। श्रुतिसुखैः=मधुराऽक्षरत्वाच्छ्रवणानन्दनैः। अन्यत्र शीतार्तानां श्रोत्रप्रदेशे शीतपीडाधिक्यस्य आनुभविकत्वात् तदुपलक्षितसर्वाङ्गसुखकरैरित्यर्थः ॥ तथा अमृतं=अमरणधर्मकं अमृतवन्मधुरतरं च ब्रह्म प्रबोधयन्ति अमृतमिव प्रबोधो येभ्य इति वा अमृतप्रबोधैः। अन्यत्र अमृतं मरणरहितं यथा स्यात्तथा सर्वजनान् प्रतिदिनं प्रबोधयन्तीति अमृतप्रबोधाः तैः। सूर्यकिरणाऽप्रसरे हि प्रतिदिनं सर्वेषां मरणस्य प्रसक्तत्वादित्यर्थः। अथवा। अमृतेन जलेन पार्यते पाल्यते इत्यमृतपं पद्मं तद्बोधयन्ति विकासयन्तीति तथोक्तैः। सुगोभिः=शुभवाक्यैः। शोभनैः किरणैश्च । "नपूजनात्" इति निषेधाट्टच् । गोशब्दस्य उभयलिङ्गत्वात् पुंस्त्वेन विशेषणनिर्देशः । ईदृशैः वाक्यैः प्रतिपदं=प्रतिचरणन्यासं प्रतिविश्रान्तिस्थानं च । प्रणतान्=भक्त्या नमस्कुर्वाणान् । सभाग्यान्=कृतपुण्यपुञ्जान् जनान् आनन्दयन्=त-

स्वप्रबोधोपजनितसाक्षात्कारेण परमानन्दसमृद्धान्कुर्वन् सन्। सूर्योऽपि हि नमस्कुर्वाणान् आरोग्यधनसन्तानस्वर्गादिना आनन्दयतीति प्रसिद्धम्। आशाः=दिशः चरणन्यासेन=किरणप्रसरैश्च। पवित्रयति=पावनीकरोतीत्यर्थः ॥ ४१ ॥

तस्मादीदृशी जीवन्मुक्तिरेव जन्मसाफल्यकरी महतापि यत्नेन सर्वैः संपादनीयेति प्ररोचनाय तमेव जीवन्मुक्तं पुनः प्रशंसति—धन्यइति ॥

मू० ॥ धन्यः स एव कृतकृत्यतमः समस्त-<br>
मान्यः सएव कुलमस्य च धन्यधन्यम्।<br>
संन्यस्य कर्मनिगडं श्रुतिसारसौख्ये<br>
विन्यस्य चित्तमभयाऽऽत्मनि निर्वृतो यः॥४२॥

यः=पुरुषधौरेयः कर्मनिगडं=निगडवत् बन्धहेतुं लौकिकवैदिकसर्वकर्मवृन्दं दृढतरवैराग्यबलेन संन्यस्य=विधिना त्यक्त्वा सद्गुरूपसदनपूर्वकश्रवणाद्युपायैः सर्वश्रुतीनां सारे=परमतात्पर्यविषये सौख्ये=निरतिशयानन्दैकरसे अभयात्मनि-सर्वद्वैतभयशून्ये परमात्मनि चित्तं=मनः विन्यस्य=तदैकरस्येन स्थापयित्वा साक्षात्कृते तस्मिन् तेनैव परमानन्देन निर्वृतः=सदैव सुखित आस्ते स एव धन्यः=श्रेष्ठः। कृतकृत्येभ्यः क्रममुक्तिफलाश्वमेधदहराद्युपास्त्यनुष्ठातृभ्योऽपि सद्योमुक्तत्वात् कृतकृत्यतमः स एव नान्यः। समस्तैः=ब्रह्मादिमनुष्यान्तैः प्राणिभिः मान्यः=पूज्योऽपि स एव। अस्य=जीवन्मुक्तस्य कुलं=वंशबान्धवादि च धन्येभ्यः=अश्वमेधाद्यनुष्ठातृभ्यः धन्यं अनायासेनैव ब्रह्मादिलोकसुखभोक्तृत्वादित्यर्थः ॥ ४२ ॥

जगदुद्धारैकप्रयोजनां जीवन्मुक्तचर्यामुपसंहरंस्तस्य विदेहकैवल्याऽवाप्तिं दर्शयति—एवमिति ॥

मू० ॥ एवं विहृत्य सुचिरं परिपूर्णकामः<br>
कारुण्यपूरपतितोद्धरणप्रवीणः।<br>
प्रारब्धशेषविगमे गतसर्वशोकः<br>
स्वाराज्यसौख्यजलधिर्निरुपाधिरास्ते ॥ ४३ ॥

कारुण्यपूरे=सहजदयाऽमृतप्रवाहे पतितानां=दीनजनानां उद्धरणे=संसारोत्तारणे प्रवीणः=कुशलः परिपूर्णकामः=आप्तसर्वमनोरथः जीवन्मुक्तः सुचिरं=बहुकालं एवं=उक्तप्रकारेण सर्वदेशेषु विहृत्य=लीलया संचर्य प्रारब्धफलस्य कर्मशेषस्य विगमे=फलोपभोगेन समाप्तौ सत्यां निरुपाधिः=प्रतिभासादपि निवृत्तदेहेन्द्रियाद्युपाधिः विदेहस्सन्नित्यर्थः। गतसर्वशोकः=प्रतिभासतोऽप्यपगतसर्वदुःखः, स्वयमेव राजते दीप्यते यत्सौख्यमानन्दः तत्स्वरूपेण जलधिः समुद्र इव सर्वतः परिपूर्णः परमात्मा तन्मात्रस्वभावे कैवल्ये प्रतिष्ठितः स्वरूपभूतयैव सत्तया आस्ते=तिष्ठतीत्यर्थः ॥ ४३ ॥

तस्य पुनरावृत्तिशङ्कावारणाय सर्वविकारशून्यतां नित्यपरिपूर्णपरमानन्दस्वभावतां च पुनराह—नोदेतीति ॥

मू० ॥ नोदेति नाऽस्तमुपयाति न वृद्धिमेति
नाऽपक्षयं च भजते निजतेजसेद्धः ।
पूर्णः सदैव सहजेन सुखाऽमृतेन
निर्लाञ्छनः स्फुरति कोऽपि निजाऽऽत्मचन्द्रः ॥४४॥

प्रसिद्ध चन्द्र इव नोदेति उदयमुत्पत्तिं न गच्छति, अस्तं=अदर्शनं नाशं च नोपयाति, एवं वृद्धिं=कलोपचयं नैति=न गच्छति, तथा अपक्षयं=कलावयवह्रासं च न भजते=न प्राप्नोति, किन्तु निजेन=स्वरूपेणैव स्वप्रकाशचैतन्यलक्षणेन तेजसा इद्धः=दीप्तः सदैव सहजेन=स्वाभाविकेन=सुखलक्षणेनाऽमृतेन सर्वतः पूर्णः निर्लाञ्छनः=निर्धूतमायादिद्वैतकलङ्कः। वाङ्मनसाऽपरिच्छेद्यस्वभावः अलौकिको निजात्मैव आह्लादबोधैकस्वाभाव्यात् चन्द्रः स्फुरति=दीप्यते विराजते या सैव स्वाराज्यसिद्धिः स एव कैवल्यलक्षणः परमपुरुषार्थ इत्यर्थः ॥ ४४ ॥

"मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाण्यायुष्मत्पुरुषकाणि च भवन्त्यध्येतारश्च मङ्गलयुक्ता, यथास्युः" इतिमहाभाष्योदाहृतश्रुतिवचनात् ग्रन्थस्य प्रचयगमनादिसिद्धयेऽन्तेऽपि सत्यज्ञानानन्दाद्वयसर्ववेदोत्तमाङ्गप्रतिपाद्यपरमपुरुषाऽनुसन्धानलक्षणं, मङ्गलमाचरति—विश्वेति ॥

विश्वाऽनन्दतुषारसिन्धुरखिलज्ञानस्फुलिङ्गानलः
प्रच्छन्नाऽसिलता च कोशकुहरे द्वैतभ्रमच्छेदिनी।
मोहध्वान्तविभाकरः परिलसन्वेदान्तसीमन्तिनी-
मौलिस्थानमणिः सदा विजयते संविन्मयः पूरुषः॥४५॥

विश्वेषां=सर्वेषां ब्रह्मादिस्तम्बपर्यन्तप्राणिनां विषयोपभोगजनिताः तारतम्येन विद्यमाना ये आनन्दास्तएव ब्रह्मानन्ददृष्ट्या अतिक्षुद्रत्वात् तुषाराः=हिमशीकराः तेषां सिंधुः=समुद्रः, तथा अखिलप्राणिनां इन्द्रियार्थसंप्रयोगजन्यज्ञानान्येव स्फुलिङ्गाः=अग्निकणाः तेषां अनलः=प्रकृतिभूतमहाग्निस्थानीयः। तथाकोशकुहरे-पञ्चकोशान्तः,हृदयपुण्डरीकछिद्रे वा अन्यत्र असिचर्मणः छिद्रे प्रच्छन्ना-सर्वप्राणिनां वास्तवरूपेण अप्रकाशमाना आच्छादिता च असिलता सैवहि साक्षात्कारनिरस्तावरणा द्वैतभ्रमस्य-जगत्प्रतिभासस्य छेदिनी-उच्छेत्री। छिन्नस्य पुनःप्ररोहशङ्कांवारयन्नाह-मोहेति। मोहः-अज्ञानं तदेव स्वरूपावरकत्वात् ध्वान्तं-अन्धकारः तस्य विभाकरः-सूर्यः, तथा च सूर्येणाऽन्धकारस्येव द्वैतभ्रममूलस्य अज्ञानस्य छेदात् न पुनःप्ररोहसंभव इति भावः॥ तथा वेदानां-सर्वश्रुतीनां अन्तः उपनिषत् सैव सीमन्तिनी-वधूः तस्या मौलिस्थाने-सीमन्तप्रदेशायमाने महावाक्ये मणिरिव विराजमानत्वात् परिलसन्-सर्वगतत्वात् सर्वतः स्फुरन्, किरणैःसर्वतः प्रसृतैः दीप्यमानश्च तथा प्रेमातिशयेन धृतत्वाच्च मणिरिव मणिः संविन्मयः-विशुद्धविज्ञानैकघनः पूर्णत्वात्पूरुषः-परमात्मा सदा विजयते-सर्वोत्कर्षेण वर्तत इत्यर्थः। तथाच तत्प्रसादे तद्ग्रन्थपरिशीलिनामपि सर्वोत्कर्षरूपः परमपुरुषार्थः सिद्ध्यत्विति भावः॥४५॥

इदानीं ग्रन्थस्य प्रचयगमनाय कीर्तये च शुभनाम निबध्नन् विशिष्टाधिकारिभिः विद्वद्भिश्च परिशीलनाऽध्यापनादिना तस्याऽऽदरणीयतां प्रार्थयते—शान्त्यादीति॥

मू०॥ शान्त्यादि दिव्यमणिभूषण मण्डितानां
वेदान्तवारिधि सुधारस लालसानाम्।

कैवल्यकल्पतरुमूल मुपाश्रितानां
स्वाराज्यसिद्धिरियमस्तु मुदे बुधानाम् ॥ ४६ ॥

"शान्तोदान्तः" इतिश्रुतिदर्शितैः अन्यैश्च विवेकवैराग्यादिभिः अधिकारिगुणैः दैवसम्पद्रूपत्वात् दिव्यैः मणिप्रचुरसर्वभूषणवत् सुजनालङ्कारभूतैःमण्डितानां-अलङ्कृतानां, अतएव वेदान्तलक्षणस्य मन्दमतिदुरवगाहत्वादतिगम्भीरत्वात् मोक्षलक्ष्मीजन्मभूमित्वाच्च वारिधेः-समुद्रस्य परमसारभूते परमानन्दैकरसप्रत्यगात्मलक्षणे सुधारसे-अमृतद्रवे लालसानां-अतिशयेन साभिलाषाणां,अतएव कैवल्यकल्पतरोः-मोक्षकल्पवृक्षस्य श्रीगुरोः पादमूलमुपाश्रितानां-श्रवणार्थितया विधिवदुपगतानां, बुधानां-पदवाक्यप्रमाणकुशलानां अधिकारिणां पण्डितानां च मुदे-परिशीलनाध्यापनादिना सन्ततसन्तोषजननाय अस्तु-भवतु । शान्त्यादिभिः सात्त्विकगुणैर्दिव्यरत्नभूषणैश्च भूषितानां वेदान्तशास्त्रवत् स्वच्छतरगम्भीरवारिधिसारसुधारसाभिलाषाणां कैवल्यवत्सुखकरकल्पवृक्षमूलमुपाश्रितानां बुधानां-देवानां स्वाराज्यसिद्धिः-स्वर्गराज्याधिपत्यसहिता अणिमाद्यऽष्टसिद्धिः अत्यन्तं मुदे भवतीति प्रसिद्धम् । ग्रन्थपक्षे

कैवल्यकल्पतरुसंज्ञकस्वव्याख्यानग्रन्थस्य मूलं व्याख्येयमित्यप्यर्थो बोध्यः ॥ ४६ ॥

अस्य ग्रन्थस्य जगदीश्वरप्रसादजन्यत्वात् निर्दोषत्वमिति सूचयन् स्वकृतश्रमस्य सार्थक्याय स्वबुद्धिप्रेरकस्य जगन्मातापितृरूपस्य स्वेष्टदैवतस्य चरणारविन्दयोः समर्पयति—वाक्येति ॥

मू० ॥ वाक्यपुष्पाञ्जलिः सेयं भक्त्या न्यस्ता पदाब्जयोः ।
धियः प्रेरकयोरस्तु शिवयोः प्रीतिसिद्धये ॥ ४७ ॥

सेयं-स्वाराज्यसिद्धिः ॥ ४७ ॥

अपरोक्षीकृते तत्त्वे वाक्याद्वा योगतोऽपि वा ।
जीवन्मुक्तस्य धन्यस्य कैवल्यमिह कीर्तितम् ॥

नित्यं दिशन् सुकृतिनामभिवाञ्छितार्थान्
निर्वाणसिंधुसलिलैर्भरितालवालः ।
आनन्दनन्दनवने नितरां निरूढः
कैवल्यकल्पतरुरस्तु मुदे बुधानाम् ।

वस्वब्धिमुन्यवनिमानशके वृषाख्य-
वर्षस्य माघसितवाक्पतियुक्तषष्ठ्याम् ।
गङ्गाधरेन्द्रयतिना शिवयोः पदाब्जे
भक्त्यार्पिता सुकृतिरस्तु सती शिवाय ॥



इति श्रीमत्परमहंसपरिव्राजकाचार्य श्रीरामचन्द्रसरस्वतीपूज्यपादशिष्येण
श्री सर्वज्ञसरस्वती पूज्यपादप्रशिष्येण
गङ्गाधरसरस्वत्याख्यभिक्षुणा
विरचितायां स्वाराज्यसिद्धिव्याख्यायां
कैवल्यकल्पद्रुमाख्यायां
कैवल्यप्रकरणं सम्पूर्णं ॥

श्रीगणेशाय नमः ॥ ॥शुभमस्तु॥ ओं नमश्शिवाय ॥

ग्रन्थसंख्या नवत्यधिकसार्धाष्टसहस्राणि ८५९० ॥



## एतद्ग्रन्थस्थ श्लोकानामकारादिक्रमः ॥



ॐ नमस्सदाशिवाय ॥

# परिमळाख्या टिप्पणिः प्रारभ्यते ॥

स्वाराज्यसिद्धिं विबुधाः कल्पवृक्षविराजिताम् ।
मिळ्परिमळां प्राप्य प्रमोदं यान्तु सन्ततम् ॥

तथतावत्परमानन्दात्मकमहामङ्गळमूर्तेःश्रीपरशिवात्तत्प्राप्तिप्रत्यनीक मोहध्वान्त निवृत्तिं प्रार्थयमानेन मूलकारेण "अचलतनयाम्" इति श्रीशिवसमवेतरत्यालंबनस्य तदेकायत्तचित्तताऽवद्योतिता । "भीतामालिङ्गन्तीम्" इत्यनेन मुग्धाऽवस्था । स्वयमालिंगनञ्च मुग्धासमवेतरतेः परमकाष्ठापन्नोऽनुभावः। तेन च सम्यगुद्दीपिता सस्मितवीक्षणाऽनुभाविता च श्रीशिवसमवेता रतिरभिव्यज्यते॥ नचेदं भीतिमात्राऽऽयत्तं स्वयमालिङ्गनम्। तथासति भीतिहेतुभोगिनिकेतनाच्छिवादपसरणाऽऽपत्तेः। किन्तु मुग्धास्वाभाव्येन व्रीळाऽवकुण्ठिता तदीयारतिः पटाक्षेपेणेव परिस्फुरन्ती अनुभावयामास स्वयमालिङ्गनम्। अत एव "भीतामालिङ्गन्तीम्" इत्युक्तिः, नतु भीतेस्तथेति । "भोगीन्द्रभीतां सस्मितं वीक्षमाणः। लीलापांगैः प्रणतजनतां नन्दयंश्चन्द्रमौळिर्मोहध्वान्तम्" इत्येतैः "अजात इत्येव कश्चिद्भीरुः प्रपद्यते जन्तुरजातमेव सन्तं शिवम्"

"संसारसर्पदष्टानां जन्तूनामविवेकिनाम् ।
चन्द्रशेखरपादाब्जस्मरणं परमौषधम्" ॥

इत्यादिश्रुति स्मृत्यनुसारेण सस्मितापांगवीक्षणमात्राऽपेक्षणमेव निटिलेक्षणस्य प्रणतजनताऽऽनन्दन भयनिवारण मोहविनाशनेष्वितेष्वर्था अनुरणन्ति। "चन्द्रमौळिर्मोहध्वान्तं हरतु" इति परिकरालंकारः। सर्वेप्येते कविसमवेतां श्रीशिवविषयिणीं रतिमेव पुष्णन्तीति रसवदलंकारोऽत्र काव्यविश्रान्तिभूमिमधिरूढः॥ एवञ्चात्राऽचञ्चलाखण्डाकारवृत्तिसंवळितमच्छाऽच्छमवभासमानं प्रणतजनताप्रत्यगभिन्नमज्ञानध्वान्तविनाशनं परमानन्दघनं श्रीशिवाऽभिधानं सर्वदृगात्मकं चैतन्यमभिव्यंजितं भवति महामङ्गळम् ॥

व्याख्यातुस्सप्तमे*"श्रीसंबन्धमुदीक्ष्य" इतिमंगळश्लोके श्रीचन्द्रशेखराऽऽह्वयाऽनन्दयोगीन्द्रान् श्रीगुरून्वन्दे इत्यर्थोऽवगन्तव्यः ॥

"स्मारं स्मारम्" (अध्या+२) इति मूलस्थे द्वितीये मंगळश्लोके कारणमालाऽलंकारगर्भितश्शान्तो रसोऽभिव्यंजितो भवति । तथाहि— जनिमृतिभरितजगदालंबनो जननमरणभयस्मरणपरंपरोद्दीपितः सन्तत सन्तन्यमान पशुपतिध्यान परमानन्द पीयूषपानाभ्यां अनुभावितो, निजगुरुचरणनलिनभूयोनमनाऽनुसंधानोपष्टंभितो निर्वेदोह्यत्र चर्वणाविश्रान्तिभूमिमधिवसति । तत्र च जनिमृतिभयस्मरणान्निर्विण्णस्य पशुपतिध्यानेन परमानन्दपीयूषपानपरितृप्त्या गुरुपादनमनाऽनुसंधानमिति कारणमाला । न च स्थायिनो निर्वेदस्य स्वपदेनाऽभिधानमनुचिमिति वाच्यम् । व्यवहारदोषदर्शिनो निर्विण्णस्य "निर्विण्णोऽस्मि" इति स्वनिर्वेदाऽभिधानरूपव्यवहारदोषस्य नास्त्यदुष्टो व्यवहारः इत्यर्थाऽभिव्यंजनार्थतयाऽदोषत्वात् ॥

(५-पृष्ठे २९-पङ्क्तौ) नकोमळकण्टकायमानं कादाचित्कमल्पमिति ॥ यथा कोमळकण्टकनोदनं कादाचित्कं कादाचित्कमेव मार्गसञ्चारविरागमुत्पादयति न त्वामवातरुग्णतेव सदातनं, तथाकादाचित्कतयाऽल्पं विषयदोषदर्शनमपीतिभावः ॥

(७-पृ ५-प) "पराग्भ्यः प्रतिलोम्येन प्रकाशत इति" प्रत्यञ्चं निरवोचत् । तत्र पराक्त्वेन प्रकाशकभिन्नत्वेन इदन्तया प्रकाशमानाद्देहादेः प्रातिलोम्येन प्रकाशो नाम तादृशभेदवर्जमेव प्रकाशः, नतु तद्विपरीतधर्मान्तरेण । यथा प्रदीपस्स्वाभिन्नतया प्रकाशमानेभ्यो घटादिभ्यः प्रतिलोम्येन तादृशभेदविहीनतयैव प्रकाशते, नतु तत्प्रतिद्वंद्विना स्वाऽभेदेन धर्मान्तरेणेति । यस्त्वहन्तया प्रकाशते सोपि परागेव, न प्रत्यगिति विवेक्तव्यम् ॥

(११-पृ २-प) "वृत्तिज्ञानप्रागभावस्य प्रतियोगिनाश्यत्वात्तद्वारणाय भावमिति" इति ॥ अत्र वृत्तीतिव्यर्थम्, स्वरूपज्ञानस्य प्रागभावाऽभावात्तत्र व्यभिचारशंकाऽनुन्मेषात् । अथ तस्यापि स्यात्प्रागभाव इति यदि

---

* एते सन्यासाऽऽश्रमगुरवः, विद्यागुरवस्तु श्रीरामचन्द्रसरस्वतीपूज्यपादाः ॥

कश्चिन्मन्दोमन्येत,यद्यन्तर्हि नास्त्येव व्यभिचारः। किन्तु कस्यचित्क्रमो निवर्त्यत इति भवति। यदि तस्य प्रागभावमिव तेन तस्य निवृत्तिमपि स मन्दो मन्येत तदेदमपि प्रयोजनं न स्यात्। अस्तुतर्हि विवक्षितस्वरूपपरिचयार्थमेवेदं वृत्तिपदमितिचेत् एतदेववरम्। अथ प्रागभावविनाशस्य प्रतियोगिस्वरूपत्वे कुतो मूलकारीयस्य भावपदस्य प्रयोजनमितिचेत्। तथासति इच्छाप्रागभावविनाशमादाय कृतार्थयितव्यम्। एतेन वित्तित्वेन विवक्षायान्तद्व्यक्तित्वेन वित्तिनाशमादाय कुतोऽप्रातिप्रसंगाऽवकाशः, आवश्यकी च तादृशी विवक्षा, कथमन्यथोत्तरत्वेन वित्तिनाशं भावमेव पूर्वज्ञानमादाय प्रसक्तस्य व्यभिचारस्य निवृत्तिः इत्येतदपास्तम्। वित्तित्वे नैव वृत्तिनाशत्वादिच्छाप्रागभावस्य॥

. (१७-पृ ११-प) "प्राप्तिसापेक्षं प्रापकशास्त्राविरुद्धमधिकारमिति"॥ "विधिर्वा धारणवत्" इतिन्यायेन श्रवणाद्यंगन्येन सन्यासविधायकतया प्रमितप्रत्यक्षशास्त्रविरोधे नाऽऽर्थयाविकगृहस्थाधिकारत्वदर्शनाद्याऽप्रत्यक्षतदधिकारिकश्रवणादिविधायकशास्त्रानुमानसंभवइत्यर्थः॥

(२४-पृ २०-प) "यदि यज्ञेनेत्यादिपदैः करणत्वेनोपस्थितानां प्रधानप्रत्ययार्थेच्छायामन्वयः,यदितु प्रकृत्यर्थज्ञानेऽन्वयः" इति। प्रथमे—यज्ञादिकमनुतिष्ठतो वेदनेच्छा भवतीति शाब्दबोधः। द्वितीयेतु—यज्ञादीननुतिष्ठन् ब्रह्मवेदनमाप्नवानि इत्यभिलपतीति। न ह्यश्वेन गमनं मे भूयादितिवत् अश्वेन जिगमिषा मे भूयात् इति कश्चिदभिलपति। तस्माद्यज्ञाद्यनुतिष्ठतां भवति विविदिषेति प्रथमपक्षे, वेदनार्थं यज्ञाद्यनुतिष्ठाम इत्यभिलपन्तीति द्वितीयपक्षे च वाक्यार्थभेदोऽवगन्तव्यः।

(२८-पृ १९-प) यद्यस्मिन्नेव जन्मनि प्रतिबंधापगमस्तर्हि ऐहिकमेव ज्ञानम्। यदितु बलवत्प्रतिबंधकमस्मिन्जन्मनि नापैति, तदाऽऽमुष्मिकमपि भवति। तथाच सूत्रम् "ऐहिकमप्यप्रस्तुतप्रतिबंधे तद्दर्शनात्" इति वर्तते। अत्र समुच्चय एव विनियोजितोऽपिकारः। नेदं साधीयः, असति प्रतिबन्धे ऐहिकोत्त्यैव सति तु तस्मिन्नामुष्मिकत्वस्यार्थतस्सिद्धेः "अनन्यलभ्यः शब्दार्थः" इति न्यायविरोधाऽऽपत्तेः। अपितु ऐहिकत्वे दौर्लभ्यं द्योतयत्ययमपिः, सर्पिषोऽपिस्यादितियद्वत्तद्वत्। तथाच ऐहिकमपि भवति वि-

द्याजन्म, कदा?–असति प्रस्तुतस्य श्रवणादेः प्रतिवन्धे। प्रायेण प्रतिवद्धसाधना एव भवन्ति साधका अतिदुरवगाहे ब्रह्मात्मनि परमपुरुषार्थे विज्ञातव्ये। यत आह श्रुतिः–"शृण्वन्तोऽपि वहवो यन्नविद्युः" इति। आहुश्च—"श्रेयांसि वहुविघ्नानि" इति। एवञ्चेदेव "ऐहिकमेव विद्याजन्म" इति प्रत्यवतिष्ठमानोऽपि सुदृढं प्रतिक्षिप्तो भवत्यतिदुर्लभेऽस्मिन्विद्याजन्मनि कथमेवं प्रत्यवतिष्ठसे ऐहिकमेव भवद्भवेद्विद्याजन्मेतीति। एतेनाऽत्यन्तमप्रमत्तैरेव यतितव्यं विद्यां प्रत्यंतरंगसाधने श्रवणादौ साधकप्रवरैर्यथाऽप्रतिवद्धं स्याच्छ्रवणादिकमिति शिष्यगणसुशिक्षणं च कृतं भवति। यथा पूर्वतनेष्वधिकरणेषु। दौर्लभ्यप्रद्योतनाय प्रयुज्यमानोऽयमपिकारः पक्षान्तरमपि यद्यनुवदति अनुवदतु कामं। सर्वञ्चेदमभिप्रेत्यैवोक्तमत्र मूलकृता "श्रुतमपि सहसा नैव संभावनीयम्" इति॥ अत्राऽप्रतिवद्धस्येहैव विद्याजन्म, इतरस्येतरत्रेति विशेषप्रतिनियमस्सूत्रतात्पर्यविश्रान्तिधामेति प्रतिपत्तव्यम्। अयमेवनियमः "एवम्" इत्युत्तरसूत्रेपरामृष्टोऽनियमप्रतियोगिन्यभेदेनान्वेति। एतेन प्राणवर्जमिव अपिवर्जं पूर्वसूत्रं पठतामनियममेव तत्र सिद्धान्तयताम् 'एवम्' इति तमेव परामृश्याऽनियम एवाऽभेदेन योजयताम् एवं सत्येवं मुक्तिफलेपि इत्येतावदेव कर्तव्यमित्यनालोचयतामस्मन्मतोपरि न कथञ्चिदपि चोदनस्याऽवकाशो भवेदित्यवगन्तव्यम्। पराऽभिमताधिकरण विरचनप्रकारस्तु विस्तरभयान्न विलिख्यते॥

(३२-पृ-१७-प) "यच्च शास्त्रैकयोनिरिति मूलम्" इदञ्च मूलं शास्त्रात्मकैककार्यजनकं सदपि सर्वज्ञमिति संवन्ध इत्यर्थः इति शास्त्रयोनित्वसूत्रप्रथमवर्णकाऽनुसारेण सूत्रार्थविवरणरूपतया व्याख्यातम्। एवञ्चकैमुतिकन्यायेन पूर्वसूत्रोपक्षिप्तं सर्वज्ञत्वं दृढीकृतमितिभवति। परन्तु शास्त्रस्य ऋगादेरिदमेकमेव योनिः इत्येकपदस्य योनिपदेन कर्मधारयाऽवलंवने विभिन्नयोनिकत्वेन न कस्यापि सर्वज्ञत्वं संभवतीत्याशंकाऽपनुद्येत। वर्णकान्तरे तथाऽन्वयस्यावश्यकत्वात्। "अस्य महतो भूतस्य" इति श्रौतैकवचनविवरणात्मत्वसंभवाच्च। तथाच सर्वार्थाऽवद्योतिनो वेदराशेश्शास्त्रस्य इदमेकमेव योनिरिति श्रूयते यस्मात्तस्मादपि सर्वज्ञं ब्रह्मेत्ययमप्यर्थोऽत्रक्रोडीकृतो ऽवगन्तव्यः॥

(४९-पृ-९-प) "परमाणुद्वित्वादेर्जन्यस्याऽजन्यत्वाऽतिरिक्तगुणोपवि-धापत्तेर्श्चेति"॥ न हीश्वरनादीश्वरापेक्षाबुद्धिसाध्यं परमाणुद्वित्वं जन्यं भवितुमर्हति। अनादित्वमात्रसापेक्षस्याऽनादित्वाऽव्यभिचारेण जन्यत्वाऽयोगात्। नन्व तर्ह्यजन्यमेवेदं स्यादिति नियमकं पार्यते भवता। एकत्वाऽतिरिक्तसंख्याया अपेक्षाबुद्धिजन्यत्वनियमाभ्युपगमात्। नचेदं जन्याऽजन्यं भवितुमर्हति। विरोधात्। तस्मात्प्रकृत्याऽवसानेऽपदयाऽपेक्षितं परमाणुद्वित्वादिकं जीवीयाऽपेक्षाबुद्धेरुत्पत्तिमसंभावितत्वया द्वित्वादिस्यामान्येनाऽगत्याऽनादिमीश्वरापेक्षाबुद्धिमेवावलंबमानमेवन्दुरवस्थं संपद्यत इतिभावः॥

(५७-पृ १८-प) "तत्पूर्वसन्तानिनामपीति"॥ उपान्त्यस्सन्तानी नाऽर्थक्रियाकारी, सन्तानित्वात्, अन्त्यसन्तानिवत्। नचान्त्यत्वमुपाधिः। साधनवद्विपक्षव्यावृत्तस्यैव धर्मस्य उपाधित्वाभ्युपगमात्। नचोपान्त्यात्पूर्वेभ्यस्साधनवद्विपक्षेभ्यस्सन्तानिभ्यो व्यावृत्तमिदमन्त्यत्वं भवत्यत्रोपाधिरिति वाच्यम्। तेषां पक्षसमत्वेन विपक्षत्वासंभवादित्यर्थः। किञ्च, अर्थयतीप्रयोजयतीत्या क्रिया तत्कारित्वं हि अर्थक्रियाकारित्वं, प्रयोजनञ्च पूर्वक्रियासाध्य उत्तरसन्तानी। तस्याऽनर्थक्रियाकारित्वे असतः कुतः प्रयोजनता। सद्धि प्रयोजनमितिच।

(५७-पृ १९-प) "सन्तानमात्राऽसत्त्वापत्ताविति"॥ नन्वत्र मात्रशब्दः कार्त्स्न्यार्थक एवोपेत्यः। तत्रैकमेव सन्तानमधिकृत्येदानीमयं विचारः प्रवर्तते। तन्न्यायेनैवान्यत्र सेत्स्यत्यसत्त्वम्। तत्र कथमत्र कार्त्स्न्यार्थकमात्रशब्दप्रयोगोपपत्तिरिति चेन्न। सन्तानस्य स्वघटकाऽनेकसन्तान्यव्यतिरिक्ततया तदीयकार्त्स्न्यस्य सन्तानकार्त्स्न्यत्वोपपत्तेरिति॥

(५७-पृ २६-प) निरवकाशत्वप्रसंग इति॥ आवरणसामान्याभावस्याऽऽकाशत्वे दूषणमिदम्। नन्वावरणाभाव विशेष एवाऽऽकाश इति चेत्। स किं प्रतियोगिविशेषाऽधीनोऽभावविशेषः? उताऽधिकरणविशेषाऽधीनः?। आद्ये यदि तत्प्रतियोग्युत्पतितसुपर्णाऽधीनमावरणं, तदोक्तदोषप्रसंगः। यदि सुपर्णान्तरोत्पतनाऽधीनं, तदा यत्र सुपर्ण उत्पतितस्तत्रैव सुपर्णाऽन्तरोत्पतन प्रसंग इत्यभिप्रेत्य द्वितीयं शंकते—यत्रेति॥ निराकरोति-येनेति॥ अयं भावः—न हि यत्किञ्चिदधिकरणको यत्किञ्चित्प्रतियो-

गिकश्चेति वक्तुं पार्यते। पूर्वोक्तदोषाऽऽपत्तेः। किन्तु यत्किञ्चिदधिकरणकः आवरणसामान्याऽभाव एवाऽऽकाश इति वक्तव्यम्॥ तत्र भोः! यत्रस्थित्वाऽयमावरणसामान्याऽभाव उत्पतनोत्तंभनं भवति, तस्यैव तत्वे मध्येकिमनेन। तथाच तदेवाऽधिकरणत्वे नाऽभिमत माकाशमिति॥

(५७-पृ २०-प) ननु तेनेव तत्सदृशेनापि स्मर्तुं शक्यते तदनुभूतमिमित्याशंक्याह—सादृश्याऽसंभवादिति॥

(५८-पृ ९-प) "अयोग्यत्वदुर्निरूपत्वाभ्यामिति"॥ पक्षद्वयेप्युभयापादनपरमिदम्। तथाहि—अयोग्यत्वमत्रेन्द्रियाऽयोग्यत्वम्। तच्च परमाणुत्वपक्षे स्थितमेव। समूहत्वपक्षे तु–नहि समूहिभ्योऽन्यस्समूहो भवितुमर्हति। यतो घटेभ्योऽन्यः पटो नघटसमूहो भवति, अतोऽनन्य इत्येव भवति, तथाचाऽयोग्यत्वप्रसंगः। न च अनन्योऽन्यश्चेति वाच्यम्। अन्यत्वेन योग्यत्वस्येवाऽनन्यत्वेनाऽयोग्यत्वस्याप्यापत्तेः। नह्यकिञ्चित्करोप्यभेदोऽभ्युपगन्तव्यो भवतीति। एवं परमाणुरपि दुर्निरूपः। यदि द्व्यणुकात्परोऽणुः परमाणुः, तदा ततोऽपि परोऽणुः कश्चन परतराऽणुस्स्यात्। तथाचाऽस्याऽन्त्यावयवत्वहानिः। यदिच यस्मात्परोऽणुर्नास्ति स परमाणुरित्युच्येत, तदापि किमस्मात्परोणुः प्रसिद्धः? उताऽप्रसिद्धः? प्रसिद्धौ कथं तस्य प्रतिषेधः। अप्रसिद्धौ कथं वा तस्य प्रतिपेद्ध्यतेति। एवमणुत्वपक्षे—प्रत्येकस्य घटत्वे, प्रत्येकेनापि घटकार्यापत्तिः। अथ तावन्त एवघटः, तदा तेषामर्धांशेनाऽर्धजलधारणाऽनुपपत्तिः। अर्धांशे घटत्वस्याऽपरिसमाप्तेः। यद्यर्धांशोऽर्धो घट इति तेन तद्धारणं, तदा प्रत्येकांशाभ्यां भिन्नोवास्याद्घटः? उत वाऽभिन्नः?। भेदे, ताभ्यमेवार्धमर्धं जलं धृतमिति घटस्य किं कार्यम्। अभेदे तु अर्धांशेनैव यावज्जलविधारणप्रसङ्गः। समूहस्य समूहिभ्योऽन्यत्वाऽनन्यत्वोभयथात्वेषूक्तप्राया एव दोषा इति॥

(५८-पृ २४-प) "स्वगोचरत्वेऽपीति"॥ विज्ञानस्य स्वगोचरत्वेप्यनाश्वासप्रसङ्गेन तस्याप्यभावप्रसङ्ग इत्यर्थः।

(५८-पृ २६-प) "बहिर्वदवभासत इति वत्करणं कुर्वतो भवतोप्यनुभवसिद्धत्वादिति"॥ नन्विदमसङ्गतम्, विज्ञानधर्मतया अन्तरेव वर्तमानो घटाकारो बहिर्वदवभासते, न तदतिरेकेण घटो नाम बाह्योऽस्ति

कश्चित्पदार्थ इत्यभिप्रेत्यकिल वक्तरोति वुद्धबंधुः। तत्र कथं बाह्यस्य घटस्य तदनुभवसिद्धता, कथं वा तत्र तदीयं वत्करणं हेतुस्स्यादिति चेत्? एवम्। 'इदं रजतम्' इति प्रथमं प्रतिपद्यमानो हि पुरुषः पश्चादियं शुक्तिरिति प्रत्यये सति शुक्तिका हि रजतवदवभासत इति वल्कुरुते। अयन्तु तद्वदयं घट इति प्रथमं प्रतिपद्यमानः पश्चादयं घटः, किन्तु वाल्मीकमिदमिति न प्रतीत्य वत्करोति। अपित्वन्तर्विज्ञाने प्रतीयते घटाकार इत्यभिमन्यमानः। नचैवमनेन वत्कर्तुं युक्तम्। यतः क्वचित्किञ्चिद्रजताकारं प्रतीयमानमित्यन्यत्र रजतप्रत्ययवति तदभावेन न भाव्यम्। अतः परं किन्नामाऽनेन वक्तव्यम्? अन्तर्विज्ञाने प्रतीयमानेन तत्तदाकारेणैव तत्तद्व्यवहारोपपत्तौ व्यर्थो बाह्योऽर्थ इति वक्तव्यम्। कथमेवं वक्तुं पार्यते? युक्तिः किलेयमुच्यते लाघवापरनाम्न्यनेन, कथमियं स्वपूर्वभाविनम् अयं घट इति स्वरसवाहिनं सार्वजनीनमव्यक्षात्मानमनुभवं बाधितुमुत्सहेत। नोत्सहेत। अस्तु बाह्य एवाऽर्थः मास्तु विज्ञाने तदाकार इति पृष्टः किमयं व्याचक्षीत? तस्मादनेन क्रियमाणमिदं वत्करणमस्यापि सर्वजनसाधारणमुक्तमनुभवं स्वपूर्वभाविनमुन्नयति। स चोक्तेन प्रकारेणाऽबाध्यमानस्तदनुभवविषयत्वेनापि बाह्यमर्थं साधयतीत्येतदर्थकेऽस्मिन् किन्नामाऽसांगत्यमिति॥

(५९-पृ९-प) "नानाकारविरोधादिति"॥ इमानि घटपटकुड्यकुसूलानीति नानाकारविरोधादित्यर्थः। मिथो वार्तानभिज्ञत्वादिति॥ उक्तानि मिश्रीभूय प्रकाशन्त इत्यनुभवसिद्धम्। तत्र प्रत्येकमेकैकाकारेषु बहुषु प्रत्ययेषु न कस्याऽपि तावदर्थप्रकाशकत्वं संभवति। इतरेतरविषयाऽविषयकत्वादित्यर्थः॥

(६०-पृ १८ प) "साक्षिस्वीकारापत्तेरिति"॥ कथमियमापत्तिः? न हि प्रत्ययावमर्शिना साक्षिणा भवितव्यमित्यस्तिनिर्बंधस्स्वावमर्शिनस्स्वस्य स्वं प्रति साक्षित्वमनभ्युपगच्छति बुद्धबंधाविति चेन्न। यदि प्रत्ययस्यप्रत्ययान्तरवेद्यत्वमुपेयते, तदा तस्याऽपि तदन्यवेद्यत्वाऽवश्यंभावेन परस्पराश्रयाद्यापत्त्या स्वयमनन्यवेद्यस्सर्वावभासकः स्वप्रकाशचिन्मात्ररूपो दण्डायमानोऽनादिरनन्त एकस्साक्षी नाम कश्चिदभ्युपगन्तव्यो भवतीत्यर्थकत्वात्॥

(६०-पृ २५-प) "वियद्वस्त्विवति"॥ यथा कुंभस्योत्पत्तौ सत्यां सद्यो वियत्संपूर्णता, वियद्वस्तुस्वभावानुरोधादेव, न कारकात्, एवं धियां स्वोत्पत्तिसमकालमेव दृशा पूर्णता, दृक्स्वभावानुरोधादेव न कारकादिति वार्तिकार्थः ।

(६२-पृ १६-प) "सर्वत्रेति"॥ कारणीभूतस्याऽभावस्य सर्वत्र सुलभत्वादित्यर्थः॥

(६३-पृ १७-प) "सर्वदेति"॥ तस्य सर्वदा विद्यमानत्वादित्यर्थः॥

" " " " "सर्वात्मकश्चेति"॥ कारणस्याऽभावस्यैकरूपत्वेन कार्यवर्गस्य परस्परवैलक्षण्याऽयोगात् सर्वं सर्वात्मकञ्च किमिति न स्यादित्यर्थः॥

(६६-पृ ११-प) "अनर्थाऽवाप्तिरपि स्यादिति"॥ ननु कथमनर्थावाप्तिर्धर्मेण, स्यात्पक्षेऽर्थाऽवाप्तावपि नास्तिपक्षे तदभाव एव स्यात् नह्यनिष्टावाप्तिरपीति चेन्न। यदा स्यादस्तिपक्षे धर्मे धर्मत्वं, तदा तस्याऽधर्माद्व्यावृत्तस्याऽर्थप्रयोजकत्वेपि यदा स्यान्नस्तिपक्षे धर्मे न धर्मत्वं तदाऽधर्माद्व्यावृत्तस्य धर्मस्य स्यादस्तिपक्षेऽधर्मस्येवाऽनर्थप्रयोजकत्वप्रसंगादित्यभिप्रायात्॥

(६८-पृ ६-प) "योगाद्यभिमतेश्वरवत्केवलनिमित्तकारणं वेति"॥ ननु-योगेन "स पूर्वेषामपि गुरुः कालेनाऽनवच्छेदात्" इतीश्वरमुपयतापि सर्वाऽऽदिगुरुत्वमेव तस्योपगतं, नतु जगदुत्पत्तौ गौतमीयैरिव निमित्तत्वमपि। तथासति प्रधानस्य तदभ्युपगतस्य पारतन्त्र्याऽऽपत्तेरिति चेन्न। प्रधानपरिणामे तस्याऽनपेक्षितत्वेपि योगिनां योगादिमार्गोपदेशद्वारा तेषामणिमाद्यैश्वर्यसिद्धौ तन्मतसिद्धेश्वरस्य निमित्तत्वाऽवश्यंभावात्। यदि जीवविलक्षणोऽनादिःकश्चिदीश्वरोऽभ्युपगम्यते तर्हि स सकलजगदुपादानं निमित्तञ्चेत्येवोपेत्यः, अन्यथा दोषप्रसरादिति सिद्धान्ताऽभिप्रायाच्च। ननु जगदुत्पत्तौ नेश्वरो योगेन निमित्ततयेष्यते स कथं दृष्टान्तीक्रियतामित्येतदस्वरसादेव योगादीत्यादिना पाशुपतादि परिग्रह इत्यपि वेदितव्यम्॥

(६८-पृ ११-प) "कापिलवैशेषिकाद्युपदर्शितेति"॥ वेदप्रामाण्याभ्युपगन्तृभिरवश्यमेवेश्वरोऽभ्युपगन्तव्यो न गौतमीयादिभिरेवेत्यभिप्रेत्यैवमुक्तिः।

कथमन्यथा कापिलग्रहणस्योपपत्तिः। आदिपदेन पाशुपतादिपरिग्रहः त-
थाऽनभ्युपगमेपि पादिसंपादनार्थम्॥

ननु दहराद्युपास्योपास्यः किमनादिसिद्धः परमेश्वरः? उत लिङ्गस-
मुदायात्मा? आद्ये "कार्यं बादरिरस्य गत्युपपत्तेः" इति न्यायविरोधस्त-
स्यानुन्यायविरोधात्। अन्त्ये "जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च"
इतिन्यायविरोधः। जगद्व्यापारे मुक्तस्य नाऽधिकारः, किन्तु अनादि-
सिद्धः परमेश्वर एव तत्र सदाऽधिकारीति प्रकरणात्, सदा तस्य सन्नि-
हितत्वात्, मुक्तानां च स्वमुक्तेः पूर्वमसन्निहितत्वात् बहूनान्तेषामेकधा-
कथ्याऽसंभवाच्चेति हि तदर्थः। नचकार्योपासकानां कुतस्तत्प्राप्तिः येन
तद्व्यापारमाशंक्य निराकरणं क्रियेत, कुतो वा तदनुन्यायोपि नविरुद्धश्चेत
इतिचेत्। न। कार्यं ब्रह्म द्विविधम्—कार्यविशिष्टं, कार्योपहितं चेति। विशि-
ष्टंतु—विराट्, वैश्वानरः, प्राणश्चेति त्रिविधं वर्तते जीवकोटावेवनिविष्टम्।
तत्तद्भावस्तु प्राप्तुंशक्यते तत्तदधिकारनिवृत्तौ जीवान्तरेण। उपहितमपि
त्रिधावर्तते—ब्रह्मविष्णुरुद्रात्मकं विशिष्टकार्यब्रह्माधिष्ठातृदेवतयेश्वरकोटिनि-
विष्टं शाण्डिल्यपंचाग्न्युपकोसलदहराद्युपास्योपास्यंसत्यलोकवैकुण्ठकैलासाद्यधि-
ष्ठानम्। तत्र ब्रह्मा स्वयंभूः जन्मादित्रयीहेतुभूतस्य तुरीयस्य परमेश्वरस्य
रजोगुणोद्रेकवति विराडात्मनि स्वयमेवाऽऽविर्भावात्। अच्युतो हरिः
सत्वगुणोद्रेकवति लिङ्गसमुदायात्मनि वैश्वानरे हृषीकेशतयाऽऽविर्भूतस्य
परस्य सत्यामपीन्द्रियप्रवृत्तिपरंपरायां च्युत्यभावात्। इन्द्रियप्रवृत्तिपरंपरया
किल च्यवते जीववर्गः। एवन्तमोगुणोद्रेकवति सौषुप्ते प्राणे मृत्युंजयरुद्र-
तयाऽऽविर्भूतः परोहरः। प्राणवियोगे किल म्रियते प्राणिनिकायः। मृत्यो-
रपि मृत्युरयंभगवान्प्राणाऽधिष्ठाता। यस्य कालकूटमपि अमृतीबभूव।
एतेच स्वस्वोपाधिद्वारा तत्तल्लोकनिवासिन इति स्वस्वोपासकान्स्वं स्वं
लोकमानयन्ति। अर्चिरादिनाऽऽतिवाहिकगणेन द्वारेण। यत्राचाऽऽनीता
उपासकास्ते कार्यभूता एव यद्वो लोका इत्युपाधिप्राधान्येन "कार्यंबाद-
रिरस्यगत्युपपत्तेः" "विशेषितत्वाच्च" कार्यात्यये तदध्यक्षेण विराड्वै-
श्वानरप्राणोपाधिकेन ब्रह्मविष्णुरुद्राख्येन सह तुरीयेलीयन्ते इति कार्याऽ-
धिकरणसंगतिः। ब्रह्मादीनान्तूपाधिवियोग एव नाऽत्ययः। तत्तल्लोका-

तानां तत्तदुपास्यगतं व्यापारमपि प्रसक्तं निराकर्तुं प्रवृत्तं जगद्व्यापाराऽधिकरणम्। जगद्व्यपारस्याऽनुपास्यत्वान्नतत्प्राप्तिरित्येतत् तत्रैवभामत्यां स्पष्टम्। एतेषु च कस्यचित्कदाचित्स्वरूपप्राधान्यात्प्रथमत्वम् इतरयोस्तूपाधिप्राधान्यात्ततोऽवरत्वं। एवमितरयोरपि प्रथमत्वमित्यभिप्रेत्य तत्र तत्र तेषांपरस्परं प्रथमाऽवरभाववर्णनं पुराणेषु दृश्यते॥ उक्तंचइदंसर्वमभिप्रेत्याऽभियुक्तैः "*सामान्यमेषां प्रथमावरत्वं" इति। तुरीयस्यापि हि जन्मादित्रितयोपहितस्य विहितमुपासनं प्रश्नोपनिषदि तदुपलक्षितमेव शुद्धं ब्रह्मेति मत्वा तदुपासकानामपि कार्यप्राप्तिद्वारा परप्राप्तिरवधारिता "ईक्षतिकर्मव्यपदेशात्सः" इत्यधिकरणे। तथाच कुतो न प्राप्तिरुपासकैश्वर्ये जगद्व्यापारस्य। तस्मात्प्रसक्तमेव परिहृतं "जगद्व्यापारवर्जमिति"। किञ्च अनादित्वेपीश्वरस्याद्व्यस्तत्वरूपं कार्यत्वमवश्यमेवोपेत्यम्। तच्च नोपासनार्हं जीवस्य। किन्तु भोगोपयोगिन एव गुणास्तथेत्यपि विवेक्तव्यम्। तत्र कुतस्तत्क्रतुन्यायविरोध इति॥

(७०-पृ २०-प) "न हि भवति मधुरं कुण्डमिति"॥ मधुरत्वकुण्डत्वधर्मौ विभिन्नधर्मिकाविति नैवं भवति सामानाऽधिकरण्यप्रतीतिरित्यर्थः॥

(७४-पृ ३२-प) "असन्निकृष्टग्राहकत्वेऽतिप्रसंगादिति"॥ निमीलितचक्षुषोप्यर्थोपलब्ध्यापत्तेरित्यर्थः॥

(७५-पृ १-प) आलोकादिसहकार्यसंबन्धाच्चेति=ननून्मीलितनयनगोळकस्य सहकारिदीपाद्यालोकसंबंधाऽवश्यंभावेन कथं तदसंबन्धोक्तिरिति चेन्न। समवायघटितसामानाधिकरण्याऽवच्छिन्नाऽऽलोकसंयोगनिष्ठाऽवच्छेदकताकसमवायसंबंधाऽवच्छिन्न प्रमाणसंयोगनिष्ठकारणतानिरूपित विषयतासंबंधाऽवच्छिन्न प्रत्यक्षनिष्ठकार्यतायाएवाऽभ्युपगन्तव्यतया तस्याः प्रकृतेऽसंभवात्॥ इदन्त्ववधेयम् प्रत्यक्षस्य गोळकहेतुकत्वे प्रत्यक्षमेव नोत्पत्तुमर्हति। गोळकस्य बहिर्निर्गमनाऽसंभवेन विप्रकृष्ट इव स्वसन्निकृष्टेपि प्रत्यक्षोत्पादकत्वं न संभवति। अत्यन्तसन्निकर्षस्य तमोव्यतिरिक्तविषयकप्रत्यक्षप्रतिबंधकत्वात्। अन्यथा गोळकसंलग्नतृणादिप्रत्यक्षाऽऽपत्तेः। अतोऽसन्निकृष्टग्राहकत्वमेव वक्तव्यम्। तत्रचोक्तो दोष इति॥

---

* कालिदासेन कुमारसंभवे काव्ये।

(७५-पृ २-प) अनुमित्यादि प्रामाण्यस्यापि प्रत्यक्षसिद्धत्वादिति=ननु अनुमितिमेवाऽनंगीकुर्वति चार्वाके कुतस्तत्प्रामाण्यस्य प्रत्यक्षसिद्धत्वमिति चेन्न। नहि पर्वते धूमदर्शनाऽधीना पर्वतो वह्निमानित्याकारिका काचन मनोवृत्तिरुपलभ्यते चार्वाकेण। शक्यतेचाऽपलपितुं तेन सर्वजनीना सा। किन्तु संभावनामात्रात्मिका स्यात् पर्वते वह्निरित्येवं रूपैवेयमुपेयते तेन। नच तथापि संभावनात्वमेव तत्राऽप्यक्षमितीष्यते तेनेति वाच्यम्। कथमेवं तेनेष्यतामित्यभिप्रायात्। तथाहि—भूयस्सहचारदर्शनाऽधीना हि इयं मनोवृत्तिः पक्षधर्मतादर्शनबलाधीना च। पक्षधर्मतादर्शनन्तु प्रमाणमेव तन्मतेपि। सहचारांशोपि निश्चित एवोपेत्यः परामर्शनविषयेषु भूयोदर्शनस्मारित इति॥ परन्तु तन्नियमांशएवतत्र संदिग्धो वाच्यो देशतः कालतश्च विप्रकृष्टेषुधूमेषुधूमध्वजसहचारोऽनुपलब्धइति। तत्रसंशयात्मिकैवेयमनुमितिरित्येष्टव्ये कथमियं संभावनात्मिकेत्यभ्युपगतं पण्डितमानिनाऽनेनेति प्रष्टव्यं भवति। स यदि ब्रूयात् "प्रबलाभ्यां सहचारपक्षधर्मत्वांशाभ्यां समबलेन नियमांशेन च दुर्बलीकृतो यह्न्यभावांशो नियमाऽभावांशमात्रोपनीतोऽनुमित्याम्" इति। तदा तैरेव प्रबलैस्त्रिभिः प्रतिबद्ध एवाऽभावांशोऽनुमित्यामिति कुतो नांऽगीक्रियते मूर्खेण॥ किञ्च॥ विप्रकृष्टेषु सहचारोपलंभाऽभावो विप्रकर्षप्रयुक्तोऽयोग्येष्वयोग्यताप्रयुक्त इति स्थिते कथं तादृशेन तेन नियमाऽभावकोट्यन्तरोपनयः? तेन वा कथमनुमित्यां वह्न्यभावकोट्युन्मेषः?। अपिच प्रत्यक्षाऽतिरिक्तेषु विज्ञानेषु कुतस्संशयता? कुतो वा संभावनात्वम्? किञ्च॥ उपलंभाऽभावस्याऽभावांशोपनायकत्वेऽनिष्टं ह्यापतति अनुपलब्धेरभावोपस्थापकत्वाऽभ्युपगमात्मकम्। अथ यदिब्रूयात् 'नाऽनुमित्यामुपेयते संभावनात्वं परन्तु तदनुजायमाने मानसे बोध' इति। तर्हि प्रत्यक्षइवाऽनुमितावपि सिद्ध्यत्येव प्रामाण्यं प्रत्यक्षेणेति॥

(७९-पृ १०-प) "तादृशदुःखाऽभिज्ञानामपीति"॥ निर्द्धारणे षष्ठी॥

(८०-पृ १६-प) "नाहं चलस्वभावइति सर्वजनाऽनुभवादपीति"= नन्वहं गच्छामि लंघयामि चेति वदति विद्वानपि व्यवहारपथमवतीर्ण इति स्थिते कथमेवमुच्यते? "एतस्मिन् सञ्चरत्यप्यहमचल इति प्रत्ययादस्म-

यत्वात्" इति मूलमपिवर्तते तस्य वा कथमुपपत्तिरिति चेत्? उच्यते। यदा तु कश्चित्कालं तूष्णीमेवाऽऽसीनः कश्चिन्निर्व्यापारः सः तदनन्तरमागतेन केन चित् किंकृतमेतावन्तं कालं भवता? इति पृष्टो वदति—"अहमचरएवाऽऽसमेतावन्तं कालं नकिमपि कृतं नकुत्रापि गतं च मया" इति चरत्यपि तावन्तं कालं प्राणे इत्यभिप्रायकं मूलम्। सुदृढप्रत्यायनार्थमेवं विवृतमित्यवगन्तव्यम् ॥

(८९-पृ १८-प) ननु असन्निहितोपि स्वरूपेण शीतद्रव्यसंयुक्तपादतलादिषु अणुरेष आत्मा स्वात्मनो धर्मभूतेन ज्ञानेन आपादतलमस्तकं इदं शरीरमभिव्याप्य वर्तमानो यदा यदा यत्रयत्रावयवविशेषे विषयसंबंधः तदा तदा तत्तदवच्छेदेनोपलभेतैव तं तं विषयं तदुपरागजनितं सुखदुःखादिकञ्च। यथा एकदेशस्थोपि दीपः स्वप्रभयाऽपवरकमभिव्याप्य वर्तमानो यत्रयत्र यो यो विषयः स्वप्रभासंवलितो भवति तत्रतत्र तंतं विषयं प्रकाशयति प्रकाशयति च समग्रमेवापवरकं यथा स्वीयं शरीरं जीव इति चेत्किमुत्तरमित्याशंकते—यत्तूक्तं सर्वदेहव्यापीति ॥

(१०४ पृ २५ प) "विभिन्नरूपभास्येति" ॥ अत्रेत्थं न्यायप्रयोगः—साक्षी नित्यैकरूप स्वप्रकाशस्वरूपः विभिन्नरूप भास्यगोचरैकरूपभासकपरंपराऽवधित्वात्, व्यतिरेकेण चक्षुरादिवत् इति। स्वप्रकाशत्वाऽभावान्नचक्षुरादिकं विशिष्टसाध्यविशिष्टं, भासकपरंपराऽन्तर्गतमिति न तदवधिभूतञ्च। सर्वाऽवभासकत्वमिह साध्यत्वेन विवक्षितम्। सर्वार्थावभासकस्य च स्वप्रकाशत्वमर्थसिद्धम्। नचेतराऽवभास्यं सर्वावभासकं भवितुमर्हति स्वावभासकाऽनवभासकत्वात्। नहिचक्षुरवभास्यं रूपं तदवभासकं भवति इति ॥

(१२१-पृ १४-प) "इन्द्रलोक" इति ॥ अचिन्तितोपनताऽसुरादिकर्तृक स्वाराज्याऽपहरणादिजनित महद्दुःखं प्रसिद्धमेवेन्द्रलोके श्रुतिस्मृतीतिहासपुराणादिसिद्धम्। प्रजापतेरपि भगवतो "यो ब्रह्मा ब्रह्मणः" इति मन्त्रसिद्धं शिरःकर्तनादिकं, वैकुण्ठकैलासयोरपि जय विजय नन्दिकेशादीनां शापनिमित्तं पुराणादिसिद्धं जननादीति विचारतो दुःखमेव सर्वत्रेति भावः ॥

(१४८-पृ १४-प) "द्वयोरेव द्वित्वोत्पत्त्यनन्तम्" इति ॥ तत्र तयोरेव प्रत्येकमेकत्वस्य सत्त्वादित्यर्थः ॥

(१४८-पृ १६-प) "द्वित्वान्तराऽऽश्रयेति" ॥ तद्घटकैकपृथक्त्वस्य द्वित्वसमानाधिकरणत्वादित्यर्थः ॥

(१६०-पृ ४ प) "जन्मादिकारणत्वं स्वरूपलक्षणमेव किमस्यात्" इति॥ वस्तुतः कारणत्वविशिष्टमेव ब्रह्मस्वरूपं किमस्यादित्याशयः ॥

(१८४-पृ १७ प) "अपितु ज्ञानभास्यत्वेन" इति ॥ किं नाम ज्ञानभास्यत्वतद्गोचरत्वयोर्वैषम्यं? येन भास्यत्वेन गोचरत्वं व्यवस्थाप्यत इति चेत्—उच्यते । यथा आलोकसंयोगाधीनः प्राकट्यात्मा घटस्य प्रकाशो भवति एवं प्राकट्याख्यं विषयाधिष्ठानं मानं भास्यत्वशब्दार्थः। तत्प्रयोजकस्तु ज्ञानज्ञेययोस्संबंधो गोचरतेत्युच्यत इति विवेचनीयम् इति ॥

(२१६-पृ २-प) निरवच्छिन्नवृत्तिकपरस्परात्यन्ताभावव्याप्येति" ॥ एकस्मिन्नेव देवदत्ते परस्परात्यन्ताभावव्याप्यबालत्वयुवत्ववृद्धत्वपावत्वहस्तत्वादिधर्मविशिष्टत्वसत्त्वान्निरवच्छिन्नवृत्तिकेति विशेषणम्॥

(३१४-पृ ३-प) शिवदिशयोहमस्मीति वादिनं यं च कंचनेति पाठः॥

(३१९-पृ २१-प) "वाक्यपुष्पांजलिः" इति ॥ वाक्यपुष्पांजलिरूपामेवं स्वाराज्यसिद्धिः॥

स्वयं परिमळोपेतः कल्पद्रुरविलार्थदः।
स्वाराज्यसिद्धिमाश्रित्य विबुधैरुपसेव्यताम् ॥

## परिमळाख्या टिप्पणिस्समाप्ता ॥

श्रीशिवशरणम् ॥



தேவநாகரலிபியில் மூலத்துடனும் தமிழுரையுட
னும் கூடின புஸ்தகங்கள்.

# பிருஹத் ஜாதகம்

## தமிழ் மொழிபெயர்ப்பு



இதையே ஹோரை என்றும், வராஹ ஹோரை என்றும் சொல்லுவர். இதற்குப் பல வியாக்யானங்களுக் கிணங்கவும், நமது சொந்தமான பல அனுபவங்களுக் கிணங்கவும் சுலபமான தமிழ் நடையில் பதவுரை, கருத்துரை, விசேஷவுரை இவைகளை எழுதி தேவநாகரலிபியில் மூலத்துடன் வெளியிட் டிருக்கிறோம். யாவராலும் மிக்க கடினம் எனக் கருதப்படும் ஆயுர்த்தாயம், தசாந்தர்த்தசை, நஷ்ட ஜாதகம் முதலிய பாகங்களுக்கு யாவர்க்கும் புரியக்கூடிய நிலையில் மிக்க விரிவாக உரை எழுதப்பட் டிருக்கின்றது. உதாஹரணமாய் பலஅனுபவ ஜாதகங்களும் கட்டங்களும் ஆங்காங்கு கொடுக்கப்பட் டிருக்கின்றன. கர்க்கர், பராசரர், சத்தியா சாரியர், யவனேசுவரர் முதலியோரின் கிரந்தங்களினின்றும்,ஸாராவளியினின்றும் அந்தந்த விடத்திற்குத் தேவையான வசனங்களை எடுத்து எழுதி தமிழில் உரையுமெழுதப்பட் டிருக்கிறது. இதன் முகவுரையில் சோதிட சாஸ்திரம் நம்பத்தக்கதல்ல என்றது முதலிய வாதகங்களுக்குத் தக்க சமாதானமும், வராஹமிஹிரரின் கால நிர்ணயமும் செய்யப்பட் டிருக்கிறது. ஒவ்வொரு மனிதனும் தனது எதிர்கால நிலையை யறிந்து கொள்வது அவசியமாதலால் சோதிடத்தை யப்யசிக்க விருப்பமுள்ளோரும், பல சாஸ்திரத்திற் பழகுகின்றவர்களும் இப் புஸ்தகத்தைப் படிப்பது மிகவுமவசியம். புஸ்தகம் டிம்மி எட்டு பக்க அளவில் சுமார் 750 பக்கங்களுள்ளது. கிலிட்டு எழுத்துடன் உயர்ந்த காலிகோ பைண்டு செய்தது. கிளேஸ். ரூ. 8 ரப். ரூ. 7.

# த்ரிவேதி ஸந்த்யாவந்தனம்.

இந்த இரண்டாவது பதிப்பில் ருக், யஜுஸ், ஸாமவேதிகளின் ஸந்தியாமந்திரங்கள் யாவும், தேவநாகரம், கிரந்தம், தமிழ் ஆகிய மூன்று எழுத்துக்களிலும் அச்சடிக்கப்பட்டிருப்பதுடன் தமிழில் பதவுரை எழுதும்பொழுதும் அந்த மூன்று எழுத்துக்களிலும் மந்திரபதங்கள் அச்சடிக்கப் பட்டிருக்கின்றன.

உதாஹரணமாய்—(மூலம்) आयातु वरदादेवी (ஆயாது வரதா தேவீ ஆயாது வரதாதேவீ) (பதவுரை) वरदा (வரதா வ்ரதா)= வேண்டிய வரங்களைத்தருகின்ற देवी (தேவீ தேவீ)=தேவியானவள் आयातु (ஆயாது ஆயாது)=என்னை யனுக்கிரஹிக்கவேண்டி வரட்டும். என்ற மாதிரியாய் எல்லா மந்திரங்களும் விளக்கப்பட்டிருக்கின்றன.

ஆகவே இந்தப்பதிப்பானது ஸந்தியா மந்திரார்த்தங்களை அறிந்து கொள்ள ஆவலுள்ள எவர்க்கும் மிக்க மிக்க உபயோகமான தென்பதில் யாதும் ஆக்ஷேபமில்லை. மேலும், பிராணாயாமத்தைப்பற்றியும், காயத்திரி மந்திரார்த்தத்தைப் பற்றியும், அர்க்கியம் விடுதலைப்பற்றியும், ஆஸனக்கிரமத்தைப் பற்றியும், காலையில் ஜபிக்கவேண்டிய (ப்ராத: ஸ்மரணீயம்) தைப் பற்றியும், மற்றும் பல விஷயங்களைப்பற்றியும், பலவாசங்கா ஸமாதானங்களுடன் இப்புஸ்தகத்திலெழுதியிருப்பதுபோல் வேறு எந்தப்புஸ்தகத்திலும் இதுகாறும் வெளிவந்ததில்லையென்று நாம் சொல்லுவது மிகையாகா. மேலும், இப்பதிப்பில் தனியாய் மூன்றுவேதிகளின் ஸந்தியாமந்திரங்கள்யாவையும் தேவநாகரம், கிரந்தம், தமிழ் மூன்று எழுத்திலும் அச்சிட்டிருப்பதுடன், மூன்று வேதிகளின் ஸமிதாதானம், ஔபாஸனம், பிரும்மயக்ஞம் யக்ஞோபவீத தாரண மந்திரம், பீஷ்மதர்ப்பணம் ஆகிய இவ்விஷயங்களும் தேவநாகரம், கிரந்தம் ஆகிய இரண்டெழுத்தில் மட்டும் அச்சிட்டு சேர்க்கப் பட்டிருக்கின்றன. இப்புஸ்தகம் டபிள்கிரௌன் 16 பக்க அளவில் 25 பாரங்களும், 400 பக்கங்களும் கொண்டது.

புல்காலிகோ பைண்டு செய்த கிளாஸ் காபி ரூ. 3—0—0.

ஸாதா பைண்டு செய்த ரப் காபி ரூ. 2—4—0

# உடுதசாபல நிர்ணயம்.

இத்தலையங்கத்தின் கீழ் பராசரஸம்ஹிதை, பலதீபிகை, ஸாராவளி, ஜாதகசந்திரிகை, ஸர்வார்த்தசிந்தாமணி, தமிழ்ஜாதகாலங்காரம் முதலிய புராதன சோதிட கிரந்தங்களில் உடுதசாவிஷயமாய்ச் சொல்லிய பலன்களையும், ஷை தசையைப் பரிசீலனம் செய்யவேண்டிய முறையையும் ஒருங்கே சேர்த்து வெளியிட்டிருக்கிறோம். இதில் தேவநாகரலிபியில் அந்தந்தகிரந்தங்களிலுள்ள மூலசுலோகங்களும், பல அனுபவஜாதகங்கள் உதாஹரணங்கள் இவைகளுடன் கூட எளியதமிழ்நடையில் எழுதப்பட்ட கருத்தையும் வெளியிடப்பட்டுள்ளன. மேலும், இப்புஸ்தகத்தில் ஒவ்வொரு தசையையு மெடுத்துக்கொண்டு, புக்தி, அந்தரம், ஸூக்ஷ்மம், பிராணன் வரையுள்ள காலப் பிரிவினைகளை கட்டம்போட்டு காண்பித்து ஒவ்வொன்றிலும் நடக்கும் பலன்களும் விவரமாய் கூறப்பட்டிருக்கின்றன. ஆகவே இப்புஸ்தகமொன்று கைவசமிருக்குமானால் உடுதசாபலனைப் பற்றியறிவதற்கு வேறு புஸ்தகம் தேவையாக விருக்காதென்பதுடன், மனம்போனவாறு தசா, புக்தி, அந்தர, ஸூக்ஷ்ம, பிராண பலன்களைச் சொல்லும் ஏனைய சோதிட வித்வான்களையணுகி அவர் மொழி கேட்பதன் மூலம் நேரும் சிரமமும் உங்களுக்கு ஒருபொழுதும் நேராதென்பதுவும் திண்ணம். மேலும், நாம்பலவருஷகாலமாய் சோதிடத்தில் பாடுபட்டு எந்த அனுபவ முறைகளைக்கண்டு கொண்டிருக்கிறோமோ அவற்றையும் ஆங்காங்கு குறிப்பிட்டுமிருக்கிறோம். சோதிடத்தில் பரிசிரமப் படுகின்றவர்களுக்கு எந்தப் புஸ்தகமொன்றிருந்தால் மற்றபுஸ்தகங்கள் தேவையாக விராதென்பதை நமது அனுபவத்தினின்றும் கண்டு இப்புஸ்தகத்தை வெளியிட்டிருப்பதால் யாவர்க்கும் இப்புஸ்தகம் நிரம்பவும் தேவையாகவிருக்கும் என்பதில் யாதும் ஐயமில்லை. ஸ்வல்பகாபிகளே அச்சிட்டிருப்பதால் முந்துவது நலம். டிம்மி 1க்கு 8 பக்க அளவில் சுமார் 480 பக்கங்களுள்ளது.

விலை கிளோஸ் ரூ. 4. ரப் ரூ. 3-8-0

கடலங்குடி நடேச சாஸ்திரிகள்,

72 பெரிய தெரு, திருவல்லிக்கேணி, சென்னை.

வீ. பீ. சார்ஜ் வேறு